University of Mysore

Oriental Research Institute Publications

SANSKRIT SERIES No. 89

GENERAL EDITOR:

H. R. RANGASWAMY IYENGAR, M.A.,

*Superintendent, Oriental Research Institute, Mysore*

कवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र-श्रीमद्वेदान्ताचार्यविरचितः

# यादवाभ्युदयः

आलङ्कारिकमूर्धन्य-सर्वतन्त्रपारदृश्व-श्रीमदप्पयदीक्षितेन्द्र-
विरचितया व्याख्यया समलङ्कृतः

(सर्गाः १९—२४)

# THE YĀDAVĀBHYUDAYA

OF

SRI VEDĀNTĀCĀRYA

WITH

THE COMMENTARY OF SRI APPAYYADĪKṢITA

(CANTOS 19-24)

EDITED BY

VIDVAN T. T. SRINIVASAGOPALACHAR,

*Pandit, Oriental Research Institute, Mysore*

MYSORE:

PRINTED BY THE SENIOR ASST. DIRECTOR AT THE GOVT. BRANCH PRESS

1950

॥ श्रीः ॥

॥ श्रीमते हयवदनपरब्रह्मणे नमः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

## प्रस्तावना.

सर्गस्थित्यवसानकेलिरसिको यश्चेतनानुद्धरन्
यस्याज्ञावशतां प्रयान्ति विबुधा वेधोमुखास्संततम् ।
विज्ञानं विविधं यदीयकरुणाधीनं समुज्जृम्भते
देवं तं हयकन्धरं कमलयाऽऽश्लिष्टं समीडीमहि ॥

अयि भोः प्राचीनोत्तमकाव्यरसास्वादायाहमहमिकामाकलयन्तः सहृदयास्सुधीमणयः! सुविदितमेवैतद्भवतां, यदितः पूर्वमस्मादेव संशोधनालयात् श्रीमत्कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रेत्यादिबिरुदभूषितैः श्रीमद्वेदान्ताचार्यैः प्रणीतस्य श्रीमदप्पयदीक्षितेन्द्रीयव्याख्यापरिभूषितस्य यादवाभ्युदयाभिधानस्योत्तममहाकाव्यरत्नस्य त्रयोदशसर्गप्रभृत्यष्टादशसर्गान्तो भागस्संशोध्य संमुद्रय प्राकाश्यं नीत इति । तदिदानीं तदुपरितन एकोनविंशसर्गप्रभृतिचतुर्विंशसर्गान्तश्चरमोऽपि भागः संशोध्य संमुद्रय प्रकाश्यते ॥

एतत्काव्यरत्नप्रणेतॄणां श्रीमद्वेदान्ताचार्याणां एतद्व्याख्यातॄणां श्रीमदप्पयदीक्षितेन्द्राणां चेतिवृत्तादिकं पूर्वस्मिन् संपुट एवोपवर्णितमिति न पुनरप्यत्र तत्प्रकाशनाय प्रयतामहे ॥

## एतत्संपुटपरिदृश्यमानकाव्यार्थसङ्ग्रहः.

एतत्संपुटपरिदृश्यमानेषु षट्सु सर्गेष्वादिमे एकोनविंशे सर्गे—अङ्गीकृतवन्दिमागधरूपैश्चतुर्भिर्वेदैः समाश्रितयोगनिद्रस्य भगवतः श्रीकृष्णस्य प्रातः प्रबोधनाय सुप्रभातसमयोपवर्णनम् ।

विंशे सर्गे—बन्दीकृतानिरुद्धस्य प्रमथगणसहितस्य त्रिपुरार्यादेस्साहाय्येन समन्वितस्यापि सहस्रबाहोर्बाणासुरस्य श्रीकृष्णेन पराभवनम् ।

एकविंशे सर्गे—कृतापराधानां पौण्ड्रकवासुदेवकाशिराजतत्तनुजतत्पुरोहितकरवीराधिपसृगालद्विविदहंसडिबिकादीनां वधनिरूपणम् ।

द्वाविंशे सर्गे—श्रीकृष्णादिष्टेन यादवबलसमन्वितेन समधिगतराजनीतिपथेन च सात्यकिना संप्राप्तस्य दिग्विजयस्योपवर्णनम् ।

त्रयोविंशे सर्गे—भारतयुद्धनिर्वहणेन भगवता श्रीकृष्णेन साधितस्य भूभारापनयनस्योपवर्णनम् ।

अन्तिमे चतुर्विंशे सर्गे—भगवता श्रीकृष्णेन निजमहिषीभिस्सह शृङ्गारसांराज्यानुभवस्योपवर्णनमित्येतत्सर्वमेतत्परिशीलयितॄणां सहृदयानां विपश्चितां चित्तमनुरञ्जयतीत्यतिरोहितमेतत् ॥

## दिङ्मात्रमत्र मूलकृतामाचार्याणामुल्लेखचातुरीसूचनम्.

तदिदमधुना दिङ्मात्रमाचार्याणामुल्लेखचातुरीमाविष्कर्तुकाम आचार्यपादैर्भगवत्प्रमोदनैदंपर्येण परिकलितामवाङ्मनसगोचरलोकोत्तरोल्लेखगुम्फितपद्यमयप्रसूनोपवनवाटीं प्रविश्य कानिचित्पद्यमयानि प्रसूनान्यपचित्य समर्पणेन भगवन्तं प्रमोदयिष्यन् सहृदयानामग्रतो निर्दिशामि । तानि च यथा—

अर्च्यस्य संप्रति सतामवगाढतीर्था
मन्ये प्रगृह्य नलिनी मकरन्दमर्घ्यम् ।
व्यक्तद्विरेफनिनदा विहिताभिमुख्या
पत्युस्त्विषां प्रणयतीव करप्रसारम् ॥

(19 सर्गे 68 श्लो.)

अत्र सवितुरुदयकाले सान्ध्यं कर्मानुतिष्ठन्तो ह्यवगाढतीर्था उन्मुखास्त्विषां पतयेऽर्चनीयाय प्रदातुमर्घ्यं सलिलपूर्णान् करान् प्रसारयन्ति। नलिनीषु च मकरन्दपूर्णानि कमलप्रसूनानि विकसन्ति। तत्र च निनदन्ति भृङ्गा इति सर्वजनसाक्षिकमेतत् । तदिदमनुचिन्तयद्भिराचार्यपादैः सलिलमध्यगततयाऽवगाढतीर्था नलिनी स्फुटभृङ्गनादेन कमपि मन्त्रमुच्चारयन्ती ऊर्ध्वाभिमुखतया कृतसूर्याभिमुख्या च सती मकरन्दपूर्णपद्मविकासात्त्विषां पतये अर्घ्यदानाय

करप्रसारं कलयतीवेत्युत्प्रेक्षितम् । तदिदं समयोचितसदाचरण-शिक्षणपरमुत्प्रेक्षणं कस्य वा सहृदयस्य चेतसे न रोचेत ।

दृष्ट्वा निमीलितवतीं नियतिप्रभावात्
आत्मप्रियां कुमुदिनीमवधूतधामा ।
च्योतत्तुषारनयनोदकबिन्दुरिन्दुः
प्रस्थानमिच्छति महत्प्रतिपन्नदैन्यः ॥

(19 सर्गे 26 श्लो.)

अत्र कुमुदिन्या निमीलनं, कुमुदिनीपतेश्चन्द्रमसस्तेजोग्लानिः, तुषारवर्षः, इन्दोरस्तमयश्चेत्ययं प्राभातिकस्वभावः । तमेनमवलम्ब्य-याद्भिराचार्यपादैः दैववशादात्मप्रियायाः कुमुदिन्या निमीलनं निध्यायता हततेजसा निर्वेदात्त्यक्तसदनेन तुषारमिषान्नयनसलिलं परिमुञ्चता कुमुदिनीपतिनेन्दुना महाप्रस्थानमस्तमयात्मकमभीप्सि-तमित्युल्लिखितम् । तामेनामुल्लेखचातुरीमास्वादयन् को नाम सहृदयः प्रमोदस्य परां कोटीं नाटीकेत ।

प्राचीनशैलविषये प्रचुरांशुरेखां
संध्यादशामरुणरागघृतावसिक्ताम् ।
कालो निधाय सृजतीव शनैस्तदन्ते
तिग्मद्युतिं त्रिभुवनैकमहाप्रदीपम् ॥

(१९ सर्गे ३२ श्लो.)

अत्र प्रातस्समुद्यतो दिनमणेः अरुणरागाख्यघृतावसिक्तसंध्या-ख्यवर्तिसमन्वितप्राचीनशैलाख्यपात्रविलसत्कालाख्यपुरुषारोपित-प्रदीपत्वेनोत्प्रेक्षणं सहृदयानां हृदयं नितरामावर्जयति ॥

पर्याप्तरश्मिनिकरेण सुवृत्तभूम्ना
सूर्येन्दुबिम्बयुगलेन समस्थितेन ।
आभाति कालवणिजा परिकल्प्यमाना
नक्तंदिवक्षणतुलेव नभस्तलश्रीः ॥

(१९ सर्गे ३३ श्लो.)

अत्र पौर्णमासीप्रभातसमयपरिदृश्यमानायाः प्रत्यासन्नास्तमयप्रत्यग्रोदयशालियामिनीनाथदिनमणिसमुदञ्चितगगनतल- शोभायाः कालाख्यवणिक्परिकल्प्यमानार्कन्दुविक्षणमापकतोलनयन्त्रशोभासाम्योपवर्णनं सहृदयानां मानसमानन्दयति ॥

गङ्गामुपेत्य मधुकुञ्जरगण्डपालिं
मत्तान् समीक्ष्य मधुपान् परिघूर्णमानान् ।
शुभ्राणि हन्त कुमुदानि तमस्यपेते
भूयस्तदन्वयभयादिव संकुचन्ति ॥

(१९ सर्गे ५७ श्लो.)

अत्र शुभ्राणां कुमुदानां प्राभातिकस्संकोचो मधुकुञ्जरगण्डपाल्याख्यमदिरागृहप्रविष्टपरिघूर्णमानमत्तमधुपसंसर्गभयादिव स्यादित्युल्लेखः सुतरां सहृदयानां मानसमाकर्षति ।

ज्योत्स्नासखीं कुमुदिनीं भ्रमरः प्रहृष्यन्
निर्विश्य नित्यपरिशुद्धरुचिं निशायाम् ।
रागादुपैति नलिनीं रजसाऽभिजुष्टां
किं नाम नाचरति मन्मथहस्तवर्ती ॥

(१९ सर्गे ६९ श्लो.)

अत्र समुचिते समये नित्यपरिशुद्धां कुमुदिनीं निर्विष्टवतोऽपि भ्रमरस्य रागपरवशतया रजोभिजुष्टाया नलिन्या दिवैवोपगमनवर्णनेन मदनपरतन्त्रस्य कृत्याकृत्यविमूढतासमर्थनं सुतरां शोभते ।

मित्त्रस्य लुप्ततमसोऽप्यतिरागभाजः
संप्रेक्षणं मम न युक्तमितीव मत्वा ।
मीलत्यसौ कुमुदिनी सह तारकाभिः
प्राप्तं व्रतं तदिह राजपरिग्रहाणाम् ॥

(१९ सर्गे ७४ श्लो.)

अत्र सूर्योदयकाले क्षपिततमसो मित्त्रस्य सूर्यस्य अतिरागभाक्त्वं द्विजराजचन्द्रपरिग्रहभूतकुमुदिनीतारकाणां मीलनं च

स्वभावः । तमेनमवलम्ब्य आचार्यपादैः क्षपिततमसोऽपि मित्रस्यातिरागभाक्त्वे तत्संप्रेक्षणं विशेषतो राजदाराणामस्माकमनुचितमिति मत्वेव कुमुदिनीतारकाभिर्निमीलितमित्युत्प्रेक्षितम् । तदिदमुत्प्रेक्षणं सुतरामावर्जयति सहृदयहृदयानीत्यत्र नास्माभिर्विशेषतो वक्तव्यं किञ्चिदवशिष्यते । एवमेकोनविंशेऽस्मिन् सर्गे प्रतिश्लोकं कविप्रतिभावैचित्री मास्वादयन्तु सहृदया इति दिङ्मात्रमुपदर्शितम् ।

एवं द्वाविंशे सर्गे श्रीकृष्णेन यादवेभ्यो राजनीत्युपदेशप्रस्तावे राज्ञां नीतिर्नीतिशास्त्रमनुरुध्य प्रपञ्चिता दृश्यते । तत्र चोचितविषये क्षान्तेरुपवर्णनं प्रस्तुत्य—

न शापो नाभिचरणं न वह्निर्न विषं तथा ।
नास्त्राणि न च शस्त्राणि यथा तीक्ष्णतमा क्षमा ॥

(२२ सर्गे ३२ श्लो.)

इति क्षमायाः शीघ्रतरकार्यसाधकत्वमनुवर्णितम् । तदेतदिदानींतनैः श्रीमद्भिः गान्धिमहाशयप्रभृतिभिरप्युद्घोषितं सर्वेषामनुभवसाक्षिकं चेति सुस्पष्टम् ॥

तथा तत्रैव सात्यकिविजययात्रानुवर्णनप्रकरणे—

नियतं हेतयस्तेषां निपीते वह्निवारिणी ।
निदधुः शत्रुनारीणां चित्तेषु नयनेषु च ॥

(२२ सर्गे ८७ श्लो.)

अत्र सात्यकिसैनिकायुधैः स्वनिर्माणसमयपरिपीतस्य वह्नेस्सलिलस्य च यथाक्रमं शत्रुनारीणां चित्तेषु नयनेषु च निधानादेव तासां चित्तेषु संतापो नयनेषु वाष्पोद्गमश्चाभूदित्यनुवर्ण्यमानं चारुतापदमवगाहते ।

गुञ्जाहारभृतः श्यामा बर्होल्लासितकुन्तलाः ।
प्रवालवसनाः प्रेक्ष्य जहसुश्शबराङ्गनाः ॥

(२२ सर्गे १२४ श्लो.)

अत्र गुञ्जानां हारीकरणेन बर्हाणामुत्तंसीकरणेन प्रवालानां वसनीकरणेन च नागरकहासनिदानं शबराङ्गनानां नैसर्गिकं प्रसाधनमनुवर्ण्यमानं स्वभावोक्तिवर्णननैपुणीं प्रकाशयति ॥

सैन्यदन्तिमदोपेतैश्शत्रुस्त्रीबाष्पकज्जलैः ।
गङ्गां रविसुतां चक्रे यशसा तां च तन्मयीम् ॥

(२२ सर्गे १४१ श्लो.)

अत्र दन्तिमदोदकोपेतशत्रुस्त्रीबाष्पकज्जलैर्गङ्गाया यमुनात्वस्य प्रसृमरयाद्वयशोधावल्येन यमुनाया गङ्गात्वस्य च सम्पादनक्रमोऽनुवर्ण्यमानोऽतीव चमत्करोति ।

चोलकेरलपाण्ड्यानां पश्यन्ननुगतिं प्रभुः ।
चकार पुनराधानं धर्म्यं हुतभुजामिव ॥ (२२ सर्गे २०९ श्लो.)

अत्र विनैव युद्धमनुगतानां चोलकेरलपाण्ड्यानां त्रयाणां राज्ञां तत्तद्राज्येषु सात्यकिनाऽनुष्ठिते पुनराधाने कर्मणि दाक्षिणात्याद्यग्नित्रयानुगतिनिमित्तकतयाऽनुष्ठीयमानस्य पुनराधानरूपश्रौतकर्मण औपम्यवर्णनमतीव हृदयङ्गमं प्रतिभाति ।

एवं चतुर्विंशे सर्गे भगवता श्रीकृष्णेन निजवल्लभानां संमोदापादनप्रकारोपवर्णनं च सुगम्भीरया सुललितयाऽग्राम्यया चोल्लेखशैल्या क्रियत इति सर्वमेतत्सहृदया एवामूलाग्रमास्वादयन्त्विति दिङ्मात्रमुपदर्श्य विस्तरभीत्या विरम्यते ॥

## अनुपलभ्यमानव्याख्यानां श्लोकानां विवरणम् ।

अत्र च केचिच्छ्लोका मातृकासु श्रीमदप्पयदीक्षितेन्द्रीयव्याख्यानुपलम्भात्काव्यान्तर्गता वा नवेति संदिह्यमाना अपि व्याख्यां विनैव सव्याख्यकोशेषु मूलमात्रयुतकोशेषु च समुपलभ्यन्त इति ते संगृह्येदानीमस्माभिर्व्याख्यायन्ते । यथा—

"निद्रावशेषविगमेऽपि मदानुषङ्गात्
मन्दं दृशो मुकुलयन्ति मदावलेन्द्राः ।

एषामनूरुकिरणैररुणीकृतानां
सप्तस्रुतां भवति सान्ध्यपयोदलक्ष्मीः ॥
(१९ सर्गे ६१ श्लो.)

प्रभातकाले स्वापदशामपहाय जाग्रद्दशां भजमाना गजेन्द्रा अनुवर्ण्यन्ते—निद्रेति । मदावलेन्द्राः गजेन्द्राः । निद्रावशेषविगमेऽपि निद्रायाः स्वापस्य योऽवशेषस्तस्य विगमेऽपगमेऽपि । मदानुषङ्गात् गजस्वभावसिद्धस्य मदस्य सम्बन्धाद्धेतोः । दृशः नयनानि । मन्दं ईषत् । मुकुलयन्ति कुड्मलयन्ति, निमीलयन्तीति यावत् । अनूरुकिरणैः अनूरोः दिनमणिसारथेररुणस्य किरणैः अंशुभिः । अरुणीकृतानां शोणीकृतानाम् । सप्तस्रुतां सप्तभ्यः करादिभ्यो मदस्रुतिस्थानेभ्यो मदसलिलं स्रावयितॄणाम् । अन्तर्भावितण्यर्थोऽत्र स्रवतिः ।

करात्कटाभ्यां मेढ्राच्च नेत्राभ्यां च मदस्रुतिः ।

इति गजलक्षणशास्त्रे पालकाप्यः । करे रन्ध्रद्वितयसद्भावात्सप्तस्थानान्यत्र बोध्यानि । एषां गजेन्द्राणाम् । सान्ध्यपयोदलक्ष्मीः सन्ध्याकालिकजलदकान्तिः । भवति संपद्यत इत्यर्थः । मदावलेत्यत्र मदशब्दात् 'अन्येभ्योऽपि दृश्यते' (का. वा. ३२१०) इति मत्वर्थीये वलच्प्रत्यये सति 'वले' (पा. सू. ६-३-१८) इति वलचः पूर्वस्याकारस्य दीर्घः ॥

कृष्णकृष्ण गदतो गिरमर्थ्यां
संशृणुष्व महतीमिह मत्तः ।
अप्रमत्तमतिभिस्सह मित्त्रैः
आप्तकार्यमवधीर्य न सिद्धिः ॥ (२१ सर्गे ८ श्लो.)

भगवन्तं श्रीकृष्णं वेषमात्रेणानुकुर्वता पौण्ड्रकवासुदेवाख्येन केन चिद्राज्ञा श्रीकृष्णसंनिधिं प्रति प्रेषितस्य दूतस्योक्तिरियं—कृष्णकृष्णेति । कृष्ण कृष्ण 'वाक्यादेरामन्त्रितस्य' (पा. सू. ८-१-८) इत्यादिना कृष्णशब्दस्य द्विर्भावः । अप्रमत्तमतिभिः अवहितबुद्धिभिः । मित्त्रैः स्निग्धैस्सह । अर्थ्यां अर्थात्प्रयोजनादनपेतां,

सप्रयोजनामित्यर्थः। 'धर्मपथ्यर्थन्यायादनपेते' (पा. सू. ४-४-९२) इत्यनेन अर्थशब्दाद्यत्प्रत्ययः। इह अस्मिन् देशे काले विषये वा। महतीं पूजनीयाम्। गिरं उक्तिम्। गदतः व्यक्तं वदतः। मत्तः पौण्ड्रकवासुदेवदूतरूपान्मत्सकाशात्। पञ्चम्यास्तसिल्। संशृणुष्व सम्यगाकर्णय। आप्तवाक्यं आप्तानामस्मदादीनां हितवचनम्। अवधीर्य तिरस्कृत्य। स्थितस्येति शेषः। अतस्समानकर्तृकत्वनिबन्धनक्त्वाप्रत्ययोपपत्तिः। सिद्धिर्न अभीप्सितावाप्तिर्न भवेत्। अतस्समीहितसिद्ध्यै आप्तवाक्यं शृण्वता भवता वर्तितव्यमिति भावः। अत्र श्लोके कर्मणो गिरमित्यस्य गदत इत्यत्रैवान्वयात् संशृणुष्वेत्यत्रान्वयाविवक्षणाच्च शृणोतेरविवक्षितकर्मकतयाऽकर्मकत्वात् 'अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्' (का. वा. ९२६) इति वार्तिकात्तत आत्मनेपदमुपपद्यते। एवमेव 'रक्षांसीति पुराऽपि संशृणुमहे' 'हितान्न यः संशृणुते स किंप्रभुः' इत्यादयः प्राक्तना अपि प्रयोगा उपलभ्यन्ते॥

किं तदाप्तवाक्यमिति चेदाह त्रिभिः श्लोकैः—

अस्ति कश्चिदवधारितभूमा पूरुषः श्रुतिगणेषु पुराणः।
स क्षितिं परिगृहीतविहारः पौण्ड्रकत्वमधिगम्य भुनक्ति॥

(२१ सर्गे ९ श्लो.)

अस्तीति॥ श्रुतिगणेषु निगमवृन्देषु। अवधारितभूमा अवधारितो विनिश्चितो भूमा महिमा जगत्सृष्टिनियमनादिरूपं माहात्म्यं यस्य स तथोक्तः। पुराणः पुरातनः। कश्चित् दुर्विज्ञेयस्वरूपः। पूरुषः निखिलजगदन्तर्यामी। अस्ति। अस्तीति भूधरास्सन्तीतिवत् कालत्रयसत्ताभिप्रायेणायं प्रयोगः। सः तादृङ्निगमगणश्रूयमाणवैभवशाली परमपुरुषः। पौण्ड्रकत्वमधिगम्य इदानीं पौण्ड्रकपदव्यवहार्यतां प्राप्य। परिगृहीतविहारः आदृतमानुषलीलारूपविहारः। क्षितिं भूमिम्। भुनक्ति पालयतीत्यर्थः॥

तस्य नित्यनिरुपाधिकभूम्नो विश्वभोक्तुरधिगम्य तितिक्षाम्।
भुज्यते नियतकर्मविपाकैर्युष्मदादिभिरिला बहुभागा॥

(२१ सर्गे १० श्लो.)

तस्येति ॥ नित्यः अविनश्वरः निरुपाधिकः स्वाभाविको भूमा महिमा यस्य तस्य। विश्वभोक्तुः निखिलप्रपञ्चस्यानुभवितुः। तस्य पौण्ड्रकस्य तितिक्षां क्षमाम्। अधिगम्य प्राप्य। बहवोऽनेके भागा यस्यां सा। इला भूमिः। नियतकर्मविपाकैः नियतोऽवश्यंभावी कर्मणां विपाकः फलं येषां तैः। युष्मदादिभिः भवत्प्रभृतिभिः भुज्यते अनुभूयते। कर्मवद्भिरनुष्ठितानां कर्मणां फलमवश्यंभावीत्येव पौण्ड्रको भवत्प्रभृतीनां तत्तत्क्षितिभागेश्वरत्वं क्षमते, न तु भवदादीनां निरुपाधिकेश्वरत्वबुद्ध्येति भावः ॥

अर्थतत्त्वमिदमश्रुतपूर्वं शृण्वताऽत्र भवता भवितव्यम्।
निश्चलीकृतहिताहितसीम्ना जिष्णुना यदुकुलस्य विभूत्यै ॥
(२१ सर्गे ११ श्लो)

अर्थेति ॥ अत्र मदुक्ते विषये। निश्चलीकृता अचञ्चलीकृता हिताहितयोरिष्टानिष्टयोः सीमा मर्यादा येन तेन। जिष्णुना जयशीलेन। भवता त्वया। यदुकुलस्य यदुवंशस्य। विभूत्यै समृद्ध्यै। इदं मदुक्तम्। अश्रुतपूर्वं अनाकर्णितचरं। अर्थतत्त्वं पौण्ड्रकाभिन्नस्य कर्मफलायत्तेश्वरभावरूपं विषययाथार्थ्यं। शृण्वता आकर्णयता सता। भवितव्यं वर्तितव्यम्, न तु स्वस्य निरुपाधिकेश्वरभावानुसंधानवतेति भावः ॥

१८० तमपुटे २२ शे सर्गे १३६ तमः श्लोकः—
'यादवास्तत्र शत्रूणां'

इत्यादिरशुद्धपाठकवलितत्वाच्छुद्धपाठोपलम्भे सति व्याख्येयः।
अनुपहितवधूजनस्य रक्षां नियमयतो निजलीलया जगन्ति।
निगमपथनिदर्शनीयमासीत्प्रणतजनेषु परस्य पारतन्त्र्यम् ॥
(२४ सर्गे ७२ श्लो.)

अनुपहितेति ॥ श्लोकेऽस्मिन् 'अनुपहितवधूजने स्वरक्षां' इति प्रथमपादे शुद्धपाठः स्यात्। निजलीलया आत्मनोऽनायासव्यापारेण। जगन्ति लोकान्। नियमयतः परिवेष्टमानस्य स्वायत्तीकुर्वत इत्यर्थः। अनुपहिते असमर्थे वधूजने स्वमाहिषीजने। स्वरक्षां आत्मनो रक्षणम्। निजलीलया नियमयत इति काकाक्षि-

न्यायादत्रापि संबध्यते। निजलीलया स्वेच्छया। नियमयतः निजमहिष्यधीनीकुर्वतः। परस्य भगवतः श्रीकृष्णस्य। प्रणतजनेषु भक्तजनेषु। पारतन्त्र्यं पारवश्यम्। निगमपथनिदर्शनीयं श्रुत्युक्तस्योदाहरणमासीत्। भगवतो भक्तजनवात्सल्याद्यद्भक्तजनपारतन्त्र्यं श्रुतिषूद्घुष्यमाणं तदिदानीं द्वारकायामात्मेच्छया स्वस्य स्वमहिषीपारतन्त्र्यपरिकल्पनेन प्रकाशितमासीदिति भावः।

शरणागतसर्वपापमोक्षे कृतसङ्कल्पमिहानुभूय कृष्णम्॥
परतोऽपि तथाविधानुभूतिः स्मरलब्धा प्रतिलम्भिता प्रियाभिः॥
(२४ सर्गे ७७ श्लो.)

शरणागतेति॥ अत्र श्लोके स्मरलब्धा प्रतिलम्भिता प्रियाभिः' इति चतुर्थपादपाठः स्यात्। शरणागतसर्वपापमोक्षे प्रपन्नजनसंबन्धिनिखिलपापापनोदने। कृतसङ्कल्पं परिकलितप्रतिज्ञं 'अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि' इति हि भगवता गीतमिति भावः। कृष्णम्। अनुभूय निर्विश्य। स्थिताभिरिति शेषः। अत एव क्त्वाप्रत्यय उपपन्नः। प्रियाभिः प्रेयसीभिः। परतः परमपदे। सप्तम्यन्तात्तसिल् सार्वविभक्तिकस्तसिर्वा। तथाविधा उपनिषत्सूद्घुष्यमाणप्रकारा अनुभूतिः ब्रह्मानन्दानुभूतिरपि। स्मरस्य प्रद्युम्नाख्यस्य मन्मथस्य लब्धा श्रीकृष्णेन। जनिकर्तृत्रिभुवनविधात्रादिवत् समासः। इह द्वारकानगरान्तःपुर एव। प्रतिलम्भिता प्रापिता। वेदान्तेष्वनवधिकातिशयतया जोघुष्यमाणो यो नित्यमुक्तानां नित्यविभूतौ ब्रह्मानन्दानुभवस्सोऽप्यद्य द्वारकानगरान्तःपुरे श्रीकृष्णाख्यं परं ब्रह्म निर्विशन्तीभिस्तन्महिषीभिस्तदनुग्रहात्संपादित इति भावः॥

अजितस्य विशालतुङ्गभूम्ना
भुजमध्येन पयोधरैश्च तासाम्।
इतरेतरसंवृतत्वमासीत्
परिरम्भे परितो मिथस्समत्वम्॥ (२४ सर्गे ८० श्लो.)

अजितस्येति॥ अत्र श्लोकान्ते 'मिथस्समत्वात्' इति पाठः स्यात्। न जिता प्राकृतैरुत्पत्तिमरणादिभिर्या अपराजिताख्या वैकुण्ठनगरी अजिता, साऽस्येत्यर्शआद्यजन्तोऽत्राजितशब्दः। ततश्च

वैकुण्ठनगरीनायकावतारभूतस्य कृष्णस्येत्यर्थः । अत एव भगवद्गुणदर्पणे सहस्रनामान्तर्भूतकृष्णनामप्राक्तनाजितनामनिरुक्तौ "प्राकृतैर्न जिता या सा यस्यास्तीत्यजिता पुरी । अजितस्तेन विज्ञेयः" इत्युक्तम् । केनाप्यपराजितस्य सर्वेषामेव जेतुः कृष्णस्येति वा । भुजमध्येन वक्षःस्थलेन । तासां तन्महिषीणां । पयोधरैः वक्षोजैश्च । विशालतुङ्गभूम्ना वैशाल्यौन्नत्यातिशयेन । मिथस्समत्वात् अन्योन्यसाम्यात् , परिरम्भे आलिङ्गने इतरेतरसंवृतत्वं परस्पराच्छादितत्वम् । आसीत् । भगवद्वक्षस्तटस्य तन्महिषीपयोधरतटानां च वैशाल्ये तुङ्गतायां चान्योन्यसाम्यात् गुढालिङ्गनदशायां तदुभयमपि परस्परं यावद्देशसंश्लिष्टमासीदित्यर्थः" इति ॥

## उपसंहारः

श्रीमदप्पयदीक्षितेन्द्रीयव्याख्यासमलङ्कृतस्यास्य महाकाव्यरत्नस्य एकोनविंशसर्गप्रभृतिचतुर्विंशसर्गान्तोऽयमन्तिमोऽपि भागः कुत्राप्यमुद्रितचर इति परिचिन्त्य अमुद्रितप्राचीनग्रन्थप्रकटनैदम्पर्येण स्थापितायामस्यां विश्वविद्यालयानुबन्धिन्यां महीशूरराजकीयप्राक्तनतत्त्वसंशोधनशालायां समुपलब्धमातृकासाहाय्येन यथामति संशोध्य अनुपलब्धव्याख्यानकेषु श्लोकेषु व्याख्याभागान् निर्माय संयोज्य अकारादिवर्णक्रमेण मूलान्तर्गतश्लोकपादानां व्याख्योपात्तप्रमाणानां व्याख्योपात्तग्रन्थतत्कर्तृनामधेयानां व्याख्यासाधितमूलगतप्रयोगविशेषाणां च सूचनीभिस्साकं परिष्कृत्य तत्र तत्र टिप्पण्या पाठान्तरनिर्देशनेन च सार्धं सम्मुद्र्य प्राकाशि ॥

एतद्ग्रन्थसंशोधनाय श्रीमहीशूरनगरस्थश्रीपरकालमठाधिकारिभिरादर्शप्रदानेनोपकृतमिति तेभ्यस्सुबहून् धन्यवादान् समर्पयामः ॥

एतत्संपुटपरिदृश्यमानभागस्य संशोधनायामवलम्बिताः कोशाः—

(1) एतत्कोशागारीयः No. 1195 ग्रन्थलिपिमयः 19-21 सर्गान्तस्तालकोशोऽशुद्धप्रायः (च) संज्ञितः.

(2) एतत्कोशागारीयः No. A 174 आन्ध्रलिपिमयः 13-24 सर्गान्तः काकलकोशोऽशुद्धप्रायः (घ) संज्ञितः.

(3) एतत्कोशागारीयः No. 399 ग्रन्थलिपिमयः 15-19 सर्गे 35 श्लोकान्तो जीर्णस्तालकोशो नातिशुद्धः (ङ) संज्ञितः.

(4) महीशूरनगरस्थ श्रीपरकालमठीयो ग्रन्थलिपिमयस्तालकोशो नात्यशुद्धः 13-21 सर्गान्तः (ट) संज्ञितः.

(5) आस्माकीनो ग्रन्थलिपिमयस्तालकोशो नातिशुद्धः 22-24 सर्गान्तः (ठ) संज्ञितः.

(6) श्रीमदहीन्द्रनगरे ग्रन्थलिप्यां मुद्रितः 13-24 सर्गान्तो मूलमात्रयुतः श्रीपरकालमठीयः (ग्र· मु) संज्ञितः.

(7) श्रीकाञ्च्यां श्रीमन्निगमान्तमहादेशिकग्रन्थमालायां देवनागराक्षरैर्मुद्रितः समग्रमूलमात्रसहितः (दे. मु) संज्ञितः.

इत्येतत्कोशसप्तकं प्रायस्समापन्नमातृकापुत्रिकाभावतया पर्यवसन्नैकादर्शकमप्यवलम्ब्य यथामति संशोध्य मुद्रापितेऽस्मिन् कोशे मानुषशेमुषीसुलभेनानवधानेन सीसकाक्षरयोजकाद्यनवधानेन च समुपनतान् दोषान् दूरीकुर्वन्तो गुणैकग्राहिणस्सहृदया विपश्चितस्संमोदन्तामिति सर्वमनाकुलम् ॥

मायामोहनिशीथिनी गलति यत्संकल्पसूर्योदयात्
यत्सर्वार्थसुसिद्धितो बुधमणेः प्रज्ञा समुज्जृम्भते ।
यत्काव्योत्तमयादवाभ्युदयतो नित्यं सुधीर्मोदते
तस्य श्रीनिगमान्तदेशिकमणेर्जीयात्परा शेमुषी ॥

देशोऽयं क्षोभदूरो भवतु जलमुचस्सन्तु काले सुवर्षाः
क्षोणी सस्यैस्समृद्धा भवतु सुरुचिरा नीरुजस्सन्तु लोकाः ।
विद्या प्रत्ना गरिष्ठा जयतु बुधगणैस्सेव्यमाना नितान्तं
जीयादाचन्द्रतारं जयपदमहितश्चामभूमीपतीन्द्रः ॥

इति सप्रश्रयं प्रार्थयते सहृदयविद्वद्वशंवदः

तिरु. तिरु. श्रीनिवासगोपालाचार्यः
महीशूरपुरीस्थराजकीयविश्वविद्यालयानुबन्धि-
प्राक्तनतत्वसंशोधनशालाप्रधानपण्डितः.

॥ श्रीः ॥

# यादवाभ्युदयकाव्येऽस्मिन् एकोनविंशादिचतुर्विंशसर्गान्तभागगत-विषयाणां सूचनी.

## भगवतः श्रीकृष्णस्य सुप्रभातवर्णनपरे एकोनविंशे सर्गे (83 श्लो.)

1. वन्दिरूपधराभिः श्रुतिभिः श्रीकृष्णस्य प्रातःप्रबोधाभ्यर्थनम् (1-2 श्लो.)

2. प्रबुध्यतः श्रीकृष्णस्य प्रथमदृष्टिप्रसरणमपेक्षमाणानां स्त्रीणां वर्णनम् (3 श्लो.)

3. श्रीकृष्णान्तःपुरदौवारिकाणामभिवर्णनम् (4 श्लो.)

4. सान्ध्यकृत्यानुष्ठानसमुत्सुकानां श्रीकृष्णपुरोधसामनुवर्णनम् (5 श्लो.)

5. सुप्तोत्थितान्तःपुरवरवर्णिनीनां वर्णनम् (6 श्लो.)

6. उषःकालपरिदृश्यमानगगनतलतारकादीनामभिवर्णनम् (8 श्लो.)

7. प्रभातसमयपरिदृश्यमानमयूरकृकवाकुशारिकाणां वर्णनम् (9-12 श्लो.)

8. पश्चिमाम्बुधावस्तमुपगमिष्यतश्चन्द्रमसस्तात्कालिकताराणां चानुवर्णनम् (13-14 श्लो.)

9. पूर्वसन्ध्यासमयानुवर्णनम् (15-19 श्लो.)

10. प्राभातिककामवीरदशानुवर्णनम् (20-24 श्लो.)

11. प्रभातप्रतिबोधकशंखानुवर्णनम् (23 श्लो.)

12. पूर्वसन्ध्याया मधुरसास्वादाङ्गनात्वेनोत्प्रेक्षणम् (25 श्लो.)

13. कुमुदिनीनायकस्य महाप्रस्थानोद्यतनायिकाविधुरदशावत्त्वेनोत्प्रेक्षणम् (26 श्लो.)

14. पूर्वसन्ध्याया भर्तृगृहालंकुर्वदङ्गनात्वेनोत्प्रेक्षणम् (27 श्लो.)

15. पूर्वसन्ध्यासमयपरिदृश्यमानगगनतलस्य पीताम्बरधारिश्रीकृष्णसाम्योपवर्णनम् (28 श्लो.)

16. सूर्योदयसमयानुवर्णनम् (29 श्लो.)

17. उद्यत्सूर्यमरीचिमालायाश्चक्रप्रभासाम्यानुवर्णनम् (30 श्लो.)

18. उषस्समये सूर्याचन्द्रमसोरदर्शनेऽपि श्रीकृष्णप्रबोधेन युगपत्तदुभयप्रकाशसम्भवोल्लेखः (31 श्लो.)

19. उद्यद्दिनमणेः कालाख्यपुरुषारोप्यमाणप्रदीपत्वेनोत्प्रेक्षणम् (32 श्लो.)

20. प्रत्यासन्नास्तमयप्रत्यग्रोदयशालियामिनीनाथदिनमणिसंयुत - गगनतलशोभायाः कालवणिक्परिकल्प्यमाननक्षत्रविक्षणमापकतोलनयन्त्रशोभासाम्योपवर्णनम् (33 श्लो.)

21. प्राभातिककुमुदिन्यवस्थानुवर्णनम् (34 श्लो.)

22. उद्यच्चण्डभानोः चक्रधरश्रीकृष्णसाम्योपवर्णनम् (35 श्लो.)

23. आसन्नास्तमयस्य चन्द्रमसो बलरामसाम्योपवर्णनम् (36 श्लो.)

24. अस्तमयोन्मुखनिशानाथोपवर्णनम् (37 श्लो )

25. सूर्योदयकालाभिवर्णनम् (47-54 श्लो.)

26. प्रभातसमयदृश्यमानहंसभृङ्गगजाश्ववारवनिताराजहंसगृह - दीर्घिकामन्दमारुताद्यभिवर्णनम् (55-67 श्लो.)

27. नदद्भृङ्गकुलकलिताया विकसन्नलिन्या उपवर्णनम् (68 श्लो.)

28. कुमुदिनीं विहाय नलिनीमुपगच्छतो भ्रमरस्यानुवर्णनम् (69 श्लो.)

29. सन्ध्यायास्सागरसुतात्वोत्प्रेक्षणम् (70 श्लो.)

30. कमलिन्युत्पलिनीनामभिवर्णनम् (71 श्लो.)

31. प्रत्यग्रसूर्योदयसमयसमीक्ष्यमाणपूर्वापरदिशोरभिवर्णनम् (77 श्लो.)

32. संकुचद्विकसन्त्योः प्राभातिककुमुदिनीनलिन्योर्वर्णनम् (73-75 श्लो.)

33. प्रातःकालिकभगवत्समीक्षणवैभवानुभवाभ्यर्थनम् (76 श्लो.)

34. प्राभातिकमन्दपवनानुवर्णनम् (77 श्लो.)

35. षट्पदगीत - मन्दपवनकम्प्यमानलतालास्य - दन्तिकर्णताल-वाद्यैः श्रीकृष्णस्य गीतलास्यवादित्रोपचारसंभवानुवर्णनम् (78 श्लो.)

36. अर्धविस्रंसितशय्योत्थितकामिनीकुलचूलिकागुम्भनशोभानु-वर्णनम् (79 श्लो.)

37. प्रभातसमयदृश्यमानाया भुवो नायकभोगोत्सुककामिनी-साम्यवर्णनम् (80 श्लो.)

38. मागधैः स्वात्मनां प्रातःकालिकभगवदक्षिप्रसरणवैभवानु-भवाभ्यर्थनम् (81 श्लो.)

39. आकर्णितसुप्रभातवर्णनस्य प्रबुद्धस्य भगवतः शरत्समय-प्रबुध्यमानतत्साम्यानुवर्णनम् (82 श्लो.)

40. प्रातः प्रबुद्धेन परिकलिताह्निकेन भगवता श्रीकृष्णेनास्थान-पीठालंकरणम् (83 श्लो.)

## बाणासुरपरिभवानुवर्णनपरे विंशे सर्गे (श्लो. 99)

1. बलरामप्रद्युम्नादिभिश्चतुरङ्गसैन्येन च सह बाणासुरविजयाय प्रस्थितेन भगवता श्रीकृष्णेन शोणिताख्यं बाणासुरनगरं प्रत्यागमनम् (1-11 श्लो.)

2. शोणितनगराद्बहिः प्राकारवदवस्थितानां पुरारिप्रमथगणानां बलरामबलवेगमसहमानानां भीत्या पलायनम् (12 श्लो.)

3. स्वस्वबिरुदोद्घोषपुरस्सरं शोणितपुरमावृत्य स्तम्बेरमकारित-प्राकारभङ्गानां वृष्ण्यन्धकादीनां बलमसहमानेन बाणासुरेणायोधनाय स्वपुरात्प्रस्थानम् (श्लो. 13-21).

4. श्रीकृष्णबाणासुरसैन्ययोर्युद्धाभिवर्णनम् (22-27 श्लो.)

5. निजभक्तभूतबाणासुरपरित्राणार्थं श्रीकृष्णेन सह युध्यता प्रमथगणपरिवृतेन शंकरेण श्रीकृष्णप्रयुक्तजृम्भणास्त्रपरवशेन रणाङ्गणे सजृम्भणमवस्थानम् (28-33 श्लो.)

6. तादात्विकं श्रीकृष्णपराक्रमं दृष्टवतां देवानां विस्मयकथनम् (34 श्लो.)

7. बाहुसहस्रशालिना सैन्यपरिवृतेन बाणासुरेण यादवैस्सह युद्धायाभियानम् (35-37 श्लो.)

8. विहगेन्द्रपक्षोत्थितवात्यया विमुक्तनागपाशबन्धेन अनिरुद्धेनापि पश्चाद्भागे दैतेयैस्सह युद्धकरणम् (38-39 श्लो.)

9. दैतेयैस्सह युध्यमानानां प्रद्युम्नबलरामश्रीकृष्णानां पराक्रमवर्णनम् (47-48 श्लो.)

10. यादवानामसुराणां च संकुलयुद्धवर्णनम् (49-68 श्लो.).

11. प्रद्युम्ननिहतान् पलायमानांश्चासुरानवलोक्य कुपितेन जलधिं द्विधा विभजता नलसेतुनेव बाहुसहस्रेण यादवसैन्यं द्विधा विभजता सैन्यमध्यप्रविष्टेन बाणासुरेण सह श्रीकृष्णस्यायोधनम् (69-71 श्लो.)

12. बाणासुरेण सह युध्यमानेन श्रीकृष्णेन तद्गर्वहेतोर्बाहुसहस्रस्य बाहुचतुष्टयवर्जं छेदनेन सुदर्शनास्त्रोपसंहरणम् (72-74 श्लो.)

13. स्वबाहुपङ्क्तिलवनेऽप्यनपेतगर्वं पुनरपि युध्यमानं बाणासुरं निहन्तुकामे सति श्रीकृष्णे स्वभक्तपरिपालनाय पुरारिणा बहुधा भगवतः श्रीकृष्णस्याभिष्टवनम् (75-86 श्लो.)

14. पुरारिप्रार्थितेन श्रीकृष्णेन सानुकम्पं बाणासुरायाभयदानम् (87-91 श्लो.)

15. भगवदनुकम्पितेन भगवद्दासभावजुषा निर्भयेन बाणासुरेण हिरण्यादिभिः स्वपूर्वकैरार्जितस्य सकलस्य हिरण्यरत्नादिकस्य उषानिरुद्धयोर्यौतकीकरणम् (92-94 श्लो).

16. हरिहरोभयप्रदत्ताभयेन दूरीकृतसुरशात्रवेण शान्तेन बाणासुरेण शंभुसेवनम् (95 श्लो.)

17. विजितबाणासुरेण ससैन्येन भगवता श्रीकृष्णेन सभार्यस्यानिरुद्धस्य द्वारकां प्रत्यानयनम् (96 श्लो.)

18. श्रीकृष्णपराक्रमं निशामयद्भिर्देवासुरैः स्वस्वामिनोरिन्द्रबाणासुरयोरस्वामिकत्वबुद्धेर्दूरीकरणम् (97 श्लो.)

19. बाणासुरं विजित्य द्वारकां नीतवत उषासहितस्य अनिरुद्धस्य विवाहमहोत्सवे मुदितैः पौरजानपदैः बहुविधोपायनानामर्पणम् (98-99 श्लो.)

## पौण्ड्रकवासुदेवकाशिराजतत्तनयतत्पुरोहितसृगालद्विविदहंसा कादिवधनिरूपणपरे एकविंशे सर्गे (1-70 श्लो.)

1. वासुदेवनामधेयं कृत्रिमशङ्खचक्रादिकं च दधानेन पौण्ड्रकाख्येन केन चिन्नृपेण स्वदूतमुखात् श्रीकृष्णं प्रति तस्य वासुदेवनामशंखचक्रादीनां परित्यागाय संदेशप्रेषणम् (1-22 श्लो.)

2. श्रीकृष्णेनापि तस्मादेव दूतमुखात् पौण्ड्रकाय समुचितं सचमत्कारं च प्रतिसंदेशं संप्रेष्य तन्निहननाय प्रस्थाय सकाशिराजं तं पौण्ड्रकं सृगालाभिधेयमन्यं च तादृशं निहत्य तदीयं गजाश्वादिकं द्वारकां नीत्वा स्वमहिषीभिस्सह विहरणम् (23-28 श्लो.)

3. श्रीकृष्णप्रतिचिकीर्षया काशिराजपुरोधसा त्रिनयनमाराध्योत्पादितायाः कृत्यायाः परावर्तनाय श्रीकृष्णेन प्रयुक्तस्य परावर्तितया तयैव च कृत्यया सह काशीराजपुरोधसं काशीं च भस्मीकृतवतो देवैरभिष्टुतस्य चक्रराजस्य श्रीकृष्णसन्निधिं प्रत्यागमनम् (39-45 श्लो.)

4. परिकल्पितासुरसौहृदं बहुविधोपद्रवकारिणं द्विविदनामानं वानरं स्वाग्रजेन बलरामेण सूदयता श्रीकृष्णेन स्वेनापि सौभडिबिकादीनां निघ्नता च धरित्र्या भारापनयनम् (46-65 श्लो.)

5. निखिलमपि राज्यभारमुग्रसेने विनिवेश्य स्वयमेव समाश्रिततत्सचिवपदेन भगवता श्रीकृष्णेन दिग्विजयप्रस्थानमन्त्रणाय समाहूतैस्सात्यकिप्रमुखैर्यादवैस्समधिगतशोभायास्सुधर्माया वर्णनम् (66-70 श्लो.)

## श्रीकृष्णसमाज्ञप्तसात्यकिदिग्विजयवर्णनपरे द्वाविंशे सर्गे (1-243 श्लो.)

1. सात्यकिप्रमुखेभ्यो यादवेभ्यो विस्तरेण राजनीतिमुपदिशता श्रीकृष्णेन राजधर्माणामवश्यपाल्यत्वोक्तिः (1-11 श्लो.)

2. राजधर्मावगमोपायभूतस्य नीतिशास्त्रस्य सत्सकाशादवश्यावगन्तव्यत्वोक्तिः (12-15 श्लो).

3. दिग्विजयायाविलम्बेन भूपरिक्रमणस्य आवश्यकत्वसमर्थनपूर्वकं नीतिमार्गेणावस्थानोक्तिः (16-19 श्लो.)

4. मन्त्रपरीक्षणाय खलत्यागसुहृद्विगमयोरावश्यकत्वोक्तिः (20 श्लो.)

5. प्रजानां परिसांत्वनस्यावश्यानुष्ठेयत्वकथनम् (21 श्लो.)

6. अवहितैः विवेकाहंकारयोः परिग्राह्यत्वपरित्याज्यत्वयोः कथनम् (22-24 श्लो.)

7. त्रिविधमन्त्रसंग्रहोपायकथनम् (25 श्लो.)

8. अप्रशान्तेषु विश्वासस्य सुहृत्सु अतिशङ्कायाश्च परित्याज्यत्वोक्तिः (26 श्लो.)

9. साङ्गपञ्चकेन मन्त्रणेन नीतिमार्गमपरित्यजतां संपदोऽनपायताकथनम् (27 श्लो).

10. अर्थकामैकसाधिकाया नृशंसप्रियाया नीतेर्दूरीकरणोक्तिः (28 श्लो).

11. दूरीकृतमृगयादिप्रमादसप्तकस्य अवगतसामाद्युपायसप्तकस्य संपन्नस्वाम्यादिराज्याङ्गसप्तकस्य च नरपतेस्सकलजयसिद्धिकथनम् (29 श्लो.)

12. अस्थानविजृम्भमाणानां क्रोधलोभादीनामान्तरारातीनां प्रथमनिग्राह्यत्वकथनम् (30 श्लो.)

13. मौलादिषड्विधबलगतार्थीकरणसमर्थस्य प्रज्ञाबलस्य प्रशंसनम् (31 श्लो.)

14. समुचितविषयकक्षमायाः प्रशंसनम् (32-35 श्लो.)

15. नीतिशास्त्रानुसारिण्या समीक्षया व्यामोहदूरीकरणावश्यकत्वोक्तिः (36 श्लो.)

16. शास्त्रेरितानां तत्कालकटूनामपि परिणामहितानामपरित्याज्यत्वोक्तिः (37 श्लो )

17. अनियतविग्रहसंधानकस्य कर्मणस्त्याज्यत्वसमर्थनपूर्वकं सदाऽवहितस्थितेः कथनम् (38 श्लो).

18. विनश्वराभ्यामपि कौमारयौवनाभ्यां फलसाधनाभ्यां स्थिरफलरूपस्वधर्मस्यावश्यसंपादनीयत्वोक्तिः (39 श्लो.)

19. राज्ञां सुकीर्तिसंपादनावश्यकत्वकथनम् (42-43 श्लो.)

20. धृष्टानां शत्रूणां पराक्रमेणैव शिक्षणीयत्वकथनम् (44 श्लो.)

21. सात्यकिप्रशंसनपूर्वकं दिग्विजयाय यादवानां प्रोत्साहनम् (45-50 श्लो.)

22. श्रीकृष्णोपदिष्टां नीतिमधिगम्य यादवैस्तत्प्रशंसनम् (51-54 श्लो.)

23. दिग्विजययात्राप्रस्थितस्य सात्यकेस्सेनासंनाहपराक्रमाद्यभिवर्णनम् (55-88 श्लो.)

24. सात्यकिना प्रथमं घूर्जरपारशीकानां विजयः (89 श्लो.)

25. सात्यकिना मध्यदेशविजयपुरस्सरं पश्चिमदिशि म्लेच्छादीनां विजयः (90-100 श्लो.)

26. सात्यकिना वायव्योत्तरपूर्वदिङ्नृपाणां विजयः (101-148 श्लो.)

27. सात्यकिना वङ्गकलिङ्गादिनृपाणां विजयः (149-157 श्लो.)

28. सात्यकिना दक्षिणस्यां दिशि आन्ध्रतुण्डीरचोलकेरलपाण्ड्यादीनां विजयः (158-233 श्लो).

29. संप्राप्तचतुर्दिग्विजयेन ससैन्येन प्रत्युद्गच्छन्निखिलयादवसंमानितेन सात्यकिना द्वारकां प्रत्यागमनम् (235-239 श्लो.)

30. जितकाशियादवसैन्यसमृद्धिसमन्विताया द्वारकाया वर्णनम् (240-241 श्लो.)

31. यदुबलविजितानां समाहृनोपायनानां महीपतीनां भगवता श्रीकृष्णेन प्रापितप्राक्तनैश्वर्यसमधिकैश्वर्याणां स्वस्वावासं प्रति गमनम् (242-243 श्लो.)

भारतयुद्धापदेशेन भगवत्कृतस्य भूभारशेषापनयनस्य वर्णनपरे
त्रयोविंशे सर्गे (श्लो. 1-62.)

1. पञ्चेन्द्रावतारभूतानां पाण्डवानां दुर्योधनापादितजलाग्निपीडाद्यूतपराजयराज्यभ्रंशादिक्लेशानामनुवर्णनम् (1-10 श्लो.)

2. कौरवपाण्डवसंधानार्थमधिगतदूतभावस्य भगवतः श्रीकृष्णस्य महिमानुवर्णनम् (11-19 श्लो.)

3. अनङ्गीकृतसंधानेषु धार्तराष्ट्रेषु भगवता श्रीकृष्णेन धनंजयसारथ्याभ्युपगमः (20-25 श्लो.)

4. रणाङ्गणे धनंजयविषादापनयनव्याजेन भगवतः श्रीकृष्णस्य मुखकमलसंभूतायाः गीताया महिमानुशंसनम् (26-32 श्लो.)

5. धनंजयसमाश्वासनाय रणाङ्गणे श्रीकृष्णेन विश्वरूपप्रदर्शनम् (33-34 श्लो.)

6. अर्जुनस्य विपक्षविनाशनशक्तौ भगवत्साहाय्यस्यैव हेतुत्वकथनम् (35 श्लो.)

7. रणाङ्गणे भगवतः श्रीकृष्णस्य सारथ्यप्रशंसनम् (36-39 श्लो.)

8. भगवतः श्रीकृष्णस्य स्वप्रतिज्ञापालनापेक्षया स्वभक्तप्रतिज्ञापालन एवौन्मुख्यमित्यंशस्य प्रकाशनम् (40 श्लो.)

9. श्रीकृष्णेन भगदत्तप्रयुक्तवैष्णवास्त्रादर्जुनस्य परिपालनम् (41 श्लो.)

10. श्रीकृष्णपादसमर्पितां पूजां चन्द्रमौलिसंनिधौ दृष्टवताऽर्जुनेन श्रीकृष्णमहिम्नोऽनुचिन्तनम् (42 श्लो).

11. धनंजयकृतजयद्रथसंहारप्रतिज्ञायाः श्रीकृष्णेन सार्थकीकरणम् (43 श्लो.)

12. व्याजीकृतधनंजयेन भगवता श्रीकृष्णेन भारतयुद्धं निर्वहता भूभारावतारणम् (44-52 श्लो.)

13. द्रौण्यस्त्रविप्लुष्टोत्तरागर्भतः परीक्षितमुज्जीवयितुः श्रीकृष्णस्य महिमानुवर्णनम् (53-55 श्लो.)

14. श्रीकृष्णेन पाण्डवान् द्वारीकुर्वता द्रुपदोद्भवाया आर्तिनिर्वापणम् (56 श्लो.)

15. ऐच्छिकनिजमरणसमयप्रतीक्षकस्य शान्तनवस्य कृते धनंजयेन शरैस्तल्पनिर्माणम् (57 श्लो.)

16. भारतयुद्धव्याजेन भगवता श्रीकृष्णेन निष्पादितस्य वृष्ण्यन्धकेतरजनितभूभारापलयनचरितस्य निगमनम् (58 श्लो).

17. समापितभारतयुद्धस्य धनंजयमालिङ्गतो भगवत आशयोत्प्रेक्षणम् (59-60 श्लो.)

18. कलिप्रशमाय भगवता श्रीकृष्णेन गाङ्गेयद्वारा धर्माणां प्रख्यापनम् (61 श्लो.)

19. राज्यारोपितपाण्डवपूजितेन भगवता श्रीकृष्णेन द्वारकां समधिगम्य महिषीभिस्सह विहरणम् (62 श्लो.)

## निजमहिषीभिस्सह भगवतः शृङ्गारसाम्राज्यानुभवानुवर्णनपरे चतुर्विंशे सर्गे (1-98 श्लो.)

1. निजवल्लभासहितस्य भगवतः श्रीकृष्णस्य विहरणोपक्षेपः (1 श्लो.)

2. वीतरागस्यापि भगवतः श्रीकृष्णस्य विषयभोगसमर्थनम् (2 श्लो.)

3. वल्लभाभिस्सह भगवतो विहारस्य राजर्षिभिरपि संश्लाघनम् (3 श्लो.)

4. भगवद्विहाराश्रयभूतद्वारकान्तःपुरादिसमृद्धिवैभवानुवर्णनम् (4-6 श्लो.)

5. युगपद्दूरीकृतबहुशरीरेण भगवता धर्मानुष्ठानव्यवहारदर्शन-विहरणादिसंपादनम् (7 श्लो.)

6. योगबलसमधिगतबहुतनुकसौभरिप्रभृतिभ्यो भगवतोऽति-शयस्य प्रकाशनम् (8 श्लो.)

7. श्रीकृष्णेन स्ववल्लभानां सकलविधसमृद्धिवैभवापादनेन संमोदोत्पादनम् (9-11 श्लो.)

8. शतमखविरिञ्चादिलोकेष्वप्यदृष्टस्य वैभवस्य श्रीकृष्णान्तः पुरे दर्शनान्नारदस्य प्रमोदाधिगमः (12 श्लो.)

9. वल्लभाभिस्सह श्रीकृष्णस्य उपवनविहारः (13-16 श्लो.)

10. श्रीकृष्णेन देवैः प्रेषितानामप्सरसां निजमहिषीदासीत्वेन नियोजनम् (17 श्लो.)

11. श्रीकृष्णवल्लभानामहर्निशं तदेकचित्तताया अनुवर्णनम् (18-19 श्लो.)

12. श्रीकृष्णेन सुरेन्द्राद्युपहृतोपायनानां निजवल्लभाभ्यस्सं-विभजनम् (20 श्लो.)

13. मणिमये विहारशैलेऽधिष्ठितहंसतूलिकातल्पस्य श्रीकृष्णस्य विहारवर्णनम् (21 श्लो.)

14. आलेख्यमन्दिरेषु भगवता निजवल्लभानां समाधिदशासदृ-शानन्दोत्पादनम् (22 श्लो.)

15. भगवताऽऽत्मवल्लभानां विहारेणैव भवभयनिवारिण्याः स्वभक्तेरुत्पादनम् (23 श्लो.)

16. श्रीकृष्णान्तःपुरगतक्रीडावापिकासौभाग्यातिशयवर्णनम् (24-25 श्लो.)

17. श्रीकृष्णस्य रत्नडोलाविहारवर्णनम् (26 श्लो.)

18. श्रीकृष्णस्य महिषीभिस्सह जलक्रीडावर्णनम् (27 श्लो.)

19. महिषीभिस्सह मणिमयेषु कमलवनान्तरितक्रीडामन्दिरेषु श्रीकृष्णस्य विहारः (28 श्लो.)

20. प्रसूनमण्डपेषु भगवतो विहारवर्णनम् (29-30 श्लो.)

21. भगवताऽऽत्मवल्लभानां क्रीडाशुकशिक्षणातिशयप्रकाशनम् (31 श्लो.)

22. वल्लभाभिस्सह श्रीकृष्णस्य कन्दुकक्रीडानयनपिधानविहारवर्णनम् (32-33 श्लो.)

23. श्रीकृष्णेन वर्णाश्रमोचितधर्मानुष्ठानसमयेऽपि तत्परिचरणात्तन्महिषीणां निरतिशयानन्दावाप्तेर्वर्णनम् (34 श्लो.)

24. श्रीकृष्णेन वल्लभाभिस्सह घर्मशरच्छिशिरसमयातिवाहनप्रकारवभववर्णनम् (35-38 श्लो.)

25. महिषीसहितेन श्रीकृष्णेन गीतनृत्तवादित्रादिकलाकौशलानुभववर्णनम् (39-46 श्लो.)

26. भगवतो वल्लभाभिस्सह सपरिहासविहारः (47-53 श्लो.)

27. भगवता कृतस्य निजवल्लभाप्रसाधनस्य वर्णनम् (54 श्लो.)

28. श्रीकृष्णस्य तन्महिषीणां च परस्परानुषक्तचित्ततावर्णनम् (55-58 श्लो.)

29. सुरोपहृतसुधाया भगवतैव स्वमहिषीभिः पायनवर्णनम् (59 श्लो.)

30. श्रीकृष्णेन प्रियवचनशतोक्तिभिः महिषीणां प्रमोदापादनम् (60 श्लो.)

31. श्रीकृष्णोपभुक्तवसनविभूषणाद्युपभोगात्तद्वल्लभानां प्रमोदातिशयावाप्तेर्वर्णनम् (61 श्लो.)

32. भगवदनुभवयोग्यावाङ्मनसगोचरयौवनसंपत्समन्विततन्महिषीसौभाग्यातिशयस्योपवर्णनम् (62-64 श्लो.)

33. श्रीकृष्णेन महिषीभिस्सह ताम्बूलसेवनम् (65 श्लो.)

34. निखिलजगन्मोहकस्य भगवतस्संततानुभवेऽपि तन्महिषीणां

नवनवतयैवानुभूयमानस्यावधीरिताणिमादिवैभवानन्दस्योपवर्णनम् (66-68 श्लो.)

35. भगवदुपभोगेनैव तन्महिषीणां मुक्तभोगसदृक्षनिरतिशय-प्रमोदावाप्तिकथनम् (69-71 श्लो.)

36. अगुरुधूमधूपितेषु मणिमयप्रदीपयुतेषु सदनेषु महिषीगण-परिवृतेन तत्पारतन्त्र्यं नाटयता भगवता श्रीकृष्णेन ताभिस्सह रात्रीणा-मतिवाहनम् (72-73 श्लो.)

37. श्रीकृष्णानुष्ठितस्य लीलानुवृत्तिफलकस्वहिषीचिकुरगुम्भना-द्भुतस्योपवर्णनम् (74 श्लो.)

38. श्रीकृष्णस्य तन्महिषीणां च परस्परानुभवजनिततुष्टेरदृष्ट-परायाः कथनम् (75 श्लो.)

39. भगवद्वल्लभाभिस्स्वस्वगुणातिशयेन स्त्रीसामान्योपजातपरि-वादस्यापाकरणम् (76 श्लो.)

40. निपुणानामपि नटानां भगवद्वल्लभानुभवानुकरणासामर्थ्यस्य कथनम् (77-78 श्लो.)

41. कलशोदधिकन्यासदृशीभिरात्ममहिषीभिर्वल्लीभिः श्रीकृष्णस्य हर्षातिशयावाप्तिकथनम (79-80 श्लो.)

42. द्यूतविहारे निजमहिषीभ्यां प्रापितकितवस्थेयपदेन भगवता उभयोरपि जयोक्त्या कलहसंपादनपुरस्सरं सपरिहासं विहरणम् (81 श्लो,)

43. श्रीकृष्णेन प्रणयकुपितानामपि महिषीणां प्रहेलिकोक्तिभि-स्संमोहनम् (82 श्लो.)

44. मन्मथायुतातिशायिलोकोत्तरसौन्दर्यसमन्वितस्य श्रीकृष्णस्य संदर्शनेन यमिभिरपि तदनुभवाय स्त्रीभावाकाङ्क्षणम् (83 श्लो.)

45. भगवद्वल्लभासौभाग्यातिशयप्रशंसनम् (84 श्लो.)

46. श्रीकृष्णस्य तन्महिषीणां च परस्परानुषङ्गशोभातिशय-प्रशंसनम् (85 श्लो.)

47. स्ववल्लभावरदानोन्मुखेन धर्माविरोधिनः कामस्य कामनया समुचितं मर्मभेदिनं परिहासरसं चानुवर्तमानेन भगवता स्ववल्लभोप भोगः (86 श्लो.)

48. स्ववल्लभाभिर्मोदमानस्य श्रीकृष्णस्य सोपमानप्रदर्शनं शोभाविशेषस्य तद्भोगपरिवाहस्य च प्रशंसनम् (87 श्लो.)

49. भगवन्तमनुभवन्तीनां तन्महिषीणां निरवधिकनिरन्तरभोगोत्कर्षप्रशंसनम् (89-90 श्लो.)

50. परमपद इव द्वारकायामपि चिरावस्थितिमभिलषता भगवता स्वमहिषीभिः शृङ्गाररसातिशयानुभावनम् (91-93 श्लो.)

51. श्रीकृष्णेन यथास्वगानं धर्माविरुद्धकामरूपतयाऽवस्थानस्य वर्णनम् (94 श्लो.)

52. भगवदनुभवानन्दशालिनीनां तदनुध्यातॄणां च यथार्हं स्वर्गमोक्षावाप्तेः कथनम् (95 श्लो.)

53. नारीपारवश्यसंभोगप्रावण्यपरिच्छिन्नावस्थितिमतोऽपि श्रीकृष्णस्य सर्वलोकेश्वरत्वनित्यब्रह्मचारित्वसर्वगतत्वान्यनुसंदधतां भगवन्मायातरणसंभवाभिधानम् (96 श्लो.)

54. श्रीकृष्णवल्लभासौभाग्यवर्णनोपसंहारः (97 श्लो.)

55. कविकाव्यादिप्रशंसनम् (98 श्लो.)

---

# अशुद्धसंशोधनम्

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 2 | 16 | अीखंल | अखिलं |
| 5 | 16 | पिञ्छा | पिञ्छ |
| 7 | 15 | प्रभा | प्रभाः |
| 7 | 17 | इात | इति |
| 11 | 19 | भवित | भावित |
| 17 | 15 | कुङ्कमे | कुङ्कुमे |
| 18 | 10 | रहा | रुहा |
| 23 | 23 | वोध्य | बोध्यः |
| 23 | 24 | लम्भनं | लम्भं |
| 26 | 10 | पिञ्च | पिञ्छ |
| 26 | 22 | आलि | कालि |
| 26 | 22 | डीतृं | ह्वितुं |
| 26 | 23 | मतेन | मत्तेन |
| 27 | 20 | शेपा | शेषा |
| 30 | 1 | यर्णे | येंण |
| 31 | 21 | ध्वमा | ध्वंमा |
| 32 | 14 | वेकमिव | वेकमिव |
| 32 | 16 | णना | णाना |
| 32 | 17 | 1 मेव | 2 मेव |
| 32 | 22 | यात् | स्यात् |
| 34 | 19 | नीव | नवि |
| 42 | 4 | हाव | हव |
| 49 | 21 | रूप | रूपं |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 49 | 22 | दंर्शं | दर्शं |
| 56 | 2 | पायो | प्रायो |
| 56 | 3 | च्छाद् | श्छाद् |
| 56 | 20 | दुष्ट्रापं | दुष्प्रापं |
| 57 | 5 | गच्छतं | गच्छन्तं |
| 58 | 14 | प्रणि | प्राणि |
| 58 | 22 | वंष्या | वंश्या |
| 59 | 10 | ससुद्र | समुद्र |
| 61 | 5 | त्वेत्प्रे | त्वोत्प्रे |
| 62 | 1 | अभृत | अमृत |
| 62 | 9 | त्रह्नि | वह्निः |
| 63 | 2 | वार्ण्णे | वार्ष्णे |
| 64 | 8 | समाप | समीप |
| 73 | 22 | निष्पिप्य | निष्पिष्य |
| 74 | 13 | लयं | ल्यं |
| 76 | 12 | इात | इति |
| 77 | 7 | वृत्त्य | वृत्त्या |
| 78 | 14 | क्लृप्राः | क्लृप्ताः |
| 78 | 15 | शीर्षैं | शीर्षैः |
| 82 | 1 | नाकेह | नोकह |
| 82 | 18 | लीला | नीला |
| 86 | 12 | जैन्द्र | जेन्द्र |
| 88 | 2 | दोषः | द्वोषः |
| 94 | 20 | भक्तया | भक्त्या |
| 101 | 3,6 | स्यैन्य | सैन्य |
| 103 | 22 | न्यास्मि | न्यस्मि |
| 107 | 2 | ज्ञयस्वरूपं | ज्ञेयस्वरूपः |
| 107 | 2 | न्यामी | र्यामी |
| 108 | 3 | तत्वं | नन्यं |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 108 | 5 | एत | *एत |
| 108 | 21 | माडाः | मूढाः |
| 108 | 22 | अत्र | [1]अत्र |
| 109 | 1 | तत्घं | तत्वं |
| 111 | 20 | भ्तिति | स्थिति |
| 113 | 1 | पीयाति | पायीति |
| 118 | 12 | पंवं | एवं |
| 119 | 15 | दीयो | दीये |
| 122 | 10 | हरेण | हारेण |
| 123 | 2 | गममि | गमि |
| 129 | 1 | मथनन | मथनेन |
| 139 | 15 | अप्येव | अप्येवं |
| 141 | 7 | क्षत्रिया | क्षत्रिया |
| 142 | 17 | तति | तेति |
| 142 | 22 | मात्सेध | मोत्सेध |
| 143 | 2 | गृ | गृं |
| 147 | 1 | भवि | भंवि |
| 147 | 13 | भदं | मेदं |
| 155 | 2 | अन्वेक्ष्य | अन्वीक्ष्य |
| 155 | 5 | हारान् | हरान् |
| 155 | 7 | हारन् | हरान् |
| 155 | 11 | हारा | हरा |
| 155 | 15 | श्रुशा | श्रुतशा |
| 155 | 7 | श्वास | श्वासा |
| 157 | 1 | जनानां निमीलनक्षण-मात्रमप्यनवस्थाय. | 'निमीलतो मील-तश्च जनानना-दृत्य' इति स्यात्. |
| 157 | 9 | उच्छ्रयो | उच्छ्रायो |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 160 | 1 | शत्रुणां | शत्रूणां |
| 160 | 3 | पन्न | पन्नः |
| 160 | 7 | जत्रं | जैत्रं |
| 170 | 15 | च्छिन्नंगुणं | च्छिन्नगुणां |
| 171 | 22 | किञ्चत् | किञ्चित् |
| 174 | 4 | न विपुले | विपुले |
| 176 | 15 | ग्रग्विणः | स्रग्विणः |
| 177 | 7, 9 | प्रवाळ | प्रवाल |
| 178 | 17, 20<br>21 | प्रवाळै | प्रवालै |
| 180 | 2 | प्रळय | प्रलय |
| 180 | 15 | 6 रण | 5 रण |
| 184 | 8 | राला | रला |
| 187 | 20 | बृह्मणं | बृंहणं |
| 190 | 17 | क्रमति | क्रमेति |
| 195 | 6 | ऐन्द्री | ऐन्द्रीं |
| 199 | 15 | गर | गरः |
| 203 | 11 | द्दष्ट्वा | दृष्ट्वा |
| 212 | 16 | नन | नेन |
| 214 | 21 | जामवग्न्य | जामदग्न्य |
| 216 | 18 | नय | नया |
| 218 | 1 | अभ्रं | अभ्रं |
| 218 | 8 | विजग्ये | विजिग्ये |
| 219 | 8 | वंश्यः | वंश्याः |
| 220 | 9 | वाष्प | बाष्प |
| 224 | 10 | भृत्त | भृत् |
| 227 | 14 | ३४३ | २४३ |
| 235 | 3 | भाव | भावं |
| 236 | 13 | भृत | भृतः |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 241 | 20 | शेषत्व | शेषत्वं |
| 244 | 15 | मुक्तावव | मुक्ताविव |
| 245 | 13 | 3 धौते | 4 धौते |
| 245 | 15 | गुरो | गुरोः |
| 245 | 19 | तन्यूल | तन्मूल |
| 245 | 21 | 3 धौतं | 4 धौतं |
| 246 | 8 | याजेन | योजन |
| 252 | 5 | द्विश | द्विष |
| 258 | 2 | मव | मेव |
| 259 | 13 | स्संश | संश |
| 260 | 17 | द्वारणे | द्वारेण |
| 261 | 14 | वरि | वीर |
| 262 | 1 | गृहार्त | गृहीत |
| 263 | 3 | म्भूव | म्बभूव |
| 266 | 2 | शाकि | शीक |
| 266 | 8 | करः | कर |
| 266 | 11 | विश्व | विश्वः |
| 267 | 8 | प्राचत | प्रचित |
| 267 | 11 | वरि | वीर |
| 269 | 8 | धनिस्तु | धीनस्तु |
| 271 | 9 | शलि | शील |
| 274 | 10 | ददनुद | |
| 274 | 22 | पर्ति | पति |
| 275 | 18 | साधन | साधना |
| 277 | 10 | धृतिवधि | धृतिमाधि |
| 286 | 23 | धाङ्कि | ध्याङ्कि |
| 295 | 18 | अमि | अभि |
| 296 | 18 | लक्ष्या | लक्ष्म्या |
| 297 | 9 | नार्विते | नार्पिते |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 299 | 15 | पुल्लिङ्ग | पुंलिङ्ग |
| 300 | 23 | वियागः | वियोगः |
| 300 | 23 | ग्रन्थेनात्र भा | ग्रन्थेन भा |
| 303 | 20 | नटन | अवशैः नटन |
| 303 | 20 | अभिनय | अवशैः अभिनय |
| 310 | 12 | वापेक्ष | विपक्ष |
| 314 | 4 | गोंरवं | गौरवं |
| 314 | 11 | वॆारस्य | वीरस्य |
| 314 | 22 | पाठाः | पाठः |
| 318 | 8 | परस्पर | परस्पर |
| 319 | 2 | मदिरा | मदिरां |
| 319 | 7 | क्षेम्यां | म्यं |
| 319 | 19 | अनभ्र | अनभ्र |
| 319 | 22 | यध्द | यद्ध |
| 319 | 27 | अन्तरे | आन्तरे |
| 319 | 31 | अन्त | अन्तः |
| 320 | 24 | पालीयां | पानीयां |
| 320 | 30 | योवन | यौवन |
| 321 | 30 | भृंकुटीं | भ्रुकुटीं |
| 322 | 13 | अर्थेन | अर्धेन |
| 323 | 7 | आन्ध्रेऽवर | आन्ध्रेश्वर |
| 325 | 26 | नवयोः | नयोः |
| 326 | 10 | करणालिकाम | करणविगम |
| 327 | 3 | मूषणं | भूषणं |
| 327 | 12 | चिन्हं | चिह्नं |
| 328 | 18 | .... | खलत्यागः<br>२२-२० १४ |
| 328 | 29 | नित्यससौ | नित्यमसौ |
| 329 | 24 | वन्हि | वह्नि |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 329 | 26 | गृण्हता | गृह्णता |
| 329 | 27 | गृण्हन्ति | गृह्णन्ति |
| 330 | 10 | जगुहे | जगृहे |
| 330 | 11 | जम्मतुः | जग्मतुः |
| 330 | 13 | जग्राद् | जग्राह |
| 330 | 23 | चिन्ह | चिह्न |
| 330 | 26 | पाण्डया | पाण्ड्या |
| 332 | 3 | कुताः | कृताः |
| 332 | 5 | चक्षुराप्य | चक्षुरवाप्य |
| 332 | 12 | व्याप्य | व्याप्त |
| 332 | 15 | दीप्ति | दीप्त |
| 332 | 26 | रिव | रव |
| 333 | 15 | जझे | जज्ञे |
| 333 | 27 | त्वाद | त्वाद |
| 334 | 23 | दुर्ग | |
| 335 | 16 | द्विरुप | द्विरूप |
| 335 | 27 | वारिक | वारिका |
| 337 | 8 | वन्हि | वह्नि |
| 338 | 11 | वन्हि | वह्नि |
| 338 | 12 | यच्छन्त | यच्छत |
| 339 | 14 | धन | वन |
| 343 | 2 | विकस्कर | विकस्वर |
| 343 | 8 | परिसञ्ज | प्रतिसंज |
| 346 | 4 | कण्डकितां | कण्टकितां |
| 345 | 16 | स्याददुतम | स्वादुतम |
| 346 | 26 | मास्व | भास्व |
| 347 | 31 | मार्ग | मार्गा |
| 351 | 19 | वन्हे | वह्ने |
| 354 | 10 | वह्नभि | वह्नभि |

# यादवाभ्युदयव्याख्योद्धृतप्रमाणानामकारादिक्रमेण सूचनी

| व्याख्योदाहृतप्रमाणानि | | पुटम् | पङ्क्तिः |
|---|---|---|---|
| **अ** | | | |
| अंशुस्सूत्रादि (यादवः) | .... | 20 | 10 |
| अकारो वै सर्वा वाक् | ... | 242 | 7 |
| अक्षयः स्वर्गवासस्ते यावदिन्द्रो वसिष्यति (हरिवंशे) | .... | 236 | 23 |
| अग्निरग्र प्रथमो देवतानाम् (तै. ब्रा. २-४-३) | .... | 110 | 12 |
| अङ्कूरपल्लवकलिकाप्रसूनफलभोगभागियं क्रमशः (रसार्णवः ४३ पृष्ठं आ. मु.) | | 294 | 13 |
| अङ्गहारोऽङ्गविक्षेपे (यादवः) | .... | 286 | 8 |
| अत्याहितं महाभीतिः (यादवः) | .... | 30 | 20 |
| अथ यत्रैतदस्मात् शरीरादुत्क्रान्तो भवति (छान्दोग्यं ८-६-५). | | 31 | 21 |
| अद्यापि वः पुरं ह्येतत्सूचयद्रामविक्रमम् (श्रीभागवतं १०-६८-५४) | | 237 | 14 |
| अधिकम् (पा. सू. ५-२-७३) | .... | 312 | 21 |
| अधिशीङ्स्थासां कर्म (पा. सू. १-४-४६) | .... | 104 | 10 |
| अनचि च (पा. सू. ८-४-४७) | ... | 36 | 11 |
| अन्यौ विभिन्नासदृशौ (यादवः) | .... | 6 | 13 |
| अपदानं पराक्रमः (वैजयन्ती) | .... | 29 | 21 |
| अपरान्तास्तु पाश्चात्याः (यादवः) | .... | 178 | 5 |
| अपां हि तृप्ताय न वारिधारा स्वादुस्सुगन्धिस्स्वदते तुषारा (नैषधं ३-९४). | | 212 | 4 |
| अभितः परितः (का-वार्तिकं १४४२-४३) | ... | 42 | 2 |
| अभीषुः प्रग्रहे रश्मौ (अमरः) | .... | 52 | 11 |
| अमन्ताच्च (पा. गणसूत्रं १८८) | .... | 208 | 2 |
| अमर्त्यभावेऽपि कयोश्चिदासीदेकाप्सरःप्रार्थितयोर्विवादः | | 79 | 3 |

A*

ख

| व्ख्योदाहृतप्रमाणानि | | पुटम् | पङ्क्तिः |
|---|---|---|---|
| मया हतांस्त्वं जहि (गीता ११-४५) | .... | 248 | 20 |
| मराले दन्तुरे पुंसि (रत्नमाला) | .... | 289 | 19 |
| मर्त्यलोको जीवलोकः (यादवः) | .... | 8 | 22 |
| महाप्रस्थानयात्रा च | .... | 17 | 4 |
| मिथुनं युगलं युग्मं (वैजयन्ती) | ... | 122 | 7 |
| मिथुनात्तद्धति त्रिषु (वैजयन्ती) | .... | 122 | 8 |
| मुखं निस्सरणे (विश्वः) | .... | 276 | 9 |
| मृगयाऽक्षाः स्त्रियः पानं | .... | 151 | 23 |
| | | 217 | 15 |
| मोदते भगवान् भूतैर्बालः क्रीडनकैरिव (वायु. पु. उ. खं. ३६-९६). | | 93 | 2 |
| मौलं भृतं श्रेणि (का. नी. १६-६) | .... | 153 | |

य

| | | | |
|---|---|---|---|
| यजजपदशां यङः (पा. सू. ३-२-१६६) | .. | 125 | 15 |
| यथाकामी भवेद्वाऽपि (याज्ञ. स्मृ. ८१ श्लोकः) | .. | 266 | 3 |
| यथार्हवर्णः प्रणिधिः (अमरः) | .. | 119 | 10 |
| यथा सादृश्ये (पा. सू. २-१-७) | | 60 | 21 |
| यवसं तृणमर्जुनं (अमरः) | .. | 194 | 16 |
| यस्योभावग्नी (आ. श्रौ. सू. ५-२९-१३) | .. | 216 | 3 |
| यां मलवद्वाससं सम्भवन्ति (तै. सं. २-५-१) | .. | 64 | 11 |
| यावदवधारणे (पा. सू. २-१-८) | .. | 137 | 23 |
| युद्धमायोधनं जन्यं (अमरः) | .. | 91 | 9 |
| योगः सन्नहनोपाय (अमरः) | . | 230 | 18 |
| योग्यशक्तहिताः क्षमाः (यादवः) | . | 143 | 2 |
| योऽन्यथासन्तमात्मानं (भा. उद्यो ४२-३५) | . | 114 | 11 |

र

| | | | |
|---|---|---|---|
| रङ्गो रणखले (विश्वः) | . | 180 | 15 |
| रथोपकरण प्रोक्त (हलायुधः) | . | 38 | 9 |
| राजसूय (पा. सू. ३-१-११४) | . | 182 | 7 |

ह

# यादवाभ्युदयव्याख्योद्धृतग्रन्थकृन्नाम्नामकारादिक्रमेण सूचनी

# यादवाभ्युदयव्याख्योद्धृतग्रन्थनाम्नामकारादिक्रमेण सूचनी



इत्यादि

# यादवाभ्युदयव्याख्यायां व्युत्पादिता मूलगताः प्रयोगविशेषाः

कवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र-श्रीमद्वेदान्ताचार्यविरचिते

# यादवाभ्युदयनाम्नि महाकाव्ये

## एकोनविंशस्सर्गः

नित्यप्रबुद्धमपि निर्मलया स्वदृष्ट्या
निद्राणवद्दरनिमीलितनेत्रपद्मम् ।
[1] प्राबोधिकीभिरुपसेदुरितीव वाग्भिः
स्वाधीनमर्त्यतनयं श्रुतिवन्दिनस्तम् ॥ १ ॥

### विद्वन्मणि-श्रीमदप्पयदीक्षितविरचिता व्याख्या

अथ भगवत्प्रबोधकमागधमुखेन प्रभातवर्णनं प्रस्तौति—

नित्येति—निर्मलया क्वचिदपि विषयप्रतिबन्धकालुष्यरहितया। स्वदृष्ट्या निजधिया। "दृष्टिर्धीदर्शनाक्षिषु" इति विश्वः। नित्यप्रबुद्धं सदा जाग्रद्दशापन्नमपि। निद्राणवत् सुषुप्तेन तुल्यं यथा तथा। दरनिमीलितनेत्रपद्मं, नेत्रं पद्ममिवेत्युपमितसमासः, दरमल्पं निमीलितं नेत्रपद्मं येन तं। "दरोऽस्त्री शङ्कभी[2]गर्वेष्वल्पार्थे त्वव्ययं दरम्" इति यादवः। स्वाधीनमर्त्यतनयं स्वायत्तमकर्मवश्यं [3]मर्त्यसुतं। तं कृष्णं। श्रुतय एव वन्दिनः मागधाः। इति वक्ष्यमाणप्रकारेण। इवशब्दो वाक्यालङ्कारे। प्राबोधिकीभिः [4]प्रबोधप्रयोजनाभिः। वाग्भिः, प्रभातवृत्तान्तगोचराभिः। उपसेदुः। वेदा वन्दिरूपं गृहीत्वा प्राबोधिकानि प्रभात-

---

[1] प्राबोधकीभि—ग्र. ग्र. मु. [2] गर्तेष्वल्पार्थे त्वव्ययं—ङ. एवमेव मुद्रितयादवकोशेऽपि. [3] मर्त्यतनयं—घ. ट. [4] प्रबोधनप्रयोजनाभिः—ङ.

वर्णनानि पठन्ति स्मेत्यर्थः । 'टिड्ढाणञ्' (पा. सू. ४-१-१५) इत्यादिना ङीप् ॥ १ ॥

यामिन्यपैति यदुनाथ विमुञ्च निद्रां
उन्मेष[1] मृच्छति तवोन्मिषितेन विश्वम् ।
जातस्स्वयं खलु जगद्धितमेव कर्तुं
धर्मप्रवर्तनधिया धरणीतले त्वम् ॥ २ ॥

यामिनीति—हे यदूनां नाथ ! यामिनी रात्रिः । अपैति । निद्रां विमुञ्च । अपैतु यामिनी, किमर्थं निद्रा मोक्तव्या, तत्राह—उन्मेषमिति । तव परमेश्वरस्य। उन्मिषितेन उन्मेषणेन, भावे क्तः। विश्वं अखिलं। उन्मेषं। ऋच्छति प्राप्नोति । अतस्तदुन्मेषाय निद्रा मोक्तव्येति भावः । मा भूद्विश्वस्योन्मेषस्तत्राह—जात इति । जगतां हितमेव । कर्तुं । एवकारस्तदेकप्रयोजनत्वं सूचयति । धर्मप्रवर्तनधिया जगद्धितोपयोगिनो धर्मस्य प्रवर्तनबुद्ध्या । धरणितले । त्वं । स्वयमेव खलु, न तु स्वस्यानिच्छायां परप्रवर्तनमात्रेण । जातः आविर्भूतः । अतस्त्वदुद्देश्यलोकधर्मप्रवृत्त्यर्थं जगदुन्मेषणं भाव्यमिति भावः ॥ २ ॥

अश्रान्तसन्ततिभिराभरणप्रकाशैः
आरात्रिकं प्रमुखयन्त्य इवोपचारम् ।
इच्छन्ति ते प्रथमदृष्टिमनन्यलभ्यां
पद्माननाः पद्[2]निवेशनधन्यहस्ताः ॥ ३ ॥

अश्रान्तेति—आरात्रिकमुपचारं नीराजनोपचारं । अश्रान्तसन्ततिभिः अविरतप्रसरणैः । आभरणप्रकाशैः भूषाणामालोकैः । प्रमुखयन्त्यः

---

[1] मिच्छति—झ.  [2] निवेशितधन्य—झ. ग्र. मु.

प्रमुखं कुर्वत्यः, पुरस्कुर्वत्य इव स्थिताः । [1]पदनिवेशनेन त्वच्चरणयोरुपरि विन्यसनेन धन्याः सुकृतिनो हस्ता यासां ताः। पद्माननाः पद्मतुल्यवदनाः, उत्तमस्त्रियः । ते तव । अनन्यलभ्यां अन्यैरल्पपुण्यैरलभ्यां । प्रथमदृष्टिं योगनिद्रया प्रसन्नमाद्यं नेत्रपातं । इच्छन्ति । अतस्तासां मनोरथपूरणायाप्युन्मिषितव्यमिति भावः ॥ ३ ॥

वृद्धाः कथञ्चिदररं व्यतिभिद्य हैमं
दौवारिकास्तव गृहीतसुजातवेत्राः ।
निर्गच्छतः प्रविशतश्च निशामयन्तो
नाथ त्वदेकहृदया न भजन्ति [2]तन्द्रीम् ॥ ४ ॥

वृद्धा इति—हे नाथ । गृहीतसुजातवेत्राः उपात्तरम्यवेत्राः । वृद्धाः स्थविराः, अन्तःपुरसन्निहितत्वात्। [3]हैमं हिरण्मयं । अररं कवाटं । " कवाटमररं तुल्ये " इत्यमरः । कथंचित् व्यतिभिद्य वार्धकेनाशक्ततया कृच्छ्रादुद्घाट्य । निर्गच्छतः । प्रविशतश्च । जनान् । निशामयन्तः विरलालसजनत्वात् चौर्यादिशङ्कया पश्यन्तः । तव । दौवारिकाः द्वारे नियुक्ताः । त्वदेकहृदयाः त्वय्येकस्मिन् हृदयं येषां ते तथाभूताः, त्वन्निर्गममेव प्रतीक्षमाणास्सन्तः। तन्द्रीं प्रमीलां । न भजन्ति । तन्द्रीशब्दः क्षीरस्वामिप्रभृतिभिः ईकारान्त उक्तः । केचित् ' विभज्य नक्तंदिवमस्ततन्द्रिणा ' (किराता. १–९) इत्युदाहृत्य ह्रस्वेकारान्तमप्याहुः । [4]" निद्रातन्द्राश्रद्धाभ्यः ' इति सौत्रनिर्देशादाबन्तपाठोऽपि साधुः । दौवारिका इति " तत्र नियुक्तः " (पा. सू. ४–४–६९) इति ठक्प्रत्ययः । ' द्वारा-

---

[1] पदनिवेशितधन्यहस्ताः पदयोस्त्वच्चरणयोः निवेशितेन निवेशनेन विन्यसनेन–घ. ट. [2] तन्द्रां–दे. मु. [3] हैमं हेममयं.–ङ. [4] स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ' (पा. सू. ३–२–१५८) इति सूत्रमत्र बोध्यम्.

दीनां च' (पा. सू. ७-४-४) इत्यैजागमः। त्वदेकहृदया इति एक-शब्दसमासानन्तरं त्वच्छब्दस्य शिवभागवतवत्समासः ॥ ४ ॥

विश्वैकतीर्थभजनेन विशुद्धिमन्तो
निद्रोज्झिता निगमसीम्नि निशात्यये च।
वैतानिकान् विधिवशेन विहृत्य वह्नीन्
पुण्याशयाः परिचरन्ति पुरोधसस्ते ॥ ५ ॥

विश्वेति--विश्वस्य एकं मुख्यं तीर्थं भगवानेव परमपावनत्वात् तस्य भजनेन। विशुद्धिमन्तः विशेषेण नद्यादिस्नानमात्रशुद्धेभ्योऽतिशयेन शुद्धिमन्तः। निगमसीम्नि वेदान्ते। निशात्यये उषसि च। निद्रोज्झिताः, निद्रा पूर्वस्मिन् अबोधः, उत्तरस्मिन् सुप्तिः, तद्रहिताः। पुण्याशयाः पुण्यकृतान्तःकरणाः, शमैकनिरतचित्ताः, शुद्धान्तःकरणा वा। ते तव पुरोधसः पुरोहिताः। विधिवशेन 'प्रातर्जुहोति' इति विध्यायत्ततया। वैतानिकान्—वितानः यज्ञः, तत्प्रयोजनकान्। वह्नीन् आहवनीयादीन्। विहृत्य प्रणीय। परिचरन्ति वरिवस्यन्ति। "वितानो यज्ञविस्तारलाभेषु कृतकर्मणि" इति विश्वः। ततः 'प्रयोजनम्' (पा. सू. ५-१-१०९) इति सूत्राट्ठक्प्रत्ययः। पुरोधस इति छत्रिन्यायादजहल्लक्षणया पुरोधसस्तदन्ये च द्विजातय उक्ताः। अन्यथा 'पुरोहितं वृणीते' इत्येकत्वस्य विवक्षितत्वादेकस्य राज्ञः पुरोहितबहुत्वाभावेन बहुवचनं नोपपद्येत ॥ ५ ॥

निद्रावशेन निभृतेक्षणमुत्थितानां
द्वित्राणि मन्थरपदान्यपगत्वरीणाम्।
काले गृहीतमुचिते रशनाः कथं चित्
मौनव्रतं जहति मुग्धवधूजनानाम् ॥ ६ ॥

निद्रेति—निद्रावशेन निद्रायत्ततया। निभृतानि निश्चलानि

विषयेषु [1]प्रसररहितानि ईक्षणानि यस्मिन् कर्मणि यथा तथा। उत्थितानां। द्वित्राणि द्वे त्रीणि वा मानं येषां तानि। मन्थरपदानि मन्दानि चरणविन्यसनानि। अपगत्वरीणां अपसृतवतीनां। मुग्धवधूजनानां। रशनाः काञ्च्यः। उचिते काले निद्रासमये। गृहीतं। मौनव्रतं निश्शब्दत्वं। कथं चित्। जहति त्यजन्ति। कथंचिदित्यनेन बाल्यस्वभावप्रयुक्तया वृत्त्या प्रथमपदविन्यासानामतिमान्द्यं क्रमेणालस्यापायात् गमनाभिव्यक्तिर्द्योत्यते। द्वित्राणीति 'सङ्ख्ययाऽव्ययासन्न' (पा. सू. २-२-२५) इत्यादिना बहुव्रीहिसमासः। 'गत्वरश्च' (पा. सू. ३-२-१६४) इति गमेरनुनासिकलोपः, क्वरप् प्रत्ययश्च निपातितः। स च 'अनुपसर्गाल्लिम्पविन्द' (पा. सू. ३-१-१३८) इत्यादि ज्ञापकात् सोपसर्गादपि भवति। अतोऽपगत्वरशब्दस्साधुः। क्वरबन्तात् ङीप्॥६॥

सन्त्यज्यत तरलमौक्तिकजालदृश्यैः
तारागणैस्त्रिदशवर्त्म तमालनीलम्।
पद्मापतेरमृतनिर्मथनावसाने
दुग्धाम्बुराशिपृषतैरिव रूपमग्र्यम्॥ ७॥

**सन्त्यज्यत इति**—तमालनीलं तापिञ्छाश्यामलं। त्रिदशानां वर्त्म गगनं। तरलमौक्तिकजालदृश्यैः भास्वराणां चञ्चलानां वा मुक्ताफलानां निकरवद्दर्शनीयैः। [2]'तरलं चञ्चलं छिद्रे हारमध्यमणावपि' इति विश्वः। तारागणैः नक्षत्रनिकरैः। संत्यज्यते। कथमिव—पद्मापतेः पुरुषोत्तमस्य। अग्र्यं श्रेष्ठं। रूपं। अमृतनिर्मथनस्यावसाने। दुग्धाम्बुराशेः क्षीरोदस्य। पृषतैः बिन्दुभिरिव। निर्मथनानन्तरं बिन्दवो नोद्भवन्ति। पूर्वलग्नाश्च शुष्यन्तीति भावः॥ ७॥

---

[1] प्रसरणरहितानि—ङ. [2] 'तरलं चञ्चले षिङ्गे हारमध्यमणावपि। भासुरे च' इति मुद्रितविश्वकोशे दृश्यते 'तरलं चपले च्छिद्रे—ङ.

नाथ स्फुरन्त्युपयति द्युमणिप्रकाशे
न ज्योतिरिङ्गणगणा न च तारकाद्याः ।
तेजस्विनोऽपि तमसैव समृद्धिमन्तः
त्वत्सन्निधौ मुषितभास इव त्वदन्ये ॥ ८ ॥

**नाथेति**—नाथ! द्युमणेः सूर्यस्य प्रकाशे। उपयति समागच्छति सति। ज्योतिरिङ्गणगणाः खद्योतसङ्घाः। "खद्योतो ज्योतिरिङ्गणः" इत्यमरः। न स्फुरन्ति न प्रकाशन्ते। न च तारकाद्याः—तारकाः अश्विन्यादयः, आदिशब्देन ग्रहतारादयो गृह्यन्ते, तेऽपि न स्फुरन्ति। उक्तमर्थमर्थान्तरन्यासेन समर्थयते—तेजस्विनोऽपि, केचित् पदार्था इति शेषः। तमसा अन्धकारेणैव। समृद्धिमन्तः। कथमिव—त्वत्सन्निधौ। मुषितभासः अपहृतभासः। त्वदन्ये तव असदृशाः, त्वद्भिन्ना वा त्वद्द्विष इव। 'अन्यौ विभिन्नासदृशौ' इति यादवः। तेऽपि तेजस्विनः प्रभाववन्तोऽपि तमोगुणेनैव समृद्धिमन्त इति भावः॥ ८ ॥

आनर्तितान् सललितं दिवसावसाने
वाचालरत्नवलयैर्निजहस्ततालैः ।
निद्रालसान् मृगदृशो गृहनीलकण्ठान्
आवासयष्टिशिखरादवरोहयन्ति ॥ ९ ॥

**आनर्तितानिति**—मृगदृशः मृगाणां दृश इव दृशो यासां ताः, उत्तमस्त्रियः। दिवसस्यावसाने। वाचालरत्नवलयैः शिञ्जानमणिकटकैः। निजहस्ताः ताला वाद्यविशेषा इव तैः। सललितं सलीलं आनर्तितान्। अत एव श्रमात् निद्रालसान्। गृहाणां नीलकण्ठान् मयूरान्। आवासयष्टीनां शिखरात् अग्रात्। अवरोहयन्ति। [1] वाचालशब्दस्य आऽऽजन्तत्वे शब्दस्य

[1] वाचालेत्यस्य—ङ,

गर्हितत्वं प्रतीयेत । "स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्" [1] इत्यनुशासनात् । अतो वागेव वाचा । [2] "आपं चापि हलन्तानां" इत्याबन्तता, तां लान्ति ददत इति [3] 'ला दाने' (अदादि १०४८) इति धातोः 'आतोऽनुपसर्गे कः' (पा. सू. ३–२–३) इति कप्रत्ययान्तताऽनुसर्तव्या ॥ ९ ॥

**नृत्यन्त्युदीरितघनस्तनितामकाण्डे**
**नेदीयसीं तव निशम्य विभातनान्दीम् ।**
**चित्रातपत्रपरिमण्डलचारुबर्हाः**
**शृङ्गारयोनिशरपत्ररुचो मयूराः ॥ १० ॥**

**नृत्यन्तीति**—अकाण्डे अनवसरे । उदीरितघनस्तनितां उत्थापितमेघनिर्घोषां, मेघनिर्घोषतुल्यं प्रतिध्वनिमुत्पादयन्तीमिति यावत् । नेदीयसीं सन्निकृष्टतरां । तव । विभातनान्दीं प्राभातिकमङ्गलपाठं । निशम्य । चित्रं नानावर्णं आतपत्रमिव परिमण्डलं परितो मण्डलाकारं चारु बर्हं येषां तथाभूतास्सन्तः । शृङ्गारयोनिशरपत्ररुचः मन्मथबाणतुल्यपक्षप्रभा । मयूराः । नृत्यन्ति। मयूराणामुद्दीपनविभावत्वात् शृङ्गारयोनिशरेतिविशेषणग्रहणम् । "कामश्शम्बरसूदनो मनसिजश्शृङ्गारयोनिस्स्मरः" इति हलायुधः ॥ १० ॥

**निर्गत्य चित्रगरुतो निलयान्तरेभ्यः**
**तारस्वनास्तरुणविद्रुमताम्रचूडाः ।**
**रत्नाङ्कणेषु रमणीभिरवेक्ष्यमाणाः**
**क्रीडारणं विदधते कृकवाकुवर्याः ॥ ११ ॥**

**निर्गत्येति**—चित्रगरुतः नानावर्णपतत्त्राः । तारस्वनाः अत्युच्च-

---

1 वाक्शब्दात् आलजाटज्विधायके 'आलजाटचौ बहुभाषिणि' (पा. सू. ५–२–१२५) इति सूत्रे 'कुत्सित इति वक्तव्यम्' इति वार्तिकस्य दर्शनाच्चेत्यपि बोध्यम्.
2 'आपं चैव हलन्तानां' इति सिद्धान्तकौमुद्याम्. 3 अतएव सिद्धान्तकौमुद्यां 'ला आदाने' इत्युक्त्वा 'द्वावपि दाने इति चन्द्रः' इत्युक्तम्.

शब्दाः। तरुणविद्रुमताम्रचूडाः नवप्रवालारुणशिखाः। "तरुणस्स्यान्नवे यूनि" इति विश्वः। कृकवाकुवर्याः कुक्कुटमुख्याः। निलयान्तरेभ्यः गृहान्तरेभ्यः। निर्गत्य। रत्नाङ्कणेषु मणिचत्वरेषु। रमणीभिरवेक्ष्यमाणाः सन्तः। क्रीडारणं विदधते क्रीडायुद्धं कुर्वन्ति ॥ ११ ॥

प्राप्तास्तुलां हरितकोमलबाह्यपत्रैः
किञ्चित्परिस्फुरितशोणमुखैस्सरोजैः।
वामभ्रुवां वलयपङ्क्तिषु सञ्चरन्त्यो
मञ्जु क्वणन्ति मणिपञ्जरशारिकास्ते ॥ १२ ॥

प्राप्ता इति—हरितानि पालाशवर्णानि कोमलानि मृदुलानि बाह्यपत्राणि येषां तैः। किञ्चित्परिस्फुरितशोणमुखैः ईषदुच्छ्वसितारुणाग्रैः। सरोजैः। तुलां सादृश्यं। प्राप्ताः। वामभ्रुवां रुचिरभ्रुवां, नतभ्रुवां वा स्त्रीणां। वलयपङ्क्तिषु प्रकोष्ठवलयराजिषु। सञ्चरन्त्यः। ते तव। मणिपञ्जरशारिकाः रत्नपञ्जरेषु संवर्धिताः शुकाङ्गनाः। मञ्जु यथा तथा। क्वणन्ति शब्दायन्ते। शारिकाः पक्ष्यन्तराणीत्यप्याहुः ॥ १२ ॥

प्रत्यक्षिते तमसि यास्यति विप्रकर्षं
[1]सञ्छन्नभानुमति सम्प्रति जीवलोके।
गङ्गायमानसलिलं निजरश्मियोगात्
सिष्णासयेव सितभानुरुपैति सिन्धुम् ॥ १३ ॥

प्रत्यक्षित इति—सम्प्रति इदानीं। प्रत्यक्षिते प्रत्यक्षीकृते, सञ्जातप्रत्यक्षे वा। तमसि अन्धकारे। विप्रकर्षं यास्यति अदृश्यतां गमिष्यति सति। जीवलोके मर्त्यलोके। "मर्त्यलोको जीवलोकः" इति यादवः।

---

[1] संछि(भि)न्न. अ-दे-मु.

सञ्छन्नभानुमति तिरोहितसूर्ये च सति। सितभानुः शुभ्रकिरणः, चन्द्रः। निजरश्मियोगात् स्वकिरणसम्पर्कात्। गङ्गायमानसलिलं गङ्गावदाचरद्धवलं सलिलं यस्य तं। सिन्धुं पश्चिमसमुद्रं। सिष्णासया स्नातुमिच्छयेव। उपैति। प्रत्यक्षित इत्यादिना सूर्योपरागसमयोऽपि प्रतीयते। तत्र तमो राहुः। 'तमस्तु राहुस्स्वर्भानुः' इत्यमरः। स चाप्रत्यक्षोऽप्युपरागसमये प्रत्यक्षो भवति। तदा च गङ्गास्नानं विहितम्।

गङ्गास्नानं प्रकुर्वीत ग्रहणे चन्द्रसूर्ययोः।
[1]महानदीषु वाऽन्यासु स्नानं कुर्याद्यथाविधि॥

इति। तदर्थोपजीवनेन हेतूत्प्रेक्षा। सिष्णासयेति आदेश[2]सकारत्वात् षत्वम्॥ १३॥

**प्रत्यूषघर्मसमयेन समग्रधाम्ना**
**शोषं व्रजत्यमृतरश्मिमयूखपूरे।**
**अह्नाय कैश्चिदभिघातमवाप्नुवत्यः**
**ताराः प्रयान्ति विलयं तनुबुद्बुदाभाः॥ १४॥**

**प्रत्यूषेति**—समग्रधाम्ना [3]बहुलतेजसा। प्रत्यूष एव घर्मसमयो निदाघः तेन। अमृतरश्मिमयूखपूरे चन्द्रकिरणानां बृंहणे। शोषं। व्रजति सति। तनुबुद्बुदाभाः सूक्ष्मबुद्बुदतुल्याः। ताराः नक्षत्राणि। अह्नाय शीघ्रं। कैश्चित् प्रथममाविर्भूतैरल्पैरुदेष्यतः सूर्यस्य किरणैः। अभिघातं। अवाप्नुवत्यः सत्यः। विलयं। प्रयान्ति। यथा जलपूरे शुष्यति बुद्बुदाः कैश्चिदभिघातं प्राप्य नश्यन्ति, तद्वदिति भावः॥ १४॥

---

[1] तथा नदी–घ. [2] सकारस्य षकारः–घ. [3] वहल–घ.

**पत्युस्त्विषां प्रजहतः प्रथमाब्धितल्पं**
**सन्ध्यासरोरुहदृशः प्रथमोत्थितायाः ।**
**सीमन्तिते तिमिरकुन्तलमध्यभागे**
**सिन्दूरराजिरिव भाति मयूखरेखा ॥ १५ ॥**

**पत्युरिति**—प्रथमाब्धिं पूर्वसमुद्रमेव तल्पं । विजहतः त्यजतः । त्विषां पत्युः आदित्यात् । प्रथमोत्थितायाः पूर्वमुत्थितायाः, भर्तुः प्रागेव स्त्रीणां शयनादुत्थानविधानादिति भावः । सन्ध्यैव सरोरुहदृक् तस्याः । सीमन्तिते सञ्जातसीमन्ते । "सीमन्तः कथ्यते स्त्रीणां केशमध्ये तु पद्धतिः" इति विश्वप्रकाशः । तिमिराणि तमांस्येव कुन्तलाः केशाः, तेषां मध्यभागे । सिन्दूरराजिः अरुणचूर्णविशेषपङ्क्तिरिव । मयूखरेखा । भाति । मयूखरेखोदये तद्देशः तमसोऽपसरणात् सीमन्तत्वेनाध्यवसितः ॥ १५ ॥

**ज्योत्स्नापदेशमवधूय सितोत्तरीयं**
**स्तोकावशेषितसदाभरणप्रबन्धा ।**
**अङ्गीकरोत्यरुणभावितमङ्गरागं**
**प्राची दिशा दिनपतिं परिभोक्तुकामा ॥ १६ ॥**

**ज्योत्स्नेति**—दिनपतिं परिभोक्तुकामा आदित्यसम्भोगमिच्छन्ती । प्राची दिशा। ज्योत्स्नेत्यपदेशः व्याजो यस्य तत् । सितोत्तरीयं। अपनीय । स्तोकावशेषितः अल्पावशेषीकृतः सतां नक्षत्राणामेव आभरणानां प्रबन्धः समूहो यया तथाभूता सती । अरुणभावितं सूर्यसारथिना संपादितं । अङ्गरागं स्वाङ्गारुणिमानं । अङ्गीकरोति । [1] . . . , इच्छन्ती नायिका स्तनोत्तरीयं विस्रस्य विलेपनसौकर्यायाभरणानि विरलीकृत्य

[1] अत्र 'यथा नायकोपभोगं' इत्यर्थकेन ग्रन्थेन भाव्यमिति भाति ।

कुङ्कुमादिभिः अरुणं भावितं वासितं चाङ्गरागमङ्गीकरोति, तद्वदिति भावः । इह प्राच्या भविष्यन्नादित्यसम्पर्कः तत्सम्भोगत्वेन, तत्कालसन्निकर्षः तदिच्छात्वेन चाध्यवसितः।[1] "भं नक्षत्रं तारकं च सत्" इति यादवः ॥ १६ ॥

**निर्णिज्य सम्प्रति निशाङ्गनिवेशलग्नं**
**कालेयपङ्कमिव सन्तमसं कलङ्कम् ।**
**क्षोणीभृतामरुणदीधितयोऽनुरक्ताः**
**पादानलक्तकरसैरिव रञ्जयन्ति ॥ १७ ॥**

**निर्णिज्येति**—सम्प्रति। अनुरक्ताः शोणवर्णाः। अरुणस्य दीधितयः। क्षोणीभृतां पर्वतानां। पादान् प्रत्यन्तपर्वतान्।[2] . . निशायोग एव तदङ्गनिवेशत्वेनाध्यवसितः। सन्तमसं विष्वक्तमन्धकारमेव । कलङ्कं मालिन्यं। कालेयपङ्कमिव, कालेयं कृष्णवर्णः सुगन्धद्रव्यविशेषः[3] . . . . . . . . तस्य पङ्कमिव । निर्णिज्य संशोध्य। अलक्तकरसैः यावकद्रवैरिव। रञ्जयन्ति। यथा राज्ञामङ्घ्रीन् रतविशेषेषु नायकाङ्गसंयोगेन कालेयपङ्कमलिनितान् अनुरक्ताः प्रणयवत्यः प्रसाधिकाः [4]पादान् निर्णिज्य यावकद्रवै रञ्जयन्ति, तद्वदिति भावः॥ १७ ॥

**प्रादुर्भविष्यति चराचरजन्तुवर्गे**
**प्राप्ताऽरुणेन विधुना तमसा च वेला ।**
**आभाति भवितपरस्परलेश[2]योगा**
**मायाविपक्तिरिव लोहितशुक्लकृष्णा ॥ १८ ॥**

**प्रादुर्भविष्यतीति**—चराचरजन्तुवर्गे जङ्गमस्थावरात्मकप्रा-

---

[1] 'सन्नक्षत्रमुडुर्न ना' इति यादवः–ङ. च. अयमेव पाठो मुद्रितयादवकोऽशेऽपि दृश्यते. [2] इत आरभ्य 'मलिनितान्' इत्यन्तो ग्रन्थः ङ कोशभिन्नेषु गलितः. [3] योगान्माया.–ग्र. मु. अत्र 'निशाया अङ्गनिवेशेन लग्नं' इति पाठेन भाव्यमिति भाति
[3] अत्र 'मृगमदाख्यः' इत्यर्थकग्रन्थेन भाव्यमिति भाति. [4] अत्र 'पादान्' इतीदमधिकमिति भाति.

णिसङ्गे। प्रादुर्भविष्यति सूर्योदयानन्तरं व्यक्तीभविष्यति सति। उपमान-पक्षे--जनिष्यति चराचरजन्तुवर्गे जङ्गमस्थावरात्मक इति योज्यम्। अरुणेन सूर्यसारथिना। विधुना चन्द्रेण। तमसा अन्धकारेण च। प्राप्ता। वेला प्रत्यूषवेला। भावितः प्राप्तः परस्परस्य लेशानां रजस्सत्वतमोगुणैक-देशानां योगो यस्यां सा। अत एव लोहितशुक्लकृष्णा। 'वर्णो वर्णेन' (पा.सू. २-१-२९) इति समासः। मायाविपक्तिः प्रकृतेः परिणतिरिव। आभाति। निखिलकल्पनिदानभूताया गुणत्रयरूपायाः प्रकृतेः तत्तत्कल्पादौ जगत्सृष्ट्यर्थं गुणत्रयैकदेशसंयोजनेन जाता परिणतिरिव भातीत्यर्थः ॥ १८ ॥

**उन्निद्रपद्मनयनस्सुभगोत्पलाभः**
**सम्भावितो मुनिगणैरुपपन्नबोधैः।**
**रागोत्तरां श्रियमवाप्य रथाङ्गशोभी**
**जातस्स एष समयो जगदेकसेव्यः ॥ १९ ॥**

**उन्निद्रेति**—उन्निद्राणि पद्मानि नयनानीव यस्मिन् स तथोक्तः। सुभगोत्पलाभः सुभगानां चक्षुष्याणां उत्पलानां इन्दीवराणां आभा यस्य स तथोक्तः। उपपन्नबोधैः संपन्ननिद्रावसानैः। मुनिगणैः।सम्भावितः उपासितः। रथाङ्गशोभी चक्रवाकैः शोभमानः, तदा तेषां प्रहर्षात्। स एष समयः प्रभातकालः। रागोत्तरां अरुणिमभूयिष्ठां। श्रियं शोभां। अवाप्य। जगतां एकः मुख्यः सेव्यः जातः। सर्वेषामाह्लादकत्वात् जगत्सेव्यत्वोक्तिः। इन्दीवराणां प्रभाते विकासः कविसमयसिद्ध इत्युपपादितं द्वितीयसर्गे (यादवाभ्युदये--२-४८ श्लो.) अत्र विशेषणसाम्येन प्रभातस्य नारायणरूपत्वमभिसंहितम्। तत्पक्षे--उन्निद्रपद्मनयनः विकसित-पुण्डरीकनिभलोचनः, श्यामलत्वात्सुभगोत्पलाभः, उत्पन्नतत्त्वज्ञानैः नारदादिभिः सम्भावितः, रथाङ्गेन सुदर्शनेन शोभमानः, रागोत्तरां

[1]प्रेमभरितां, श्रियं लक्ष्मीं अवाप्य, जगदेकसेव्यो जातः, इति योजनीयम् । भक्तेषु भगवदाभिमुख्यापादिकया पुरुषकाररूपया लक्ष्म्या विशिष्टस्यैव सेव्यत्वात् श्रियमवाप्य सेव्यो जात इति वचनभङ्ग्युपपत्तिः ॥ १९ ॥

**नीतश्श्रमं निहतरात्रिवरूथिनीकः**
**चन्द्रातपत्रविनिपातविलुप्तभूमा ।**
**प्रत्यूषवैरिविभवेन पराहतात्मा**
**कालप्रतीक्ष इव गच्छति कामवीरः ॥ २० ॥**

**नीत इति**—श्रमं नीतः श्रान्तिं प्रापितः, आप्रभातं कामयुद्धानुवृत्त्येति भावः । निहता रात्रिरेव वरूथिनी यस्य स तथोक्तः । 'नद्यृतश्च (पा. सू. ५–४–१५३) इति कप्प्रत्ययः । चन्द्र एवातपत्रं तस्य विनिपातेन विलुप्तभूमा नष्टमहिमा । आतपत्रनिपातो राज्ञामश्रीकर इति [2]प्रसिद्धिः । प्रत्यूष एव [3]वैरी प्रतिनृपः तस्य विभवेन बलसमृद्ध्या । पराहतात्मा अभिभूतरूपः । काम एव वीरः । कालप्रतीक्षः स्वस्य समृद्धिकालं पुनरपि रात्रिं प्रतीक्षमाण इव । गच्छति। कालानुसारेण प्रबलाक्रान्तस्य परावृत्तिरुचितेति भावः ॥ २० ॥

**योऽसौ जनस्य दिशतीव सुधानिधानं**
**जातध्वनिश्श्रुतिषु जागरदुन्दुभिस्ते ।**
**मन्ये स एव मदनस्य निशाचरस्य**
**स्वच्छन्दसौप्तिकनिवृत्तिमभिव्यनक्ति ॥ २१ ॥**

**योऽसाविति**—जातध्वनिः सञ्जातध्वानः । योऽसौ प्रसिद्धः। ते तव। जागरदुन्दुभिः [4]प्रबोधार्था भेरी । जनस्य लोकस्य । श्रुतिषु श्रोत्रेषु। सुधानिधानं अमृतनिधिं । दिशतीव प्रयच्छतीव, तथाऽऽह्लादकरो वर्तत

[1] प्रेमपूरितां–घ. च. [2] प्रसिद्ध–घ. [3] वैरी नृपतिः तस्य–घ. [4] प्रबोधार्थभेरी–घ.

इत्यर्थः । स एव दुन्दुभिः । निशाचरस्य रात्रौ सञ्चरतो मदनस्य स्वच्छन्दसौप्तिकनिवृत्तिं रात्रौ यथेष्टं कृतस्य [1] छलादाक्रमणस्य परावृत्तिं। अभिव्यनक्तीति । मन्ये । जयदुन्दुभिरिवेत्युत्प्रेक्षा । 'अवस्कन्दः प्रपातश्च सौप्तिकश्च निगद्यते, इति हलायुधः ॥ २१ ॥

अन्तर्बहिश्च तमसा परिमुच्यमाने
जागर्यया जगति सम्प्रति दीप्यमाने ।
पञ्चायुधश्चिरपरिश्रमशान्तिमिच्छन्[2]
निद्रामुपैति हृदयेषु नितम्बिनीनाम् ॥ २२ ॥

अन्तरिति—अन्तर्बहिश्च तमसा परिमुच्यमाने अन्तस्तमो निद्रालस्यं, बहिस्तमोऽन्धकारः, तेनोभयेन त्यज्यमाने । जगति । सम्प्रति इदानीं । जागर्यया जागरेण । दीप्यमाने प्रकाशमाने सति । पञ्चायुधः कामः । चिरपरिश्रमशान्तिं चिरसौप्तिकश्रान्तेः प्रशमं । इच्छन् सन् । नितम्बिनीनां प्रशस्तनितम्बानां स्त्रीणां । हृदयेषु । निद्रां उपैति, विजृम्भण-रहितो निलीनो वर्तत इत्यर्थः । यथा चोरवृत्त्या रात्रौ सौप्तिकं कुर्वन् जनेषु प्रबुध्यमानेषु प्रतिनिवृत्तः श्रमापनोदाय क्वचिद्गुहादिषु संछन्न-प्रदेशेषु शेते, तद्वदिति भावः ॥ २२ ॥

अग्रे भवन् गुरुरिव स्वयमानकानां
आदिष्टसम्पदिव कन्धरया तवैषः ।
व्यक्तप्लुतेन निनदेन विशुद्धवर्णः
प्रस्तौति नाथ निगमान् प्रति[3]बोधशङ्खः ॥ २३ ॥

अग्र इति—हे नाथ ! गुरुः वेदाध्यापक इव । आनकानां

[1] बला—घ. [2] चिरमविश्र(क)मशान्तिमिच्छन्. ग्र. दे. मु. [3] बोधनार्हः—ग्र.म

पटहानां, शिष्यस्थानीयानां। अग्रे भवन् पुरतो भवन्। तव। कन्धरया कण्ठेन। आदिष्टसम्पत् उपादिष्टध्वानिसमृद्धिक इव स्थितः, त्वत्कण्ठानुसारिध्वनिरित्यर्थः। गुरोरप्यध्ययनसम्पत्तिः कुताश्चिदुपदेशापेक्षेति भावः। विशुद्धवर्णः अतिधवलः, ब्राह्मणश्च, तस्यैवाध्यापनाधिकारात्। एषः। प्रतिबोधशङ्खः [1]प्रतिबोधनार्थशङ्खः। व्यक्तप्लुतेन निनदेन स्फुटेन दीर्घतरेण च ध्वनिना, स्फुटमात्रेण प्लुतेन। ' ओमभ्यादाने ' (पा. सू. ८-२-८७) इति वेदारम्भविहितेन ओङ्कारेणेत्यपि गम्यते। निगमान् स्वयं प्रस्तौति वेदानारभत इवेत्युत्प्रेक्षा। सा च वाचकस्य इवादेरप्रयोगात्, अग्रेभवन्नित्याद्यध्यापकसाधारणधर्मरूपनिमित्तोपादानाच्च गम्या। निगमारम्भसम्बन्धाभावेऽपि तत्सम्बन्धवर्णनरूपातिशयोक्तिर्वा ॥ २३ ॥

**मुग्धाः स्वमुष्टिपरिमेयमनोज्ञमध्याः**
**पर्यायचापलतिका इव पञ्चबाणः।**
**प्रास्थानिकप्रणयदुर्विनयोपशान्त्यै**
**प्रत्यक्षयन् प्रतिनिवर्तयतीव यूनः ॥ २४ ॥**

**मुग्धा इति**—पञ्चबाणः कामः। प्रास्थानिकप्रणयः प्रस्थानप्रयोजनकं गमनानुज्ञानप्रार्थनं स एव दुर्विनयः औद्धत्यं, कामाज्ञालङ्घनरूपत्वात्, तस्योपशान्त्यै। स्वमुष्टिभिः परिमेयं मनोज्ञं मध्यं यासां ताः। मुग्धाः सुन्दरीः। पर्यायचापलतिकाः तत्तज्जेतव्ययुवविषये पर्यायेण ग्राह्या धनुर्लता इव। ता अपि मुष्टिग्राह्यमध्या इति भावः। प्रत्यक्षयन् प्रत्यक्षीकुर्वन्। यूनः। प्रतिनिवर्तयतीव। यथा नियन्तारः स्वाज्ञालङ्घनप्रवृत्तान् आयुधप्रदर्शनेन त्रासयित्वा प्रतिनिवर्तयन्ति, तद्वदिति भावः। अङ्गनासु प्रस्थानाभ्यनुज्ञार्थनाय प्रवृत्ता युवानस्तासां तत्कालकान्तिं दृष्ट्वा जातरागाः प्रतिनिवर्तितुमिच्छन्तीत्यर्थः ॥ २४ ॥

---

[1] प्रतिबोधार्थ–घ.

**अन्तश्चकासदसितोत्पलमङ्कयोगात्**
**भासोन्मदेव परिमीलिततारकार्धा ।**
**निष्पीतकान्तिमकरन्दरसं प्रतीच्यां**
**नीहारभानुचषकं निदधाति सन्ध्या ॥ २५ ॥**

**अन्तरिति**—भासा अरुणप्रभया । उन्मदा उन्मदिष्णुरिव स्थिता, मदारुणेव स्थितेति यावत् । परिमीलिततारकार्धा अस्तमित-नक्षत्रैकदेशा । सन्ध्या । अङ्कयोगात् कलङ्कयोगात् । अन्तश्चकासदसितो-त्पलं अन्तर्लसदिन्दीवरं । निष्पीतः कान्तिरेव मकरन्दरसः यस्य तं । नीहार-भानुं चन्द्रमेव चषकं पानपात्रं । प्रतीच्यां । निदधाति । "चषकोऽस्त्री पान-पात्रम्" इत्यमरः । यथा इन्दीवरवासितं चषकनिहितं मद्यं निपीय तदैव मदारुणा निमीलितकनीनिकार्धा च [1]वनिता अधिवासनेन्दीवर-शेषं चषकं क्वचिन्निदधाति, तद्वदित्यर्थः ॥ २५ ॥

**दृष्ट्वा निमीलितवतीं नियतिप्रभावात्**
**आत्मप्रियां कुमुदिनीमवधूतधामा ।**
**च्योतत्तुषारनयनोदकबिन्दुरिन्दुः**
**प्रस्थानमिच्छति महत्प्रतिपन्नदैन्यः ॥ २६ ॥**

**दृष्ट्वेति**—नियतिप्रभावात् दैवमाहात्म्यात् । निमीलितवतीं [2]मुकुलितां, मृतामित्यपि गम्यते । आत्म[3]प्रियां निजदयितां । कुमुदिनीं । दृष्ट्वा । अवधूतधामा त्यक्ततेजाः, [4]निर्वेदात् त्यक्तगृह इत्यपि गम्यते । च्योतन्तः तुषाराण्येव नयनोदकबिन्दवः अश्रुबिन्दवो यस्य स तथोक्तः । प्रतिपन्नदैन्यः प्राप्तग्लानिः । इन्दुः । महत् दीर्घं । प्रस्थानमिच्छति

---

[1] वनिता इन्दीवरशेषं–घ. [2] मुकुलितवती–घ ट. [3] प्रियां कुमुदिनी–घ. ट. [4] निर्वेदादित्यपि–घ. च. ट.

प्रत्यासन्नास्तमयो जात इत्यर्थः । पक्षे महाप्रस्थानं शरीरत्यागार्थो व्रतविशेषः ।

महाप्रस्थानयात्रा च कर्तव्या तुहिनोपरि ।
[1]आश्रित्य धैर्यं सत्यं च कृता स्वर्गप्रदा हि सा ॥

इति पुराणोक्तेः ॥ २६ ॥

**भोक्तुं दिवं निजवियोगविलुप्तदीप्तिं**
**प्रागेव तीव्ररुचिना प्रहितेव सन्ध्या ।**
**मालिन्ययोगमपनीय करावमर्शैः**
**प्रायो यथार्हमनुलिम्पति कुङ्कुमेन ॥ २७ ॥**

**भोक्तुमिति**—तीव्ररुचिना उष्णरुचिना सूर्येण । निजवियोगात् विलुप्तदीप्तिं क्षीणप्रभां । दिवं स्वमन्दिरस्थानीयां । भोक्तुं अधिवस्तुं । प्रागेव । प्रहिता प्रेषितेव स्थिता । तत्सज्जीकरणायेति भावः । सन्ध्या दासीस्थानीया । करावमर्शैः किरणप्रचारैः, हस्तसम्मार्जनैश्च । मालिन्ययोगं [2]सन्तमसयोगं, लूतातन्त्वाद्यवकरमालिन्ययोगं च । अपनीय । प्रायः नूनं । यथार्हं यथोचितं । भर्तुरावासरूपं प्रदेशं कुङ्कमेनानुलिम्पति । प्राग्भागे सन्ध्यारागस्य कुङ्कुमानुलेपनत्वेनोत्प्रेक्षा ॥ २७ ॥

**अर्धेन पाटलमनूरुकरानुषङ्गात्**
**अर्धान्तरेण मणिमेचकमन्तरिक्षम् ।**
**अस्पृष्टतापमधिरोहति निस्तमस्कं**
**संवीतपीतवसनेन तुलां त्वयैव ॥ २८ ॥**

**अर्धेनेति**—अनूरुकरानुषङ्गात् अरुणकिरणसम्पर्कात् । अर्धेन पाटलं एकदेशेनारुणं । अर्धान्तरेण । मणिमेचकं गारुडमणिनीलं ।

---

1 आश्रित्य सत्यं धैर्यं च—**च.** 2 सन्तमसयोगं लूतातन्त्वादियोगं—**च.**

अस्पृष्टतापं सौरतापरहितं। निस्तमस्कं अन्धकाररहितं। अन्तरिक्षं। संवीतपीतवसनेन परिहितपीताम्बरेण। त्वयैव। तुलां साम्यं। अधिरोहति। [1]अरुणपीतिम्नोरदूरविप्रकर्षात्साम्योक्तिः। त्वमपि तापत्रयास्पृष्टः, तमोगुणरहितश्चेति भावः॥ २८॥

पद्मापदाम्बुरुहयावक[2]पिङ्गभासा
भासा नितान्तमुदयान्तरितस्य भानोः।
आरज्यते गगनमद्य जगत्प्रसूतेः
नाभीसरोरुहभुवा रजसेव गात्रम्॥ २९॥

पद्मेति—उदयान्तारितस्य उदय[3]पर्वतव्यवहितस्य। भानोः सूर्यस्य। पद्मापदाम्बुरुहयावकपिङ्गभासा लक्ष्मीचरणाम्बुरुहालक्तकतेजसा। स्वतो लक्ष्मीपदाम्बुरुहं रक्तमिति तत्सम्भिन्नस्य अलक्तकस्य अत्यन्तरक्तत्वमभिप्रेत्य विशिष्टोपमानं कृतं। भासा दीप्त्या। अद्य इदानीं। गगनं। जगत्प्रसूतेः [4]जगज्जनकस्य नारायणस्य। नाभीसरोरुहभुवा नाभीपुण्डरीकप्रभवेन। रजसा परागेण। गात्रं तस्य शरीरमिव। आरज्यते समन्तात् रक्तं क्रियते। पद्मापदाम्बुरुहेत्यादि [5]रजसोऽपि विशेषणम्। सम्भोगविशेषेषु प्रणयकलहेषु वा भगवद्गात्रे संसृज्यमानस्य पद्मापदाम्बुरुहस्य यावकेन पिङ्गधाम्नेत्यर्थः। इदं च विशेषणं भगवन्नाभिपद्मं सिताम्भोजमिति पक्षे परागाणामारुण्यसम्पादनाय। रक्ताम्भोजमिति पक्षे त्वारुण्यातिशयसम्पादनायेति विशेषः॥ २९॥

दग्धुं तमो दनुजबृन्दमिवाम्बुराशेः
उत्तस्थुषो मधुरिपोरिव तिग्मधाम्नः।

---

[1] अरुणमणिपीतिम्नोरदूर—घ. च. [2] पिङ्गधाम्ना—घ. च. दे. मु. [3] पर्वतान्तर्हितस्य—घ. च. [4] जगत्प्रसूतिजनकस्य—घ. च. [5] रजसो विशेषणं—घ.

उन्मेषिणी सुमनसामुदिता पुरस्तात्
चक्रप्रभामनुकरोति मरीचिमाला ॥ ३० ॥

**दग्धुमिति**—तमः अन्धकारं। दनुजबृन्दं असुरनिकरमिव। [1]दग्धुं विशसितुं। अम्बुराशेः समुद्रात्। मधुरिपोः दुग्धोदशयस्य भगवत इव। उत्तस्थुषः उत्थितवतः। तिग्मधाम्नः सूर्यस्य। सुमनसामुन्मेषिणी कमलादिपुष्पाणां विकासिनी। पुरस्तात् प्राच्यां। उदिता। मरीचिमाला किरणराजिः। चक्रस्य सुदर्शनस्य। प्रभां। अनुकरोति। साऽपि सुमनसां देवानां उन्मेषिणी अभ्युदयकरीति भावः ॥ ३० ॥

दृष्टिद्वयं नियतकालमिदं प्रजानां
एका निमीलति तयोरितराऽप्यलक्ष्या।
तत्तादृशोस्तव दृशोर्युगपत्प्रबोधात्
आलोकयोगमनघं भजतां त्रिलोकी ॥ ३१ ॥

**दृष्टिद्वयमिति**—इदं चन्द्रसूर्ययुगलं। प्रजानां प्राणिनां। नियतकालं रात्रौ किञ्चित् दिवा किञ्चित् उपकारकमिति व्यवस्थितकालं। दृष्टिद्वयं नेत्रयुगलं। तयोः, मध्ये। एका चन्द्ररूपा दृष्टिः। [2]निमीलति। इतरा सूर्यरूपाऽपि दृष्टिः। अलक्ष्या अदृश्या। [3]प्राङ्निमीलितैवोन्मेषरहिता वर्तत इत्यर्थः। तत्तादृशोः तत्सदृशयोः चन्द्रसूर्यवत् जगत्प्रकाशकयोः। तादृक्शब्दस्य समानार्थः तत्तादृक्शब्दोऽप्यस्तीत्याहुः। अथवा तदिति स्वरूपपरामर्शः, तादृगिति प्रकारपरामर्शः, ततश्च प्रसिद्धस्वरूपमाहात्म्ययोरित्यर्थः। तव। दृशोः नयनयोः। युगपत्प्रबोधात्। त्रिलोकी। अनघं एकदृष्ट्या [4]विलोकन इव

---

[1] दग्धुं नाशयितुं–ङ. [2] निमीलितवती–घ. [3] प्राङ्निमीलितैवोन्मेषरहिता जातेत्यर्थः–घ. [4] प्राङ्विलोकनवैकल्य–घ.

वैकल्यदोषराहितं। आलोकयोगं प्रकाशसम्पर्कं। भजताम्। प्राप्तकाले लोट्। तद्भजनस्य प्राप्तः काल इत्यर्थः॥ ३१॥

प्राचीनशैलविषये प्रचुरांशुरेखां
सन्ध्यादशामरुणरागघृतावसिक्ताम्।
कालो निधाय सृजतीव शनैस्तदन्ते
तिग्मद्युतिं त्रिभुवनैकमहाप्रदीपम्॥ ३२॥

**प्राचीनेति**—कालः प्रभातसमयः। प्राचीनशैले उदयाद्रावेव विषये आश्रयस्तम्भे। प्रचुरा अंशुरेखाः किरणरेखा एव अंशुरेखाः तन्त्ववयवरेखाः यस्यास्ताम्। "अंशुस्सूत्रादि[1]सूक्ष्मांशेऽपि" इति यादवः। अरुणराग एव घृतं तेनावसिक्तां। सन्ध्यादशां [2]सन्ध्यावस्थामेव दशां वर्तिं। निधाय। तदन्ते तस्यास्सन्ध्यादशाया अवसान एवान्ते अग्रभागे। तिग्मद्युतिं सूर्यमेव। त्रिभुवनस्य एकं मुख्यं महान्तं प्रदीपं। शनैः। सृजतीव आरोपयतीव। श्लिष्टरूपकानुप्राणितोत्प्रेक्षालङ्कारः। कालस्य दीपारोपयितृपुरुषतादात्म्यप्रतीतेस्समासोक्तिश्च॥ ३२॥

पर्याप्तरश्मिनिकरेण सुवृत्तभूम्ना
सूर्येन्दुबिम्बयुगलेन समस्थितेन।
आभाति कालवणिजा परिकल्प्यमाना
नक्तंदिवक्षणतुलेव नभस्स्थलश्रीः॥ ३३॥

**पर्याप्तेति**—नभस्स्थलश्रीः गगनतलशोभा। पर्याप्तरश्मिनिकरेण समग्रकिरणसमूहेन, समग्रप्रग्रहसूत्रसमूहेनेत्यपि गम्यते। "किरण-

1 'सूक्ष्मांशे' इति—घ. 2 सन्ध्याख्यामेव—घ.

प्रग्रहौ रश्मी" इत्यमरः। सुवृत्तभूम्ना शोभनो वृत्तस्य मण्डलस्य भूमा वैपुल्यं यस्य तेन। उदयास्तमयप्रत्यासत्तौ सूर्येन्दुबिम्बयोः वैपुल्यदर्शनं लोकसिद्धम्। समस्थितेन उदयास्तशैलप्रत्यासन्नसमदेशस्थितेन। सूर्येन्दुबिम्बयुगलेन घटयुगल[1]स्थानीयेन करणेन। काल एव वणिक् तेन कर्त्रा। परिकल्प्यमाना सन्तोल्यमाना। नक्तंदिवक्षणतुला रात्रौ दिवा च क्षणानां [2]तोलनसाधनयन्त्रविशेष इव। आभाति ॥ ३३ ॥

**नैशं तमः क्षिपति नन्दितचक्रवाके**
**[3]पद्मान् प्रबोधयति भावितमित्रभावे।**
**दृष्टिं [4]प्रसादयति दर्शितसत्पथेऽस्मिन्**
**दोषोल्बणा कुमुदिनी बहुमानशून्या ॥ ३४ ॥**

**नैशमिति**—नैशं निशाभवं। तमः तिमिरं। क्षिपति निरस्यति। नन्दितचक्रवाके प्रीणितकोके। पद्मान्। प्रबोधयति उन्मीलयति। अर्धर्चादिगणपाठात्पुंस्त्वमपि। [5]'वा पुंसि पद्मं नलिनं' इत्यमरः। [6]भावितमित्रभावे संपादितसूर्योदये। दृष्टिं [7]. . . . . . . . दर्शितसत्पथे प्रकाशेन व्यक्तीकृतनक्षत्रपथे। अस्मिन् प्रभातसमये। दोषोल्बणा रात्रौ स्फुटा विकसिता 'स्फुटं प्रव्यक्तमुल्बणम्' इत्यमरः। कुमुदिनी कुमुद्वती। बहुमानशून्या बहुमानशब्देन विकासो लक्ष्यते, तद्रहितेत्यर्थः। अस्मिन्निति [8]सूर्यो वा परामृश्यते, तस्मिन् बहुमानः तदुदये विकासः, तद्रहितेत्यर्थः। अस्मिन् पक्षे भावितः प्राप्तः मित्रभावः मित्रत्वं मित्रशब्दवाच्यत्वं येनेति योज्यम्।

---

1 स्थानीयेन काल–घ. 2 तुलन–ङ. 3 पद्मानि बोधयति–ट्. मु. 4 प्रसाधयति–ग्र. दे. मु. 5 ङ-कोशे नायं कोशो निर्दिष्टः. 6 'भावितमित्रभावे' इत्यारभ्य 'इत्यमरः' इत्यन्तो ग्रन्थः–घ. च. ट. कोशेषु गलितः. 7 'प्रसादयति विषयग्रहणसमर्थां कुर्वति' इत्यर्थकग्रन्थेनात्र भाव्यमिति भाति. 8 सूर्य एव–घ. च.

अनेन च परं पावयमाने, साधूनां प्रीणने, विदुषः पाठनेन प्रबुद्धान् कुर्वति, सम्पादितसुहृदुत्कर्षे, नयनसुभगे, लोकाचारप्रवर्तके, महा[1]पुरुष-विषये बहुमानम[2]कुर्वतीं मौर्ख्यादिदोषोत्कटां कांचन वधूं व्यनक्ति ॥ ॥ ३४ ॥

पादस्पृशां दिशति भूमिभृतां प्रकाशं
सत्वं समेधयति सद्भिरुदीरिताघ्र्यैः ।
तेजोगणानपि तिरस्कुरुते स्वदीप्त्या
चक्रप्रियस्त्वमिव सम्प्रति चण्डभानुः ॥ ३५ ॥

पादेति—सम्प्रति । चक्राणां चक्रवाकानां प्रियः । चण्डभानुः उष्णकिरणः । पादस्पृशां स्वकिरणस्पृशां । भूमिभृतां पर्वतानां । प्रकाशं आलोकं । दिशति । किञ्च—सद्भिरुदीरिताघ्र्यः क्षिप्ताघ्र्यस्सन् । [3]सत्वं सुप्तोत्थितानां स्वस्वकार्ये व्यवसायं । समेधयति संवर्धयति । "सत्वोऽस्त्री जन्तुषु क्लीबे व्यवसाये पराक्रमे" इति यादवः । तेजोगणान् नक्षत्रादिगणानपि । स्वदीप्त्या । तिरस्कुरुते [4]अन्तरितान् करोति । त्वमिवेति सर्वत्रोपमानम् । तत्र चक्रं सुदर्शनम् । पादौ चरणौ । प्रकाशः प्रसिद्धः । अर्घ्यं पूजाद्रव्यम् । सत्वं सत्वगुणः । तेजोगणः [5]तेजसां प्रतापशालिनां गणः । [6]स्वदीप्तिः स्वपराक्रमः । तिरस्कारः अभिभवः । यद्वा तेजोगणानित्यादौ 'न तत्र सूर्यो भाति' इत्यादि-श्रुत्यर्थोऽनुसन्धेयः ॥ ३५ ॥

आजानपाण्डरतनुः परभागमृच्छन्
नीलाम्बरद्युतिमुषा निजलाञ्छनेन ।

1 पुरुषे विषये–घ. च. 2 कुर्वती वैमुख्यादि–घ. ट. 3 'सत्वं' इतीदं–घ. च. कोशयोर्न दृश्यते. 4 अन्तर्हितान्–घ. च. 5 तेजस्विनां प्रताप–ङ. 6 स्वदीप्त्या स्वपराक्रमेण–घ.

स्फीताकृतिः परिगतो मदरागलक्ष्म्या
वीर त्वदग्रज इवैष विभाति चन्द्रः ॥ ३६ ॥

आजानेति—हे वीर। आजानपाण्डरतनुः निसर्गधवलमूर्तिः। "सहजं [1]निजमाजानम्" इति वैजयन्ती। नीलाम्बरस्य द्युतिमुषा कान्तिचोरेण, तत्सदृशेनेति यावत्। निजेन लाञ्छनेन। [2]परभागमृच्छन् गुणोत्कर्षं प्राप्नुवन्। स्फीताकृतिः विपुलमूर्तिः। उदयास्तमययोः सूर्येन्दुबिम्बं विपुलं दृश्यत इति लोकसिद्धम्। मदरागलक्ष्म्या मदजनितरागशोभया। परिगतः प्राप्तः। मदरागसदृश[3]रागशालीति यावत्। एषः दृश्यमानश्चन्द्रः। त्वदग्रज इव विभाति त्वत्पूर्वजातो बलदेव इव भातीति भावः ॥ ३६ ॥

सन्ध्योपरागसमयं प्रतिलभ्य पुण्यं
स्नातुं निशा गगनसौधतलावतीर्णा।
आरक्तरूपमवलम्बयता कराग्रं
पत्या सह प्रविशतीव परं समुद्रम् ॥ ३७ ॥

सन्ध्येति—पुण्यं पवित्रं। सन्ध्योपरागसमयं सन्ध्यारागकालम्। उपरागसमयशब्देन सूर्यग्रहणकालो व्यज्यते, तं। प्रतिलभ्य। स्नातुं। गगनमेव सौधतलं ततोऽवतीर्णा। निशा। आरक्तरूपं। कराग्रं किरणाग्रं। अवलम्बयता [4] अवलम्बमानं कुर्वता, हस्ताग्रं ग्राहयतेत्यपि गम्यते। जलावतारे हि पुरुषाः स्त्रीभिः स्वहस्तमवलम्बाय ग्राहयन्ति। पत्या चन्द्रेण सह। परं समुद्रं पश्चिमसमुद्रं। प्रविशति। चन्द्रस्य समुद्रप्रवेशानन्तरं रात्रेरप्यदर्शनात् तत्र प्रवेश उत्प्रेक्ष्यते। अवलम्बयतेति

[1] निजमाजानं धर्ममार्गौ निसर्गवत्—च्च. अत्र 'धर्मसर्गौ निसर्गवत् इति' मुद्रितायादवकोशपाठः. [2] 'परभागो गुणोत्कर्षः' इति यादवकोशोऽत्र बोध्य. [3] संध्याराग इह रागो बोध्यः [4] 'अवलम्बनं' इति पाटस्साधुरिति भाति.

प्रकृतार्थे अवलम्बशब्दात् तत्करोतीति णिच् । अर्थान्तरेऽवपूर्वाल्लबिधातोः हेतुमति णिच् । तत्राप्युक्तरीत्या तत्करोतीति णिजेव वा ॥ ३७ ॥

देव त्वयीव दिवसागमजागरूके
संरक्तविश्वमुदयं सवितर्युपेते ।
अस्तं [1]शनैरभिपतन् भजते मृगाङ्कः
त्वद्वैरिवारवनितावदनेन्दवस्थाम् ॥ ३८ ॥

देवेति—हे देव । त्वयीव दिवसागमजागरूके त्वं हि दिवसागमे जागरणशीलः—

ब्राह्मे मुहूर्ते देवानां पितॄणां च समागमः ।
जागरस्तत्र कर्तव्यो देवसम्माननं स हि ॥

इति शास्त्रगौरवाय, तथा दिवसागमे जागरणशीले उदयशीले । सवितरि सूर्ये । संरक्तविश्वं समन्तादरुणलोकं, अनुरक्तलोकं च यथा तथा । उदयं उदयपर्वतं, अभ्युदयं च । उपेते प्राप्ते सति । शनैः । अस्तं अस्ताचलं । अभिपतन् । मृगाङ्कः । त्वद्वैरिवाराणां त्वद्रिपुस्तोमानां या वनिताः तद्वदनेन्दूनां अवस्थां त्वदभ्युदयकृतनिष्प्रभत्वदशां । भजते ॥ ३८ ॥

राजाऽस्तमेति सुहृदा मदनेन सार्धं
दीनाकृतिः कुमुदिनीदृढबद्धकोशा ।
वैरी समेति विषमाश्व इतीव भीता
छायाच्छलेन भजते गगनं त्रियामा ॥ ३९ ॥

राजेति—राजा चन्द्रः, नृपश्च । सुहृदा । मदनेन । सार्धं । अस्तमेति । वैरी परिपन्थी । विषमाश्वः अयुग्माश्वस्सूर्यः, दुष्टाश्वपरिवृतो मण्डलान्तर्नृपश्च । समेति आयातीति । भीतेव । दीनाकृतिः । त्रियामा

[1] शनैरुपपतन्--घ.

रात्रिः, पत्नीति च गम्यते । कुमुदिनीषु दृढबद्धकोशा दृढघटित-कुट्मला, क्वचिन्निक्षिप्तार्थजातेत्यपि गम्यते। "कोशोऽस्त्री कुट्मले खड्गपिधानेऽर्थौघदिव्ययोः" इत्यमरः । गगनं आकाशं। छायाच्छलेन गगनकान्तिव्याजेन। भजते। रात्रेः श्यामलत्वाद्गगनकान्तित्वेन अपह्नुतिः । अर्थनिक्षेपानन्तरं क्वचिदविज्ञातप्रदेशे तत्रत्यवेषमाश्रित्य वसतीत्यपि प्रतीयते ॥ ३९ ॥

**आमृश्य रात्रिमरुणोदयजातपुष्पां**
**प्राप्तानुताप इव सत्पथलङ्घनेन ।**
**ज्योत्स्नांशुकं द्विजपतिः परिधाय नूनं**
**व्रीडानतो विशति वारिनिधिं विवर्णः ॥ ४० ॥**

**आमृश्येति**—अरुणोदयेन जातपुष्पां सञ्जातप्रसूनां, प्रसूनस्तबकप्रेक्षणीयारुणोदयामिति यावत् । जातपुष्पां ऋतुमतीमित्यपि गम्यते। तथाभूतां रात्रिं। आमृश्य स्पृष्ट्वा, भुक्त्वा च। सत्पथलङ्घनेन नक्षत्रमार्गातिक्रमणेन, पुष्पिणीसम्भोगलक्षणेन शिष्टाचारातिक्रमेण च। प्राप्तानुताप इव। नूनं। व्रीडानतः। अस्तमयप्रत्यासत्त्या स्वाभाविक्यवनतिः लज्जाहेतुकत्वेनोत्प्रेक्षिता। विवर्णः। द्विजपतिः चन्द्रः, ब्राह्मणोत्तमश्च। ज्योत्स्नांशुकं परिधाय वारिनिधिं विशति सचेलस्नानार्थमिव समुद्रं विशतीत्यर्थः ॥ ४० ॥

**अभ्येति भानुरुदयाद्रिमसह्यतेजाः**
**स्थातुं स एष समयो न ममेति पश्यन् ।**
**प्रायस्समाश्रयति पाशभृताऽभिगुप्तं**
**तारापतिश्चरमसागरतोयदुर्गम् ॥ ४१ ॥**

**अभ्येतीति**—तारापतिः चन्द्रः। असह्यतेजाः अविषह्यप्रतापः। भानुः। उदयाद्रिं। अभ्येति। स एष समयः स्थातुं समयो न भवतीति।

प्रायः नूनं। पश्यन्। पाशभृता वरुणेन। अभिगुप्तं, समुद्रस्य वरुणालयत्वात्। चरमसागरतोयदुर्गं। समाश्रयति। "दुष्प्रापं तु पुरं दुर्गं"[1] इति यादवः। चरमसागरतोयदुर्गमित्यत्र उपमारूपकसमासयोः अन्यतरसाधकबाधकप्रमाणाभावात्तत्सन्देहसङ्करकृतविशेषणसाम्यप्रभाविता समासोक्तिरिति। अत एव चन्द्रसूर्ययोः नृपत्वप्रतीतिः, न तु एकदेशविवर्तिरूपकात्, [2]तस्य विशेषणे रूपकर्णे? सापेक्षत्वात् ॥४१॥

मूले मनाग्भवति मुञ्चति पूर्वभागं
शैथिल्यमृच्छति तमालरुचिस्त्रियामा।
आकृष्यते चरमशैलवने विहर्तुं
सीरायुधेन यमुनेव सुधांशुनेयम् ॥४२॥

मूल इति—तमालरुचिः तापिञ्छद्युतिः। त्रियामा रात्रिः। मूले प्राचीमूले। मनाक् भवति अरुणकिरणयोगात् अल्पा भवति। "मनागल्पे च मन्दे च" इति विश्वः। तत्किरणेषु प्रौढीभवत्सु पूर्वभागं मुञ्चति। ततस्तेषां प्रचारे शैथिल्यमृच्छति सर्वत्र शिथिलतां प्राप्नोति। सुधांशुना चन्द्रेण। सीरायुधेन बलदेवेन[3] (. . . . . . . . . . . . . . . यमुनेति पौराणिकी कथा। तस्या अप्याकृष्यमाणायाः अन्यत्र प्रवाहारम्भे . . . . वाहे अल्पभाषिणो प्रे . . . . व चकान् प्रयोगाच्च।) ततः पूर्वप्रवाहदेशत्यागः आकर्षणवेगेन शिथिलीभावश्च तुल्यः ॥४२॥

---

1 'यन्त्रशैलजलादिभिः' इत्युत्तरः पादः. 2 तस्य शाब्दरूपणनिर्वाहकेण विशेषण रूपकान्तरेण सापेक्षत्वात्' इत्यर्थकग्रन्थेनात्र भाव्यमिति भाति. 3 'यमुना आलिन्दीव। इयं त्रियामा। चरमशैलवने अस्ताचलोपवने। विहर्तुं क्रीडितुं। आकृष्यते। नूनमित्युत्प्रेक्षा वाचकाप्रयोगाद्गम्या। पुरा किल बलरामेण वारुणीपानमत्तेन जलक्रीडार्थं स्वसन्निधिं प्रत्याहूताऽप्यनागता यमुना हलाग्रेणाकृष्टेति पौराणिकी कथाऽत्र द्रष्टव्या। अन्यत्र यमुनाया आकृष्यमाणायाः प्रवाहारम्भे पूर्वमल्पीयस्ता' इत्यर्थकग्रन्थेनात्र कुण्डलितस्थाने भाव्यमिति भाति।

प्रस्थानकालभजनात्परितोषितेन
ज्योत्स्नात्मिकां हरिवधूसहजेन दत्ताम् ।
प्रायेण नाकवनितानखदीप्ति[1]लघ्वीं
शेषांपटीं चरमभूभृदसौ दधाति[2] ॥ ४३ ॥

**प्रस्थानेति**—असौ । चरमभूभृत् । प्रायेण । प्रस्थानकालभजनात् परितोषितेन प्रयाणकालसेवया हेतुना तोषितेन । अस्तमयकाले चरमशैलस्य चन्द्रे सन्निकर्ष एव पर्वतस्य प्रस्थानभजनत्वेन विवक्षितम् । हरिवध्वाः लक्ष्म्याः, सहजः सहोदरश्चन्द्रः, सर्वेश्वरस्यालतया प्रभुत्वाभिव्यक्तये इत्थमुक्तिः, तेन । दत्तां । नाकवनितानां दिव्यस्त्रीणां नखदीप्तिमिव लघ्वीं सूक्ष्मां । जोत्स्नात्मिकां चन्द्रिकाकृतिं । शेषां तदुपभुक्तनिर्माल्यरूपां पटीं । दधाति धारयति । "शेषा निर्माल्यमुज्झितम्" इति [3]यादवः ॥ ४३ ॥

सूक्ष्माभिरामनिजदीधितिसूत्रलम्बी
पर्यन्तलग्नतिमिरालकदर्शनीयः ।
सिन्दूररञ्जित इवैष विभातलक्ष्म्याः
सीमन्तमौक्तिकमणिः प्रतिभाति चन्द्रः ॥ ४४ ॥

**सूक्ष्मेति**—सूक्ष्मा तनीयसी अभिरामा निजा दीधितिरेव सूत्रं तल्लम्बी तत्र लम्बमानः । पर्यन्तेषु परिसर[4]काननान्तेषु लग्नानि तिमिराण्येव

[1] लक्ष्यां—ग्र. दे. मु. [2] बिभर्ति—घ. [3] मुद्रितयादवकोशे 'वैकक्ष्यं तिर्यगुरसि स्थितं निर्माल्यमुज्झिते' इति पाठो दृश्यते ; एतद्व्याख्याग्रन्थपरिशीलनेन च 'शेषा निर्माल्यमुज्झितम्' इत्येव तत्र पाठ इति ज्ञायते। युक्तश्चायमेव पाठः। अत एव उत्तरत्र नानालिङ्गाध्याये शेषशब्दमुपादाय 'माल्याक्षतादिदाने स्त्री' इति शेषशब्दस्यात्रार्थे स्त्रीलिङ्गतानुशिष्टा दृश्यते। स्थितमितिपाठे च 'पुरोन्यस्तं' इति तत्रैव पूर्वमभिधानात् तत्रत्यन्यस्तपदस्यात्रानुषङ्गेणैवोपपत्तौ स्थितमित्यधिकं च भवतीति [4] काननेषु--घ.

अलकाः तैः दर्शनीयः, चारुत्वादानन्दजनकः । "दर्शनीयं तदानन्दसान्द्रो यत्र मनोलयः" इति यादवः । एषः अस्तमयसन्निकर्षादरुणतया दृश्यमानश्चन्द्रः । विभातलक्ष्म्याः प्रातश्श्रियः । सिन्दूरेण अरुणचूर्णविशेषेण रञ्जितः सीमन्तमौक्तिकमणिः केशमध्यपद्धतौ लम्बितो मुक्तामणिरिव । प्रतिभाति, इत्युत्प्रेक्षा ॥ ४४ ॥

प्रालेयरूषितमिदं प्रथमेतराब्धौ
मग्नैकदेशमनुयाति मृगाङ्कबिम्बम् ।
मानच्छिदां मकरकेतनसायकानां
शाणोपलं चिरनिघर्षणकर्शितार्धम् ॥ ४५ ॥

प्रालेयेति—प्रालेयेन हिमेन रूषितं । प्रथमेतराब्धौ पश्चिमसमुद्रे । मग्नैकदेशं । मृगाङ्कस्य बिम्बम् । मानच्छिदां मानिनीनामीर्ष्याकृतकोपस्य छेदकानां । मकरकेतनसायकानां कामबाणानां । चिरं निघर्षणेन बहुकालघर्षणेन कर्शितार्धं क्षिप्तैकदेशं । शाणोपलं उत्तेजनशिलां । अनुयाति अनुकरोति । उक्तरूपशाणोपल इवाभातीत्युत्प्रेक्षा द्रष्टव्या । शाणोपले जलं दत्त्वा निघर्षणे (निस्तृणोत् भूति यावत् प्रक्षादद्रू . . . . . . . . पहितः । शाणोपलो भवतीति) तत्साम्याय प्रालेयरूषितमित्युक्तम् ॥ ४५ ॥

आदौ वराभमुदितं शरपाण्डु मध्ये
पश्चान्मधूकपरिधूसरमिन्दुबिम्बम् ।
सम्पद्यते [2]पुनरदृश्यतमामवस्थां
कालार्पितं करजचिह्नमिव क्षपायाः ॥ ४६ ॥

आदाविति—आदौ वराभमुदितं प्रथमं कुङ्कुमप्रभमाविर्भूतं । "वरं बाह्लीकपीतने" इति कुङ्कुमपर्यायेष्वमरः । मध्ये मध्यसमये ।

[1] कुण्डलितस्थाने दृश्यमानो ग्रन्थः शुद्धमातृकान्तरावलम्बेन संशोधनीयः.
[2] पुनरदृष्ट—ग्र. दे. मु.

शरपाण्डु शरस्तृणविशेषः, तथा पाण्डरं। पश्चात् प्रभाते। मधूकपरिधूसरं मधूकद्रुमपुष्पमिव परितो धूसरवर्णं। इन्दुबिम्बं। क्षपायाः रात्रेः। कालेन कामुकस्थानीयेन अर्पितं। करजचिह्नं नखाङ्कमिव। पुनः। अदृश्यतमां अत्यन्तमदृश्यां। अवस्थां। सम्पद्यते प्राप्नोति। नखाङ्कस्याप्येवंविधगुण-सद्भावादुत्प्रेक्षा ॥ ४६ ॥

**नैशं तमिस्रमरुणेन विलुप्तसारं**
**निश्शेषयन्नयमुदेति मयूखमाली।**
**सत्सेवनेन पुरतो मुषितैकदेशं**
**विद्यावतां वृजिनराशिमिवान्तरात्मा ॥ ४७ ॥**

**नैशमिति**—मयूखमाली सूर्यः। [1]व्रीह्यादित्वादिनिप्रत्ययः। अरुणेन। विलुप्तसारं नाशितोत्कर्षं। नैशं निशाभवं। 'निशाप्रदोषाभ्यां च' (पा. सू. ४-३-१४) इति ठञो विकल्पनादण्प्रत्ययः। तमिस्रं अन्धकारं। सत्सेवनेन महत्सेवया। पुरतः पूर्वं। मुषितैकदेशं नाशितैकदेशं। विद्यावतां दहरविद्याद्युपासनापराणां। वृजिनराशिं पापराशिं। अन्तरात्मा अन्तर्यामी पुरुषोत्तम इव। निश्शेषयन् निश्शेषं कुर्वन् सन्। उदेति आविर्भवति। अन्तरात्मविषयध्यानस्य चिरं निरन्तराभ्यासात् तस्मिन् साक्षात्कार इव विशदतरावभासो विवक्षितः। तस्य च "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ" (ब्र. सू. ४-१-१३) इति सर्वपापविमोक्षहेतुत्वं शारीरके स्थापितम् ॥ ४७ ॥

**उद्गच्छता पुरुषकेसरिणेव पूष्णा**
**काले तमो विदालितं करजैः प्रवालैः।**
**गाढं हिरण्यकशिपोरिव गात्रमन्यत्**
**सन्ध्याच्छलेन रुधिरं क्षरतीव सान्द्रम् ॥ ४८ ॥**

**उद्गच्छतेति**—काले उचितसमये। पुरुषकेसरिणा श्रीमन्नृसिंहे-

[1] व्रीह्यादिभ्यश्च (पा. सू. ५-२-११६) इति सूत्रेणेत्यर्थः,

नेव। उद्गच्छता उदीयमानेन। पूष्णा सूर्येण। करजैः प्रवालैः किरणप्रभवैः पल्लवैः, [1] किरणानां कराः पल्लवत्वेनाध्यवसिताः। नृसिंहपक्षे नखैरेव पल्लवैः। विदलितं विदारितं। हिरण्यकशिपोः असुरस्य। अन्यत् द्वितीयं। गात्रमिव स्थितं। सन्ध्याच्छलेन सन्ध्यारागव्याजेन। सान्द्रं। रुधिरं। क्षरतीव उद्गिरतीव। सापह्नवोत्प्रेक्षेयम्। अतोऽत्र न च्छलेवशब्दयोरन्यतरस्य वैयर्थ्यम्। हिरण्यासुरविदारणस्यानायासकृतत्वं व्यञ्जयितुं नखानां कोमलत्वं पल्लवरूपेण दर्शितम् ॥ ४८ ॥

प्राप्तोदयस्य तपनस्य तवेव धाम्ना
क्षिप्तो गुहान्तरनिरुद्ध इवान्धकारः।
विश्वावलोकननिरोधवियातवृत्तेः
अत्याहितस्य परिपाकमिवैष भुङ्क्ते ॥ ४९ ॥

प्राप्तेति—तवेव। प्राप्तोदयस्य उदयं उदयाचलमेव अभ्युदयं प्राप्तस्य। "प्राप्तापन्ने च द्वितीयया" (पा. सू. २-२-४) इति समासः। तपनस्य सूर्यस्य। धाम्ना त्विषैव प्रभावेन। क्षिप्तः निरस्तः। गुहान्तरे कारागृहकल्पे निरुद्ध इव स्थितः। एषः अन्धकारः। विश्वावलोकननिरोधवियातवृत्तेः जगद्दर्शननिरोधरूपस्य धृष्टचरितस्यैव। अत्याहितस्य प्राणानाकाङ्क्षिकर्मणो महासाहसस्य। परिपाकं फलं। अनुभुङ्क्ते इव। निरोधकस्य स्वयमपि निरोधानुभवः पापफलं युक्तमिति भावः। "धृष्टे धृष्णुर्वियातश्च" इति "अत्याहितं महाभीतिः प्राणानाकाङ्क्षि कर्म च" इति च यादवः ॥ ४९ ॥

मग्ना चिरं महति [2] सन्तमसाम्बुराशौ
दंष्ट्राभिरामरुचिना दिवसागमेन।

---

[1] 'किरणानां कार्याङ्कुराः' इति शुद्धपाठेनात्र भाव्यम्. [2] संतमसमित्यत्र 'अवसमन्धेभ्यस्तमसः' (पा. सू. ५-४-७९) इति समासान्तोऽच्प्रत्ययः.

उत्क्षिप्यते दनुजशोणितलोहितेन
प्रायो वराहवपुषा विभुनेव भूमिः ॥ ५० ॥

मग्नेति—महति विपुले। सन्तमसं विश्वकृतं तम एव अम्बुराशिस्तस्मिन्। चिरं प्रलयजलधाविव बहुकालं। मग्ना। भूमिः। दंष्ट्रा इवाभिरामा हृद्या रुचयो यस्य तेन। दिवसागमेन दिनमुखेन। दनुजशोणितलोहितेन हतहिरण्यासुररक्तारुणेन। वराहवपुषा विभुना वराहमूर्तिना भगवतेव। प्रायः नूनं। उत्क्षिप्यते उद्ध्रियते। उत्क्षेपणस्य औत्प्रेक्षिकत्वात् उत्प्रेक्षावाचकः प्रायश्शब्दः। विभुनेति दिनमुखस्योपमानोपादानात् उपमावाचक इवशब्द इति द्वयोर्ग्रहणम्। दंष्ट्राभ्यामभिरामा रुचिर्यस्येति वराहपक्षेऽपि। दनुजानामर्घ्यप्रक्षेपवध्यानां मन्देहासुराणां शोणितेन लोहितेनेति, दनुजशोणितेनेव लोहितेनेति वा प्रभातपक्षेऽपि योज्यम् ॥ ५० ॥

निद्रामपास्य तमसा च दृशो निरोधं
प्रत्यङ्मुखं प्रथमतः प्रथयन् प्रकाशम्।
निःश्रेयसप्रतिपदेन निजेन धाम्ना
विश्वं समाधिरिव दर्शयते विवस्वान् ॥ ५१ ॥

निद्रामिति—विवस्वान् सूर्यः। निद्रामपास्य जनानां सुषुप्तिं निरस्य। तमसा अन्धकारेण। दृशः जनलोचनस्य। निरोधं चापास्य। प्रथमतः। प्रत्यङ्मुखं प्रत्यगाशाभिमुखं। प्रकाशं आतपं। प्रथयन् विस्तारयन्। निश्श्रेयसप्रतिपदेन मुक्तिपर्यायेण। "अथ यत्रैतदस्माच्छरीरा[1]दुत्क्रान्तो भवति, अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" (छान्दोग्यं ८-६-५) इत्यादौ सौरतेजसो मुक्तिपदप्रापकत्वश्रवणात् मुक्तिपर्या-

1 'दुत्क्रामत्यथैतैरेव' इत्यान्ध्रलिपिमुद्रितकोशे पाठः.

यत्वारोपः। निजेन धाम्ना स्वतेजसा। विश्वं जगत्। दर्शयते, जनान् प्रयोज्यकर्तॄनिति भावः। समाधिः योग इवेति सूर्यस्योपमानम्। तत्र पक्षे निद्रां तमोगुणं। अपास्य। तमसा पापेन ज्ञानोत्पत्तिप्रतिबन्धकेन। दृशः ज्ञानस्य। [1]प्रथमतः। प्रत्यङ्मुखं प्रत्यगात्मगोचरं। प्रकाशं स्फुरणं। प्रथयन्। निश्श्रेयसप्रतिपदेन निश्श्रेयसोपायत्वात् सङ्कल्पमात्रेण भोग्यसृष्टिसामर्थ्याधायकतया तत्साम्यादेतत्पर्यायेण। निजेन धाम्ना स्वप्रभावेण। विश्वं दर्शयते सार्वज्ञ्यं जनयतीति योज्यम् ॥ ५१ ॥

**आशापरीतमविवेकमिवान्धकारं**
**शङ्काशतास्पदमलक्षितसर्वतत्वम्।**
**निर्धूय सम्प्रति निशामिव बाह्यविद्यां**
**तत्त्वावसाय इव भाति विभातकालः ॥ ५२ ॥**

**आशेति**—विभातकालः। आशासु दिक्षु परीतं व्याप्तं। शङ्काशतास्पदं रज्जुसर्पस्थाणुपुरुषाद्यनेकसन्देहनिदानं। अलक्षितमदृष्टं सर्वेषां रज्ज्वाद्यधिष्ठानानां तत्त्वं स्वरूपं यस्मिन् तं। अन्धकारं। अविवेक[2]मिव निर्धूय। अविवेकपक्षे—तृष्णापरीतं भूयःशङ्कास्पदं अलक्षितैहिकामुष्मिकसकलपुरुषार्थतत्त्वमिति विशेषणनामर्थः। "शङ्कावितर्कभययोः" इति शब्दार्णवः। संप्रति इदानीं। निशां रात्रि[1]मेव। बाह्यविद्यां पाषण्डविद्यामपि। निर्धूय। तत्त्वावयसायः तत्वावबोध इव। भाति। प्रबोधेन प्रथमं पुंसामविवेको निरस्यते। ततस्तेषां वादसामर्थ्यमाधाय मतान्तरं निरस्यत इति भावः ॥ ५२ ॥

1 अत्र 'निरोधं चापास्य' इति ग्रन्थेन भाव्यमिति भाति. 2 'मिव' इत्यपि पाठः.

निर्विश्य चन्द्रसितपद्मरसं निशात्मा
[1]लोलम्बजातिरभितो लुलितान्यपुष्पा ।
त्वद्वक्त्रचन्द्रनिरपायरसानिदानीं
पद्मानुपैति परितोषितराजहंसान् ॥ ५३ ॥

निर्विश्येति—लोलम्बजातिः भृङ्गजातिः। निशात्मा निशारूपा, रात्रिरूपं लब्ध्वेति यावत्। अभितः। लुलितान्यपुष्पा मृदितपुष्पान्तरा। रात्रौ प्रायः पुष्पाणां निमीलिनात् लुलितत्वोक्तिः। भृङ्ग[2]जातिरिव रसपरीक्षणाय लुलितपुष्पान्तरा[3] भाववतीति भावः। तथा भूता सती पुष्पान्तराण्यनादृत्य, चन्द्रस्यैव सितपद्मस्य रसं। निर्विश्य उपभुज्य। इदानीं। त्वद्वक्त्रचन्द्रनिरपायरसान् [4]त्वन्मुखेन्दुवदमितरसान्। परितोषित-राजहंसान् संतर्पितहंसविशेषान्। पद्मान् प्रसिद्धपद्मान्। उपैति। स्वस्व-रूपेणेति हृदयम्। न तु निशात्मना पद्मेष्वनुवृत्तिरस्ति। पद्मानां प्राभातिकविकासवर्णनात्। अतश्चन्द्रसितपद्मनिर्वेश[5]मात्रयोगेन निशात्म-कत्वकथनम् ॥ ५३ ॥

नात्यन्ततः कुमुदिनी प्रतिपन्ननिद्रा
नातीव बोधमुपयाति सरोजिनी च ।
एतेन नूनमनयोरविशेषदृश्या
नाथानुवृत्तिनियतेव भवत्यवस्था ॥ ५४ ॥

नात्यन्तत इति—कुमुदिनी। नात्यन्ततः प्रतिपन्ननिद्रा अत्यन्तं प्राप्तनिद्रा न भवति, किञ्चिदेव निद्रां प्राप्नोति। सरोजिनी च।

---

[1] रोलम्ब—ङ्. मु. [2] जातिर्हि' इति शुद्धपाठस्स्यात्. [3] 'भवतीति भावः' इति शुद्धपाठस्स्यात्. [4] 'त्वन्मुखेन्दुवदनपायरसान्' इति पाठः स्फुटः. [5] मात्रोपयोगेन—च. छ.

नातीव। बोधं विकासं। उपयाति, किन्तु किञ्चिदेव। एतेन किञ्चिन्निद्राबोधभजनेन। अनयोः कुमुदिनीसरोजिन्योः। अविशेषदृश्या दरविवृतमुखत्वेन परस्परसाम्येन प्रेक्षणीया। नाथानुवृत्तिनियतेव। अवस्था। भवति। नूनमिति तर्के।

[1]भुक्ते भुक्ता च या पत्यौ दुःखिते दुःखिता च या।
मुदिते मुदिताऽत्यर्थं प्रोषिते मलिनाम्बरा॥

इति स्त्रीणां भर्त्रवस्थानुवृत्तिनियमस्मरणात् स्वस्वपत्यनुवृत्तिनियतामवस्थां भजत इति तर्कयामीत्यर्थः। चन्द्रो नात्यन्तमस्तमितः सूर्योऽपि नात्यन्तं प्रौढ इति समयविषयमाधिकृत्यैवमुत्प्रेक्षा॥ ५४॥

**पर्यस्यता सुरभि पद्मपरागजालं**
**पक्षानिलेन परिधूननसम्भवेन।**
**संधुक्षयन्ति मकरध्वजहव्यवाहं**
**शान्तं पुनःपुनरमी सरसीषु हंसाः॥ ५५॥**

पर्यस्यतेति—सरसीषु कासारेषु। अमी। हंसाः। परिधूननसम्भवेन पक्षकम्पनप्रभवेन। सुरभि सुगन्धि। पद्मानां परागजालं वह्न्युद्दीपकं तुषादिकमिवेति भावः। [2]पर्यस्यता। पक्षानिलेन। शान्तं प्रभाते उपरतं। मकरध्वजहव्यवाहं कामाग्निं। पुनःपुनः। सन्धुक्षयन्ति उद्दीपयन्ति। "धुक्ष धिक्ष सन्दीपने" (भ्वा. ६०२,६०३) इति धातोर्णिच्। हंसानामुद्दीपनीवभावत्वात्तथोक्तिः॥ ५५॥

**कालोत्थिताः स्थितिभृतो गुणयन्त्रितत्वात्**
**दानोदकार्द्रकरपुष्करदर्शनीयाः।**

---

[1] भुक्तां भुङ्क्ते—च.   [2] 'पर्यस्यता' इत्यस्य 'परिक्षिपता' इत्यर्थः स्यात्.

**सम्भावयन्त्यभिमुखाः समयोपयातान्**
**भृङ्गान् वनीपकजनानिव वारणेन्द्राः ॥ ५६ ॥**

**कालेति**—कालोत्थिताः प्रभातकाले सुप्तोत्थिताः। गुणयन्त्रितत्वात् रज्जुबद्धत्वात्। स्थितिभृतः अवस्थानवन्तः। दानोदकार्द्रकरपुष्करदर्शनीयाः मदजलार्द्रशुण्डाग्रेण प्रेक्षणीयाः। वारणेन्द्राः। समयोपयातान् मदजलोद्गमसमयोपगतान्। भृङ्गान्। वनीपकजनान् याचकजनानिव। अभिमुखाः अभिमुखस्थितिमन्तः। सम्भावयन्ति सम्प्रीणयन्ति। भृङ्गाणां वनीपकसाम्योक्त्या वारणेन्द्राणां दातृत्वं व्यज्यते। तत्पक्षे—कालोत्थिताः आश्रितेभ्यो दातुमुचिते काले उद्युक्ताः। गुणैर्दयादाक्षिण्यादिभिः यन्त्रितत्वात्। स्थितिभृतः स्वकृतमार्यादावर्तिनः। "स्थानमर्यादयोः स्थितिः" इति यादवः। दानोदकार्द्रकरपुष्करदर्शनीयाः विश्राणनजलार्द्रपाणिकमलप्रेक्षणीयाः। अभिमुखाः, न तु याचकेषु दुर्मनायमानाः। समयोपयातान् दानोचिते काले समागतानिति योज्यम् ॥ ५६ ॥

**गञ्जामुपेत्य मदकुञ्जरगण्डपालिं**
**मत्तान् समीक्ष्य मधुपान् परिघूर्णमानान्।**
**शुद्धानि हन्त कुमुदानि तमस्यपेते**
**भूयस्तदन्वयभयादिव संकुचन्ति ॥ ५७ ॥**

**गञ्जामिति**—शुद्धानि अवदातानि। कुमुदानि। मदकुञ्जरगण्डपालिं मदसहितानां गजानां गण्डस्य पालिमङ्कं उत्सङ्गं "पालिस्त्र्यश्र्यङ्कपङ्क्तिषु" इत्यमरः, तामेव, गञ्जां मदिरागृहं। उपेत्य। "गञ्जा तु मदिरागृहम्" इत्यमरः। मत्तान् तत्र मदजलरूपमद्यास्वादादिति भावः। अत एव परिघूर्णमानान् परितो भ्रमतः। मधुपान् भृङ्गानेव शीधुपायिनः। समीक्ष्य। तमस्यपेते अन्धकारे निवृत्ते, अज्ञानकृतप्राचीनतत्संस-

गपापे प्रायश्चित्तेन निवृत्त इत्यपि गम्यते । भूयस्तदन्वयभयात् पुनरपि तत्संसर्गभयादिव । सङ्कुचन्ति । पातकिसंसर्गस्यापि पतनहेतुत्वादिति भावः। हन्तेति हर्षे । सदाचारदर्शनस्य सतां हर्षहेतुत्वादिति भावः ॥ ५७ ॥

**सत्त्वकूक्षमाधिकतया शयिताः पृथिव्यां**
**निद्रामयीं व्यपगमय्य निजामविद्याम् ।**
**निस्सङ्गवृत्तिनियतास्स्थिरसंयमार्हाः**
**मुञ्चन्ति सम्प्रति मदं मुदिता गजेन्द्राः ॥ ५८ ॥**

**सत्त्वेति**—सत्त्वं बलं तेन क्षमा कठिनस्थलशयनादिसहिष्णुता सत्त्वक्षमा, अथवा सत्याः प्रशस्तायाः त्वचः क्षमा, प्रथमार्थेऽपि 'अनाचि च' (पा. सू. ८-४-४७) इति तकारस्य ककारस्य च द्वे भवतः, अतोऽर्थद्वयेऽपि पाठतो न विशेषप्रसङ्गः, तस्या अधिकतया अतिशयेन । पृथिव्यां । शयिताः । एकस्मिन् आलाने गजद्वयबन्धनाभावात् निस्सङ्गवृत्तिनियताः गजान्तरसङ्गरहिताः, नियमेन निस्सङ्गवृत्तय इति यावत् । स्थिरं संयमं बन्धमर्हन्तीति स्थिरसंयमार्हाः, अन्यथा बन्धनं विस्रस्य गमनप्रसङ्गात् । एवंभूता गजेन्द्राः। निद्रामयीं सुषुप्तिरूपां । निजामविद्यां आत्मीयमज्ञानं व्यपगमय्य अपनीय । सम्प्रति इदानीं । मदं मदजलं । मुञ्चन्ति विसृजन्ति । अत्र निद्रामयीमविद्यामिति निद्रास्वरूपापह्नवेन अविद्यात्वारोपात् गजेन्द्रेष्वपि वीतरागत्वारोपः प्रतीयते । तत्र पक्षे—सत्त्वं सत्त्वगुणः, क्षमा द्वन्द्वादिसहिष्णुता, तदुभयातिशयेन पृथिव्यां शयिताः "सत्यां क्षितौ किं कशिपोः प्रयासैः" इति हि वीतरागगाथा, निस्सङ्गवृत्तिनियताः अत एव विघ्नाभावात् स्थिरसंयमार्हाः निश्चलप्रणिधानार्हाः, मदं अहङ्कारं, त्यजन्तीति योजना । "नियमे यन्त्रणायां च प्रतिष्ठायां च संयमः" इति विश्वः ॥ ५८ ॥

[1] सैन्यादयस्तव हयास्समये प्रबुद्धाः
चत्वार एव निगमास्तव मूर्तिमन्तः ।
आवर्तयन्त्यतनुहेषितवीचिभेदैः
[2] वैरात्रिकं वटुभिरध्ययनं प्रवृत्तम् ॥ ५९ ॥

**सैन्यादय इति**—समये प्रभातसमये । प्रबुद्धाः । मूर्तिमन्तः । चत्वार एव । निगमाः वेदाः । [3] सैन्यादयः [3] सैन्यसुग्रीवप्रभृतयः । तव। हयाः। वैरात्रिकं विरात्रे अपररात्रे भवं । वटुभिः माणवकैः । प्रवृत्तं कृतं । अतनुहेषितवीचिभेदैः महाहेषारवपरम्पराविशेषैः । आवर्तयन्ति आम्रेडयन्ति । अपररात्राधीतवेदवाक्यरूपानेव हेषारवान् पुनः पुनः कुर्वन्तीत्यर्थः। चत्वार एव निगमा इत्येवकारः तेषां वेदरूपत्वासन्देहार्थः । विगता रात्रि[4]र्विरात्रः। [5] ततोऽध्यात्मादित्वात् भवार्थे ठञि वैरात्रिकशब्दस्साधुः। यद्वा विरात्रं भूतः इत्यस्मिन्नर्थे "तमधीष्टो भृतो भूतो भावी" (पा. सू. ५-१-८०) इति ठञ् प्रत्ययः। "णेरध्ययने वृत्तम्" (पा. सू. ७-२-२६) इति सूत्रेणाध्ययनविषये ण्यन्ताद्वृतुधातोः निष्ठायामिडागमाभावस्य णिलोपस्य च निपातनात् प्रवर्तितार्थे प्रवृत्तशब्दस्साधुः । अण्यन्तत्वेऽपि वा "तेन निर्वर्तितमित्यर्थे 'तेन निर्वृत्तम्' (पा. सू. ४-२-६८) इति सौत्रनिर्देशदर्शनात् अन्तर्भावितण्यर्थतया सकर्मकत्वं प्रवृत्तमित्यत्रोपपद्यते ॥ ५९ ॥

आयोधने विहरणेऽप्यवधानवन्तः
प्राज्यैः परिच्छदपरिष्करणोपचारैः ।

---

1 शैब्यादयः-अ. दे. मु. महाभारतादौ श्रीकृष्णरथाश्वेष्वेकस्य शैब्य इति नामधेयोत्कीर्तनादत्र शैब्यादय इति पाठः स्यात्. 2 (वैमानिकं)—दे. मु. 2 'शैब्य' इति पाठो महाभारताद्यनुगुणः 3 'अहस्सर्वैकदेशसंख्यातपुण्याच्च रात्रेः (पा. सू. ५-४-८७) इत्यनेन समासान्तोऽच्प्रत्ययः, 'रात्राह्नाहाः पुंसि' (पा. सू. २-४-२९) इत्यनेन पुंस्त्वं च. 4 'अध्यात्मादेष्ठञिष्यते' (वा. २८६९) इति वार्तिकेनेति भावः.

संयोजयन्ति रथयोगविदश्शताङ्गं
ताक्ष्र्यं द्वितीयमिव [4] सारथयस्त्वदीयम् ॥ ६० ॥

आयोधन इति—रथयोजनविदः रथसंयोजनाभिज्ञाः । आयोधने युद्धे । विहरणे क्रीडनेऽपि । अवधानवन्तः उभयत्रापि रथसंयोजनविशेषेष्ववहिताः । सारथयः । त्वदीयं । शताङ्गं रथं । "शताङ्गः स्यन्दनो रथः" इत्यमरः । प्राज्यैः भूरिभिः । परिच्छदपरिष्करणोपचारैः रथोपकरणैः प्रसाधनान्येव उपचाराः तैः । द्वितीयं । ताक्ष्र्यं गरुत्मन्तमिव । संयोजयन्ति सज्जीकुर्वन्ति । "रथोपकरणं प्रोक्तं परिबर्हः परिच्छदः" इति हलायुधः ॥ ६० ॥

[1] निद्रावशेषविगमेऽपि मदानुषङ्गात्
मन्दं दृशो मुकुलयन्ति मदावलेन्द्राः ॥
एषामनूरुकिरणैररुणीकृतानां
सप्तस्रुतां भवति सान्ध्यपयोदलक्ष्मीः ॥ ६१ ॥

निद्रेति—[2] . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . .

---

[1] सारथयस्त्वदीयाः--दे. मु. [2] अयं श्लोकः च-कोशे न व्याकृतः ग. छ. कोशयोस्तु एतद्व्याख्याग्रन्थपातस्सूच्यते [3] एतच्छ्लोकस्य दीक्षितेन्द्रीयव्याख्यानुपलम्भात् एतद्ग्रन्थाने परिशिष्टे एतद्व्याख्याऽस्माभिस्संयोजिता द्रष्टव्या.

[1] आलक्ष्य दूरमवरोधगृहादमुष्मात्
स्वाभाविकं वदनमारुतसौरभं ते ।
अम्भोरुहां गुणमपत्रपयन् समीरो
मन्दं परिभ्रमति मन्दिरदीर्घिकासु ॥ ६२ ॥

आलक्ष्येति—समीरः प्राभातिको वायुः । अमुष्मात् अवरोधगृहात् अन्तःपुरगतात्तव शय्यागृहात् । दूरं दूरगतं, बहिः, दूरे निर्गतमिति यावत् । पञ्चमीत्यनुवृत्तौ 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' (पा. सू. २-३-३४) इति सूत्रेण दूरार्थयोगे पञ्चमी । स्वाभाविकं सहजसिद्धं । ते तव । वदनमारुतसौरभं । आलक्ष्य दृष्ट्वा । अम्भोरुहां गुणं कमलानां सौरभं । अपत्रपयन् स्वयंनीताधिकसौरभप्रदर्शनेन व्रीडयन् सन् । मन्दिरदीर्घिकासु भवनवापीषु । मन्दं । परिभ्रमति । आलक्ष्यस्थाने आकृष्येति पाठस्तु सुयोजः, तव वदनमारुतसौरभं अवरोधगृहाद्दूरमाकृष्येति ॥ ६२ ॥

आघूर्णितानि मृदुना पवनेन [2] पद्मा-
न्यावेदयन्ति मदलेशमयीमवस्थाम् ।
निर्गच्छतां तव च वारवधूजनानां
निद्रावशेषकलुषाणि विलोचनानि ॥ ६३ ॥

आघूर्णितानीति—मृदुना । पवनेन । आघूर्णितानि भ्रमितानि । पद्मानि । निर्गच्छतां । तव वारवधूजनानां त्वत्परिचारिकारूपवेश्याजनानां । निद्रावशेषकलुषाणि । विलोचनानि च । मदलेशमयीं मदलवेन

---

[1] आकृष्य–दे. मु. [2] पद्मान्यादश(दिश)यन्ति–अ. दे. मु.

व्याप्तां । अवस्थां । आवेदयन्ति प्रकाशयन्ति । ईषद्वर्णेनेन तान्यनुकुर्वन्तीत्यर्थः । वेश्यानां राजस्वामिकत्वेन तद्गृहपरिचारिकारूपत्वमुक्तं पद्मपुराणे—

पुरा देवासुरे युद्धे हतेषु बहुशस्सुरैः ।
दानवासुरदैत्येषु दानवेषु ततस्ततः ।
तेषां शतसहस्राणि शतान्यपि च योषिताम् ।
परिणीतानि यान्यासन् बलाद्भुक्तानि यानि च ।
तानि सर्वाणि देवेशः प्रोवाच वदतां वरः ।
वेश्याधर्मेण वर्तध्वमधुना नृपमन्दिरे ।
भक्तिमत्यो वरारोहास्तथा देवेषु तेषु च ।
राजानस्स्वामिनस्स्युर्वस्सूतकं चापि तत्समम् ॥

इत्यादिना । तदनुरोधात्तव वारवधूजनानामित्युक्तम् ॥ ६३ ॥

**[1] रेणूत्करास्सरसिजोत्पलकैरवाणां**
**कुर्वन्त्यनूरुतिमिरेन्दुरुचिप्रकाशाः ।**
**प्रायस्समुद्रतरुणीपरिकर्मभूतां**
**चर्चां नवीनघुसृणागुरुचन्दनानाम् ॥ ६४ ॥**

**रेणूत्करा इति**— अनूरुतिमिरेन्दुरुचिप्रकाशाः अरुणतमश्चन्द्रिकाकिरणभासः सरसिजोत्पलकैरवाणां कमलेन्दीवरकुमुदानां

[2] . . . . . . . . . . . . . . . . . . . . . . . कुर्वन्ति "कुङ्कुमं घुसृणं वर्ण्यं" इति वैजयन्ती । अगुरुशब्द उकारमध्यः ॥ ६४ ॥

---

[1] अत्र 'रेणूत्कराः परागपुञ्जाः । 'पुञ्जराशी तूत्करः कूटमस्त्रियाम्' इत्यमरः । समुद्रतरुणीपरिकर्मभूतां जलनिधिदयितामण्डनभूतां । नवीनघुसृणागुरुचन्दनानां नूत्नकुङ्कुमकालागुरुमलयजानां । चर्चां विलेपनं' इत्यर्थकेन व्याख्याग्रन्थेन गलितमिति भाति.

अध्यासितं कुमुदतल्पमपोह्य काले
पद्मोत्पलानि शनकैः श्रियमाव्रजन्तीम् ।
संवीजयन्त्यलघुचामरदर्शनीयैः
पक्षैस्स्वयं परिजना इव राजहंसाः ॥ ६५ ॥

अध्यासितामिति—अध्यासितं रात्रावधिष्ठितं । कुमुदमेव तल्पं। अपोह्य त्यक्त्वा । काले प्रभाते । पद्मोत्पलानि कमलानीन्दीवराणि च । शनकैः अद्रुतं । आव्रजन्तीं । श्रियं । राजहंसाः कमलेन्दीवरस्थिताः । परिजना इव । अलघुचामरदर्शनीयैः पृथुलचामररमणीयैः । पक्षैः । स्वयं वीजयन्ति । यथा [1]रात्रिषु प्रबुध्य निर्गच्छन्तीषु भृत्यजनाः चामरैर्वीजयन्ति तद्वदिति भावः ॥ ६५ ॥

प्रत्यूषलक्षणरसायनसम्प्रयोगात्
प्रालेयरश्मिमहसा जरसेव मुक्ताः ।
पद्मोत्पलप्रभृतिभिः परिकर्मवत्यो
गृह्णन्ति यौवनदशां गृहदीर्घिकास्ते ॥ ६६ ॥

प्रत्यूषेति—प्रत्यूषलक्षणरसायनसंप्रयोगात् प्रभातरूपस्य जराव्याधिहरौषधस्य सेवनात्। जरसा जरयेव । प्रालेयरश्मिमहसा चन्द्रप्रकाशेन । मुक्ताः परिमुच्यमानाः । पद्मोत्पलप्रभृतिभिः प्रभातविकासिभिः पद्मेन्दीवरादिभिः । परिकर्मवत्यः अलङ्कारवत्यः। ते। गृहदीर्घिकाः। यौवनदशां । गृह्णन्ति । प्रभाते इन्दीवरविकासः कविसमयसिद्ध इति तत्रतत्रोक्तम् ॥ ६६ ॥

औद्यानिकीषु सुमनस्स्वनवाप्तपूर्वं
नूनं सरोरुहवनेषु च नूतनेषु ।
आदित्सते वदनमारुतसौरभं ते
शय्यानिकाय्यमभितो विहरन् समीरः॥ ६७ ॥

औद्यानिकीष्विति— शय्यानिकाय्यमभितः शय्यागृहस्य

[1] अत्र 'राजस्त्रीषु' इति शुद्धपाठः स्यात्.

समन्तात् । "निकाय्यनिलयालयाः" इत्यमरः । 'अभितः परितः' (वा १४४२-४३) इत्यादिना द्वितीया। विहरन् सञ्चरन् । समीरः। औद्यानिकीषु उद्यानभवासु । अध्यात्मादित्वात् ठञ् । सुमनस्सु पुष्पेषु। सरोरुहावनेषु च । अनवाप्तपूर्वं पूर्वमनवाप्तम् । सुप्सुपेति समासः । ते । वदनमारुतसौरभं । आदित्सते आदातुमिच्छति । तत्र सञ्चारस्य तदेव फलमित्युत्प्रेक्षायां नूनंशब्दः । वदनमारुतसौरभमिति सप्तमीसमासो योगविभागादुपपाद्यः। केचित् "तदशिष्यं संज्ञाप्रमाणत्वात्" (पा. सू. १-२-५३) इति सौत्रनिर्देशात् 'पूरणगुण' (पा. सू. २-२-११) इत्यादिना गुणस्य षष्ठीसमासनिषेधो न नित्य इति षष्ठीसमासमेवाद्रियन्ते ॥ ६७॥

अर्च्यस्य सम्प्रति सतामवगाढतीर्था
मन्ये प्रगृह्य नलिनी मकरन्दमर्घ्यम् ।
व्यक्तद्विरेफनिनदा विहिताभिमुख्या
पत्युस्त्विषां प्रणयतीव करप्रसारम् ॥ ६८ ॥

अर्च्यस्येति—सम्प्रति प्रातस्सन्ध्यासमये । अवगाढं प्रविष्टं तीर्थं नद्यादिपुण्यजलं यया सा। नलिनी । सतां । अर्च्यस्य पूज्यस्य। त्विषां पत्युः आदित्यस्य । मकरन्दमेवार्घ्यं । प्रगृह्य गृहीत्वा। व्यक्तद्विरेफनिनदा स्फुटभृङ्गनादा, मन्त्रोच्चारणं कुर्वतीव स्थितेति भावः । विहिताभिमुख्या ऊर्ध्वमुखतया कृतसूर्याभिमुख्या च सती। करप्रसारं अर्घ्यविक्षेपाय हस्तप्रसरणं। प्रणयतीव करोतीव । पद्मविकासे करप्रसरत्वमुत्प्रेक्ष्यते ॥ ६८॥

ज्योत्स्नासखीं कुमुदिनीं भ्रमरः प्रहृष्यन्
निर्विश्य नित्यपरिशुद्धरुचिं निशायाम् ।
रागादुपैति नलिनीं रजसाऽभिजुष्टां
किं नाम नाचरति मन्मथहस्तवर्ती ॥ ६९ ॥

ज्योत्स्नेति—भ्रमरः भृङ्ग एव कामुकः । "भ्रमरः

कामुकेऽलिनि" इति यादवः । ज्योत्स्नायास्सखीं शुद्धसंसर्गपरां, दुर्जनसंसर्गमकुर्वतीमिति भावः । नित्यपरिशुद्धरुचिं सदावदातप्रभां, निषिद्धाप्रवर्तिष्णुमनोरथां च। कुमुदिनीं, सतीं पत्नीमित्यपि गम्यते । प्रहृष्यन् । निशायां । निर्विश्य उपभुज्य । रजसा परागेण अभिजुष्टां, रजस्वलां च। नलिनीमपि । रागात् । उपैति । ननु साध्वीं प्रेयसीं हर्षेणोपभुज्य तृप्तः कथमन्यां रजोजुष्टामप्युपैति ? तत्राह—किं नामेति । मन्मथहस्तवर्ती मदनस्य हस्ते वर्तमानः, तत्परवशः। किं नाम नाचरति, नामेति प्रसिद्धौ । अतिकामिनो नास्ति कृत्याकृत्यविवेक इत्यर्थः । भृङ्गोऽपि मौर्वीत्वेन मन्मथहस्तवर्तीति भावः ॥ ६९ ॥

**सन्ध्याच्छलेन पुरुषोत्तम साम्प्रतं ते**
**सैवाधुना भृगुसुता तमसां निहन्त्री ।**
**भूयस्समुत्थितवती धृतपुण्डरीका**
**भोगाय सागरगृहाद्भुवनैकयूनः ॥ ७० ॥**

**सन्ध्येति**—हे पुरुषोत्तम पुरुषेषु श्रेष्ठ । तमसां पापानां । निहन्त्री । सैव भृगुसुता लक्ष्मीः या पूर्वं सागरादाविर्भूतेति भावः । अधुना । सन्ध्याच्छलेन प्रातस्सन्ध्याव्याजेन । धृतपुण्डरीका धृतिर्विकासः, "धृतिस्तु तुष्टिस्सन्तोषः" इति यादवः । तद्वन्ति पुण्डरीकाणि यस्यां सा तथोक्ता । धृतिशब्दान्मत्वर्थे अर्शआद्यच्प्रत्ययः[1] . . . .

[1] अत्र "भुवनैकयूनः लोकैकतरुणस्य । ते तव । भोगाय सम्भोगाय । सागरगृहात् समुद्रभवनात् । भूयः पुनरपि । उत्थितवती आविर्भूतवती ।" इत्यर्थको व्याख्याग्रन्थो गलित इति भाति ।

सन्ध्याऽप्यन्धकाराणां निहन्त्री, भगवतो विजययात्रानुकूलत्वात्तत्सम्भोगाय समुत्थिता चेति भावः । सन्ध्याऽपि सूर्यवत्सागरान्निर्गच्छन्तीव दृश्यत इति लोकदृष्ट्यनुरोधेन सागरगृहादित्युक्तिः ॥ ७० ॥

**चन्द्रातपत्रिदिवशैवलिनीप्रवाहे**
**मग्नोत्थितां कमलिनीमुपसेवमानाः ।**
**प्रत्यग्रभिन्नमुकुलप्रसृतैः परागैः**
**उत्थापयन्त्यगुरुधूपमिवोत्पलिन्यः ॥ ७१ ॥**

**चन्द्रेति**—चन्द्रातपश्चन्द्रप्रकाश एव त्रिदिवशैवलिनीप्रवाहो गङ्गाप्रवाहः "प्रकाशो द्योत आतपः" इत्यमरः ।[1] . . . . .

. . . . . . . . . . . . . . .

. . . . . . . . . . . . . . .

. . . . . . . . . . . . . . .

प्रसृतैः । परागैः । अगुरुधूपं । उत्थापयन्ति उद्गमयन्तीव । स्नातायां राजमहिष्यां परिचारिकाः केशसंस्कारार्थं अगुरुधूपं कुर्वन्तीति तथोत्प्रेक्षा ॥ ७१ ॥

**पौरन्दरीं दिशमनूरुनिबद्धरागां**
**दृष्ट्वा तथा परिणमत्यपरा दिशाऽपि ।**
**स्त्रीणां गतानुगतिकप्रतिपत्तिभाजां**
**ख्यातं ततो भवति कामितकामिनीत्वम् ॥ ७२ ॥**

**पौरन्दरीमिति**—पौरन्दरीं ऐन्द्रीं । दिशं । अनूरुनिबद्धरागां अरुणेन कृतारुण्यां । दृष्ट्वा । अपरा दिशाऽपि तद्व्यतिरिक्ता याम्यादि-

[1] अत्र "तस्मिन् । मग्नोत्थितां पूर्वं मग्नां पश्चादुत्थितां । स्नातानुलिप्तवत् 'पूर्वकालैक' (पा. सू. २-१-४९) इत्यादिना समासः । कमलिनीं सरोजिनीं । उपसेवमानाः उपचरन्त्यः । उत्पलिन्यः कुवलयिन्यः । प्रत्यग्रभिन्नमुकुलप्रसृतैः नूतनविकसितकुड्मलेभ्यः" इत्यर्थको व्याख्याग्रन्थो गलित इति भाति ।

दिगपि। तथा परिणमति अनूरुनिबद्धरागा जायते, अनु पश्चात् सूर्योदये सति उरु यथा तथा बालातपेन कृतारुण्या जायत इत्यर्थः। अनेन कस्यचिद्वनितामनुरञ्जयति कस्मिंश्चित्परपुरुषे अनुरज्यन्तीं दृष्ट्वा अन्या अपि वनिताः तत्र रज्यन्तीत्यपि प्रतीयते। अमुमर्थमवलम्ब्याह—लोक इति। यत एवं दिशाऽप्यभूत् ततो हेतोः, गतानुगतिकप्रतिपत्तिभाजां गतमनुगतिर्यस्यास्तां प्रतिपत्तिं भजमानानां, स्वतः प्रतिपत्तिशून्यानां। स्त्रीणां कामितकामिनीत्वं कयाचित् कामिते कमितुं शीलवत्त्वं। लोके ख्यातं। भवति—

द्वाविमौ पुरुषव्याघ्र परप्रत्ययकारिणौ।
स्त्रियः कामितकामिन्यो मूर्खाः पूजितपूजकाः॥

इति भारतोक्तमुक्तहेतुना लोकप्रसिद्धं जायत इत्यर्थः। 'त्वतलोर्गुणवचनस्य (वा. ८३६) इति त्वप्रत्यये गुणवचनस्यैव पुंवद्भावविधानात् कामितकामिनीत्वमित्यत्र कृतगुणवचनसंज्ञाभावात् पुंवद्भावाप्रसक्तिः॥ ७२॥

**निद्रायते कुमुदिनी चिरसम्प्रबुद्धा**
**सुप्ता प्रबोधमुपयाति सरोजिनी च।**
**यामेषु वृत्तिमनयोरधिगम्य नूनं**
**शिष्यायितं त्वदवरोधनितम्बिनीभिः॥७३॥**

निद्रायत इति—चिरं सम्प्रबुद्धा। कुमुदिनी। निद्रायते [2] निद्रावती भवति। लोहितादित्वात् क्यष्। सुप्ता। सरोजिनी च।

---

[1] अनेन मूले उत्तरार्धारम्भे 'लोके' इति पाठो व्याख्यात्रभिमत इति भाति.

[2] 'लोहितादिडाज्भ्यः क्यष्' (पा. सू. ३–१–१३) इति सूत्रेण निद्राशब्दाद्भवत्यर्थे क्यषि 'वा क्यषः' (पा. सू. १–३–९०) इति विधिबलादात्मनेपदे निद्रायत इत्यस्य सिद्धिः। लोहितादिगृहीतनिद्रादयो वृत्तिविषये तद्वदर्थका इत्यभ्युपगमेनेह निद्रावती भवतीति विग्रहप्रदर्शनम्। अनिद्रावतीत्यभूततद्भावांशस्य मूले 'चिरसंप्रबुद्धा' इति विशेषणेनैव सिद्धतयाऽत्र निद्रावती भवतीत्येतावन्मात्रविग्रहप्रदर्शनं कृतमिति भाति। भट्टोजीदीक्षितादयस्त्वत्र क्यङमेवाभिप्रयन्ति.

प्रबोधं । उपयाति । अनयोः कुमुदिनीसरोजिन्योः । यामेषु वृत्तिं केषु चिद्यामेषु कस्याश्चित्प्रबोधः अन्यदाऽन्यस्या इत्येवंरूपं चरित्रं । अधिगम्य दृष्ट्वा । नूनं । त्वदवरोधानितम्बिनीभिः त्वदन्तःपुरागताभिर्यामिकवनिताभिः । शिष्यायितं शिष्यावदाचरितं । "कर्तुः क्यङ् सलोपश्च" (पा. सू. ३-१-११) इति क्यङन्तात् भावे क्तः । तद्वदेव पर्यायेण सुषुप्तिप्रबोधावङ्गीकृतावित्यर्थः ॥ ७३ ॥

मित्रस्य लुप्ततमसोऽप्यतिरागभाजः
सम्प्रेक्षणं मम न युक्तमितीव मत्वा ।
मीलत्यसौ कुमुदिनी सह तारकाभिः
प्राप्तं व्रतं तदिह राजपरिग्रहाणाम् ॥ ७४ ॥

मित्रस्येति—लुप्ततमसः क्षपितान्धकारस्य, क्षपितपापस्य च । मित्रस्य सूर्यस्य, सख्युश्च । एवंभूतस्यापि, अतिरागभाजः अतिशोणिमभाजः, कामातुरस्य च । सम्प्रेक्षणं । मम । न युक्तमिति मत्वेव । असौ । कुमुदिनी । तारकाभिः सह । मीलति । तारकासु मीलनमस्तमयः, कुमुदिन्या मुकुलीभावो नयननिमीलनमुत्प्रेक्षोपयोग्यर्थः । तत् तस्मात् । इह कुमुदिनीतारकासु । राजपरिग्रहाणां चन्द्रपरिग्रहाणामेव, नृपतिदाराणां च । व्रतं दुष्टहृदयानवलोकलक्षणं । प्राप्तं लब्धं । राजदारोचितमेव ताभिः कृतमित्यर्थः ॥ ७४ ॥

आमोदयोगमवशात्सहसाऽऽश्रयन्ते
पत्युस्त्विषां तव च पादनिषेवणेन ।
क्षिप्तास्त्वया हृदि गृहीतशुचः क्षितीन्द्राः
स्वान्तर्निविष्टमधुपाश्च सरोजकोशाः ॥ ७५ ॥

आमोदेति—त्वया । क्षिप्ताः निरस्ताः । हृदि । गृहीतशुचः बद्धशोकाः । क्षितीन्द्राः प्रतिपार्थिवाश्च । स्वान्तर्निविष्टमधुपाः स्वान्तर्गतभृङ्गाः

शोकप्रतिबिम्बतया इदं विशेषणं । सरोजकोशाः पद्ममुकुलाः उभये च, क्रमात् । अवशात् अनायत्ततया । तव । त्विषां पत्युः सूर्यस्य च । पादयोश्चरणयोः पादानां किरणानां च निषेवणेन । आमोदयोगं हर्षयोगं, सौरभयोगं च । सहसा शीघ्रं । आश्रयन्ते । त्वया निरस्ताः शोचन्तः क्षितीन्द्राः यथा त्वच्चरणसेवया हर्षं भजन्ते, तथा पद्मकोशाः सूर्यकरसम्पर्केण विकासात्सौरभं भजन्त इत्यर्थः ॥ ७५ ॥

[1] आविस्स्मितैरमृतसिन्धुतरङ्गकल्पैः
आकेकरप्रियतमाजनदृष्टिभोग्यैः ।
त्वत्सौखशायनिकसूरिगणेन सार्धं
निर्वेशयोगमुपयाम निरीक्षणैस्ते ॥ ७६ ॥

**आविस्स्मितैरिति**—आविर्भूतं स्मितं येषु तैः, मन्दहासानुगतैः । अमृतसिन्धुतरङ्गकल्पैः सुधासमुद्रस्य वीचिभिरिव स्थितैः । आकेकराणां अद्भुतरूपदर्शनादाकुञ्चितपुटत्वादिविकारयुक्तानां प्रियतमाजनदृष्टीनां भोग्यैः । ते तव । निरीक्षणैः । तव सौखशायनिकानां सुखशयनं पृच्छतां सूरीणां परम[2] पदवासिनां तावकसेवार्थं समागतानां नित्यसूरीणां गणेन । सार्धं । निर्वेशयोगं भोग[3] योगं। उपयाम भजाम । प्राप्तकाले लोट् । तव प्रबोधनेन सुखशयनप्रश्नेन च[4] त्वत्सेवनार्थमागतानामस्माकं देवानां नित्यसूरीणां च त्वदवलोकनैरानन्दयोगस्य प्राप्तः काल इत्यर्थः । सौखशायनिकेति 'पृच्छतौ सुस्नातादिभ्य उपसङ्ख्यानम्' (वा २९५३)इति ठक् । [5] अनुशतिकादित्वादुभयपदवृद्धिः । आकेकरदृष्टिलक्षणं रुक्मिणीविवाहसर्गे [6] लिखितम् ॥ ७६ ॥

---

[1] आविस्तृतै–दे. मु. आविस्स्मृतै–ग्र. मु. [2] पदासेविनां–घ. [3] योगं वयमुप–घ. [4] तत्सेवार्थ–च. [5] 'अनुशतिकादीनां च' (पा. सू. ७-३-२०) इति सूत्रेणेति भावः. [6] ७ पृष्ठ ३ पङ्क्तौ (१३ सर्ग, ९ श्लो).

अधिगतनिलयानामौपवाह्यद्विपानां
मदपयसि वितन्वन्मज्जनोन्मज्जनानि ।
प्रवहति पवमानः स्पन्दयन् मन्दमन्दं
परिणमदरुणिम्नः पङ्कजारण्यकोशान् ॥ ७७ ॥

**अधिगतेति**—अधिगतनिलयानां प्राप्तस्वावासानां । अनेन रात्रौ सज्जीकृत्य यामिकसैन्यं मध्येराजद्वारि निवेशितमिति गम्यते । औपवाह्यद्विपानां गज[1]वाहगजानां । "औपवाह्यो राजवाहः" इति हलायुधः । मदपयसि । मज्जनान्युन्मज्जनानि च । वितन्वन्, शैत्यप्रधानमिदं विशेषणम् । परिणमदरुणिम्नः सद्योविकासात् प्रौढीभवदारुण्यान् । पङ्कजारण्यकोशान् कमलवनमुकुलानि । स्पन्दयन्, सौरभ[2]प्रधानमिदं विशेषणं । पवमानः वायुः । मन्दमन्दं प्रवहति । मन्दप्रकारेण वाति । 'प्रकारे गुणवचनस्य' (पा. सू. ८-१-१२) इति द्विरुक्तिः ॥ ७७ ॥

उपवनमधुपाना[3]मुन्मदस्वैरगीतैः
तनुमरुदुपदिष्टैश्चारुलास्यैर्लतानाम् ।
दरविलुलितदानैर्दन्तिनां कर्णतालैः
समयसमुचितं ते भाति सङ्गीतकृत्यम् ॥ ७८ ॥

**उपवनेति**—उपवनमधुपानां उद्यानभृङ्गाणां । उन्मदस्वैरगीतैः निर्यन्त्रणगीतैः । तनुमरुदुपदिष्टैः मन्दमारुतजनितैः । लतानां । चारुलास्यैः मञ्जुनृत्तैः । दरविलुलितदानैः ईषत्कम्पितदानजलैः । दन्तिनां । कर्णतालैः कर्णकलापैरेव तालैः, वाद्यविशेषैश्च । समयसमुचितं प्रातःकालोचितं । ते तव । सङ्गीतकृत्यं गीत[4]नृत्तवाद्यकृत्यं । भाति । 'कर्णशब्दात्परस्तालः कलापार्थस्तु दन्तिनाम्' । इति यादवः ॥ ७८ ॥

---

[1] वाहनगजानाम्–च. [2] प्रधानविशेषणम्–घ. च. [3] मुन्मदैस्स्वैर–अ.दे.मु. [4] नृत्त–घ. च.

हरति रतिविहारैरर्धविस्रंसितानां
युवजनहृदयानि श्रान्तपञ्चायुधानि ।
उपहितगुणमारादुत्थिताभिर्वधूभिः
कुटिलनियमिताग्रं गुम्भनं चूलिकानाम् ॥ ७९ ॥

**हरतीति**—रतिविहारैः सम्भोगक्रीडाभिः । अर्धविस्रंसितानां अर्धशिथिलितानां । चूलिकानां केशबन्धविशेषाणां । आरात् समीपे । उत्थिताभिः शयनादुत्थिताभिः । वधूभिः । उपहितगुणं निहितकुसुमगुम्भनसूत्रं । कुटिलनियमिताग्रं कुटिलं यथा तथा बद्धाग्रभागं । गुम्भनं ग्रथनं । श्रान्तपञ्चायुधानि बहुकालरतिविहारादुपशान्तमदनानि । युवजनहृदयानि । हरति पुनरप्युद्दीपयतीत्यर्थः ॥ ७९ ॥

क्षितिरियमवधूतध्वान्तनीलोत्तरीया
विकसितमुखपद्मा व्यक्तसन्ध्याङ्गरागा ।
अभिमतकर[1]दाना निर्व्यपेक्षा त्वदन्यैः
अनुभवितुमिव त्वां दर्शयत्यात्मरूपम् ॥ ८० ॥

**क्षितिरिति**—अवधूतं निराकृतं ध्वान्तं नीलोत्तरीयमिव यस्यां सा तथोक्ता । विकसितमुखानि फुल्लाग्राणि पद्मानि यस्यां सा तथोक्ता । व्यक्तस्सन्ध्यायाः अङ्गानामुपचारादवयवानां मेघानां रागः आरुण्यं [2]यस्यां सा तथोक्ता । अभिमतं करदानं राजग्राह्यभागदानं यस्यास्सा तथोक्ता । त्वदन्यैः । निर्व्यपेक्षा अपेक्षारहिता, त्वय्येवानुरक्तेति भावः, [3]तवैव भूभारभरणेन अत्यन्तानुकूलत्वात् । एवंभूता । इयं । क्षितिः । त्वां । अनुभवितुं उपभोक्तुमिव । आत्मरूप दर्शयति अन्धकाराभावात् निजस्वरूपं प्रकटीकरोति । नायकेन उपभोगमिच्छन्ती वनिता यथा शिथिलीकृतोत्तरीया, सस्मितवदनपद्मा उत्तरीय-

---

[1] दानान्निर्व्यपेक्षा—ग्र. दे. मु. [2] यस्यास्सा—च. [3] तथैव—घ.

विस्रंसनात् प्रकाशमानाङ्गरागा, [1] नायकस्य हस्तदानाद्युपचारपरा च तस्य वशीकरणाय निजसौन्दर्यं प्रकाशयति तद्वदिति भावः ॥ ८० ॥

**मधुन इव दयायास्सामरस्यं दधानैः**
**कमलवनमनन्यां कान्तिमध्यापयद्भिः ।**
**फणिपतिरमणीयं देव पर्यङ्कमुज्झन्**
**परिणमय शुभं नः पावनैरक्षिपातैः ॥ ८१ ॥**

**मधुन इति**—हे देव । फणिपतिरमणीयं शेष इव रुचिरं । पर्यङ्कं शयनं । उज्झन् त्यजन् । मधुनः मकरन्दस्येव । दयायाः सामरस्यं सौहार्दं दधानैः, दयापूर्णैरिति यावत् । कमलवनं । अनन्यां अनितरसाधारणीं । कान्तिमध्यापयद्भिः, बुद्ध्यर्थत्वाद्विकर्मकता, कमलवनाधिककान्तिभिरिति यावत् । पावनैः । अक्षिपातैः । नः अस्माकं । शुभं परिणमय परिपक्वं फलोन्मुखं कुरु ॥ ८१ ॥

**[2] दिनमुखमिति नाम श्रावितस्सूतपुत्रैः**
**अभजत जितनिद्रो जागरं यादवेन्द्रः ।**
**[3] सरिदपगमकाले साधु[4]संरक्षणार्थं**
**मुनिभिरिव स एव स्तूयमानो मुकुन्दः ॥ ८२ ॥**

**दिनमुखमिति**—इति इत्थं । नाम प्रसिद्धौ । सूतपुत्रैः वैतालिकसुतैः । "प्रबोधका मागधवन्दिसूतवैतालिका मङ्गलपाठकाश्च" इति हलायुधः । दिनमुखं प्रभातं तद्वृत्तान्तं, श्रावितः, बुद्ध्यर्थत्वात् द्विकर्मकता । "ण्यन्ते कर्तुश्च कर्मणः" इति प्रयोज्यस्य कर्तुरभिहितत्वाद्दिनमुखमित्यनभिहिते कर्मणि द्वितीया । जितनिद्रः । यादवेन्द्रः कृष्णः । सरिदपगमकाले सरितां शोषकाले शरत्काले । मुनिभिः प्रबोधकैः ।

[1] नायकस्य करदाना–घ [2] दिनमुख इति–अ. दे. मु. [3] शरदुपगम–दे. मु. (सरिदुपगम–अ. मु.) [4] संरक्षणार्थी–अ. दे. मु.

न्तूयमानः । स एव [1] यादवेन्द्रः . . . सरितामपगमकाले शोषकाल इति व्याख्येयं, न तु सरितामागमकाले वर्षाकाल इति ।

कार्तिकस्य सिते पक्षे तथैव दिनपञ्चकम् ।
प्रबोधयन्ति देवेशं ऋषयश्च दिवौकसः ॥

इति शरद्येव प्रबोधनस्मरणात् . . . . . . . . ॥ ८२ ॥

**धनमिव निगमानां धर्ममुत्तम्भयिष्यन्**
**त्रिजगदनुविधेयं कर्म निष्पाद्य सान्ध्यम् ।**
**सितगुणपरिधानैः सेवितो मन्त्रिमुख्यैः**
**अलमकुरुत नाथो हैममास्थानपीठम् ॥ ८३ ॥**

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयनाम्नि महाकाव्ये
एकोनविंशस्सर्गः.

---

**धनमिति**—त्रिजगदनुविधेयं "स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते" (भगवद्गीता-३-२१) इत्युक्तरीत्या त्रैलोक्यानुवर्तनीयचरितो नाथः। निगमानां वेदानां। धनमिव तात्पर्यगोचरत्वात्सर्वस्वमिव स्थितं। धर्मं। उत्तम्भयिष्यन् उद्धृत्य स्थापयिष्यन्। सान्ध्यं कर्म निष्पाद्य, लोकानुग्रहार्थं सन्ध्योपासनादिकं कृत्वेति यावत् । सितगुणपरिधानैः विनीतवेषत्वाय शुभ्रवर्णान्तरीयैः। मन्त्रिमुख्यैः। सेवितस्सन्। हैमं हिरण्मयं। आस्थानस्य पीठं सिंहासनं। अलमकुरुत अलङ्कुरुते स्म ॥८३॥

इति श्रीमद्भरद्वाजकुलतिलक-विश्वजिद्याजि-श्रीरङ्गराजाध्वरिवरसूनुना
अप्पयदीक्षितेन विरचिते यादवाभ्युदयव्याख्याने
एकोनविंशस्सर्गः.

---

[1] यादवेन्द्ररूपो—च.

# अथ विंशस्सर्गः.

अथोपहूतैः पुरुहूतजेता
सेनेश्वैररप्रति[1]मानवीर्यैः ।
[2]अभीषुभिस्सूर्य इवाभिदीप्तः
कुबेरगुप्तां ककुभं प्रतस्थे ॥ १ ॥

**अथेति**—अथ प्राभातिककृत्यनिर्वर्तनानन्तरं । पुरुहूतस्य जेता कृष्णः । उपहूतैः प्रस्थानार्थमाहूतैः । अप्रतिमानवीर्यैः [3]अनुपमानपराक्रमैः । सेनेश्वैरः सेनानीभिः । अभीषुभिः किरणैः । उत्तरायणाभिमुखः सूर्य इव । अभिदीप्तः अभितो दीप्तस्सन् । कुबेरेण गुप्तां रक्षितां । ककुभं उत्तरां दिशं । प्रतस्थे । प्रस्थानक्रियाया अकर्मकत्वेऽपि तदन्तर्भूतोद्देशक्रियापेक्षया सकर्मकत्वम् । "अभीषुः प्रग्रहे रश्मौ" इति षकारान्तेष्वमरसिंहः । तालव्यान्तमपि केचिदाहुः ॥ १ ॥

प्रयाणतूर्यध्वनिरस्य भूयान्
घर्मान्तजीमूतरवानुकारी ।
[4]अनर्तयद्धर्ममयूरमाद्यं
प्राप्तस्थितिं पादयुगेन भूम्याम् ॥ २ ॥

**प्रयाणेति**—घर्मान्तजीमूतरवानुकारी प्रावृड्घनस्तानितसदृशः । भूयान् बहुतरः । अस्य कृष्णस्य । प्रयाणतूर्यध्वनिः प्रास्थानिक-

[1] मानशौर्यैः—च. ग्र. दे. मु. [2] अभीशुभिः—ग्र. दे. मु. घ. ट
[3] अनुपमपराक्रमैः—च. [4] आनर्तयत्—घ. ट. ग्र. दे. मु.

वाद्यघोषः । पादयुगेन । भूम्यां । प्राप्तस्थितिं । आद्यं श्रेष्ठं । "आद्यमाद्यभवे श्रेष्ठे" इति विश्वः । धर्ममेव मयूरं । अनर्तयत् नर्तयति स्म । दुष्टनिग्रहेण स्वस्य प्रतिष्ठा भविष्यतीति धर्मं समतोषयदित्यर्थः । घर्मान्तजीमूतरवानुकारीत्युपमायाः [1]सन्निधानेऽपि क्रियान्वयानुरोधात् धर्ममयूरमित्यत्र रूपकाङ्गीकारः । चतुष्पाद्धर्मो द्वापरे पादद्वयेन भूम्यां तिष्ठतीति पुराणमर्यादया 'प्राप्तस्थितिं पादयुगेन भूम्याम्' [2]इत्युक्तिः । मयूरोऽपि पदद्वयेन भूमौ प्रतिष्ठितः पक्षकम्पनेन नृत्यतीति [3]प्रसिद्धम् ॥ २ ॥

**नभःपृथिव्योरुपदिष्टकम्पे**
**नाथस्य यात्रापटहप्रणादे ।**
**उपेतरासां नयनं चकम्पे**
**वामेतरं बाणपुराङ्गनानाम् ॥ ३ ॥**

**नभ इति**—नभःपृथिव्योः । उपदिष्टकम्पे जनितकम्पे । नाथस्य । यात्रायाः पटहस्य आनकस्य प्रणादे सति । उपेतरासां बाणसुताव्यतिरिक्तानां । बाणपुराङ्गनानां । [4]वामादितरद्यस्येति वामेतरं, दक्षिणं नयनं । चकम्पे कम्पते स्म । तासां भाविदुरितसूचकं दक्षिणाक्षिस्फुरणमासीदित्यर्थः । नभसः कम्पोऽत्र नभश्चराणां हृदयकम्पः । पृथिव्यास्तु स्वरूपेण कम्पः, तद्गतप्राणिनां हृदयकम्पश्च विवक्षितः । नभःपृथिवीशब्दाभ्यां तद्गतप्राणिनां लक्षणया तेषां [5]कार्त्स्न्येन भयं व्यज्यते ॥ ३ ॥

---

[1] सन्निधानरूपक्रियान्वयानुरोधात्—घ. [2] इत्युक्तम्—च. [3] प्रसिद्धि —च.
[4] 'वाममितरद्यस्य' इति शुद्धपाठेनात्र भाव्यमिति भाति । ततश्च 'न बहुव्रीहौ' (पा. सू. १-१-२९) इति निषेधान्न सर्वनामत्वम्. [5] कार्त्स्न्यं व्यज्यते—घ. ट

**तस्येन्दुबिम्बं सितमातपत्रं**
**भास्वान् मणीन्द्रो महनीयतेजाः ।**
**ताराश्च मुक्तावलया विरेजुः**
**शिखी रथाङ्गा[1]कृतिरात्मधाम्नः ॥ ४ ॥**

**तस्येति**—आत्मधाम्नः सर्वेषां जीवात्मनामाश्रयभूतस्य । तस्य । इन्दुबिम्बं । सितमातपत्रं श्वेतच्छत्रं सत् । भास्वान् सूर्यः । महनीयं महत्तेजो यस्य तथाभूतः । मणीन्द्रः कौस्तुभस्सन् । ताराः नक्षत्राणि च । मुक्तावलयाः मौक्तिकमालास्सत्यः । शिखी अग्निश्च । रथाङ्गाकृतिः चक्ररूपस्सन् । विरेजुः [2]विराजन्ते स्म । तस्य श्वेतच्छत्रादिषु सत्स्वेव सर्वजीवाश्रयं तमाश्रित्य [3]कृताश्चन्द्रादयो विहितश्वेतच्छत्रादय इव बभुरित्यर्थः । यद्वा तेऽपि च्छत्रादिरूपेण संसेविर इत्यर्थः ॥ ४ ॥

**अग्रे मुकुन्दस्य तदग्रजन्मा**
**दैत्यैस्समं जन्यविहारमिच्छन् ।**
**[4]अवाहयद्यादवभूपतीनां**
**वरूथिनीं शम्बरवैरिपूर्वाम् ॥ ५ ॥**

**अग्र इति**—मुकुन्दस्य । अग्रे । तस्याग्रजन्मा बलदेवः । दैत्यैः समं । जन्यविहारं युद्धक्रीडां । इच्छन् सन् । शम्बरवैरिपूर्वां प्रद्युम्नप्रमुखां । यादवभूपतीनां यदुवंश्यानां राज्ञां । वरूथिनीं सेनाम् । अवाहयत् अनयत् । ज्येष्ठत्वात् सर्वसेनया सह कृष्णस्य पुरतश्चलित इत्यर्थः ॥ ५ ॥

---

[1] क्रान्तरश्मिधाम्नः -ञ. [2] विराजन्ति स्म—च. [3] स्थिता—च. [4] आकार-यद्यादव-ग्र. दे. मु.

**कथंचिदुत्क्षिप्तकरेण सोढं**
**भुग्नाग्रभोगं भुजगेश्वरेण**
**आसन्नभारात्ययजातहर्षा**
**विश्वंभरा सैन्यभरं विषेहे ॥ ६ ॥**

**कथंचिदिति**—उत्क्षिप्तकरेण भारवहने फणसाहाय्यार्थमुद्धृत-हस्तेन । भुजगेश्वरेण शेषेण । भुग्नाग्रभोगं भारवहनेन अवनताग्रफणं यथा तथा । कथंचित् क्लेशेन । सोढं । सैन्यभरम् । विश्वंभरा भूमिः । आसन्नभारात्ययजातहर्षा बाणयुद्धे भारात्ययस्सान्निहित इति तेन जातसन्तोषा सती । विषेहे सहते स्म ।

"भोगो [1]राज्ये धने सौख्ये पालनाभ्यवहारयोः ।
फणे देहे च सर्पस्य वेश्यादीनां भृतावपि" इति वैजयन्ती ॥

**प्रस्थानभाजि प्रथमे यदूनां**
**पृथ्वी स्वयं तद्बलरेणु[2]लक्षात् ।**
**भारावतारप्रियवादलुब्धा**
**प्रायो ययौ पद्मभुवस्सकाशम् ॥ ७ ॥**

**प्रस्थानेति**—यदूनां । प्रथमे मुख्ये, कृष्णे । स्वयं । प्रस्थान-भाजि सति । पृथ्वी । तद्बलरेणुलक्षात् [3] . . . . . . .

[1] राज्यधने घ. [2] लक्ष्यात्.-ग्र. दे. मु. [3] अत्र-" कृष्णसैन्यधूलिव्याजात् । भारावतारप्रियवादलुब्धा श्रीकृष्णेन बाणसैन्यहननपूर्वकं करिष्यमाणस्य तस्मनो भारावतरण-रूपस्य प्रियस्य वादे चतुर्मुखाय निवेदने लुब्धा आशावती । पद्मभुवः नलिनभवस्य चतुर्मुख-ब्रह्मणः । सकाशं सविधं । प्रायः नूनं । ययौ गच्छति स्म ॥ " इत्यर्थकव्याख्याग्रन्थोऽत्र गलित इति भाति.

तत्सेनाधूलिः ब्रह्मलोकपर्यन्तं विजृम्भितेत्यर्थः। सापह्नवोत्प्रेक्षेयमिति प्रायोलक्षशब्दयोर्नान्यतरवैयर्थ्यम् ॥ ७ ॥

**अशेषतश्छादयता दिगन्तान्**
**आरोहता भूमिभृतां च मूर्ध्नः ।**
**प्रायेण सेनारजसा स्वमेव**
**प्रादुष्कृतं [1] लाघवमुल्बणेन ॥ ८ ॥**

**अशेषत इति**—अशेषतः कृत्स्नान्। दिगन्तान्। छादयता आवृण्वता। भूमिभृतां पर्वतानां। मूर्ध्नः अग्राणि च। आरोहता। उल्बणेन अस्थिरत्वादुत्कटेन । सेनारजसा । स्वं स्वकीयमेव । लाघवं अगुरुत्वं । प्रायेण बाहुल्येन । प्रादुष्कृतं अतितरां स्पष्टीकृतमित्यर्थः। यथा अल्पं वैभवं प्राप्य दर्पोत्कटेन क्षुद्रप्रभुणा [2] देशाक्रमणे यतमानेन स्वमेव बालिश्यं प्रादुष्क्रियते, तद्वदिति भावः ॥ ८ ॥

**रथादिघोषैरथ शार्ङ्गपाणेः**
**कल्पात्ययैकार्णवनादकल्पैः ।**
**वित्रासितेव त्रिदशारिलक्ष्मीः**
**इयेष गन्तुं यदुवीरदुर्गम् ॥ ९ ॥**

**रथेति**—अथ कृष्णसेनानिर्गमनानन्तरं। कल्पात्ययैकार्णवनादकल्पैः प्रलये एकीभूतानां समुद्राणां घोषेण तुल्यैः। शार्ङ्गं पाणौ यस्य तस्य कृष्णस्य। रथादिघोषैः। वित्रासिता उद्वेजितेव। त्रिदशानामरेः बाणस्य लक्ष्मीः। यदुवीरस्य यदुश्रेष्ठस्य दुर्गं परेषां दुष्प्रापं पुरं द्वारकाम्। गन्तुं। इयेष। भीता हि किञ्चिद्दुर्गं प्रवेष्टुमिच्छन्तीति भावः। भगवत्प्रस्थानमात्रेण तदभिमुख्या निजलक्ष्म्या बाणः त्यक्तप्रायो जात इत्यर्थः ॥ ९ ॥

[1] लाघवमुज्जगार—झ. [2] देशाक्रमण एव—घ. ट.

अथ क्षणादात्मभुवं प्रयान्तं
परिष्कृतं पञ्चभिरायुधाग्र्यैः ।
आशाबलेन स्वयमुत्तराशा
प्रायः प्रतीयाय जगत्प्रतीक्ष्यम् ॥ १० ॥

**अथेति**—अथ । क्षणात् प्रयान्तं त्वरितं गच्छतम् । पञ्चभिरायुधाग्र्यैः आयुधप्रवरैश्चक्रादिभिः । परिष्कृतम् । जगत्प्रतीक्ष्यं लोकपूज्यम् । आत्मभुवं कृष्णम् । उत्तराशा उदीची । आशाबलेन दिदृक्षौत्कट्येन । प्रायः । स्वयम् । प्रतीयाय । कृष्णस्य शीघ्रं शोणितपुरप्राप्त्या तस्या दिश एव प्रत्युद्गमनमुत्प्रेक्ष्यते ॥ १० ॥

पुरं ततश्शोणितपूर्वमग्रे
ददर्श दैत्याधिपदर्पहन्ता ।
खगेन्द्रपक्षानिलतीव्रघातात्
त्रासादिवोत्कम्पितकेतुहस्तम् ॥ ११ ॥

**पुरमिति**- ततः समीपगमनानन्तरं । दैत्याधिपानां दर्पहन्ता कृष्णः । खगेन्द्रपक्षानिलस्य तीव्रघातात् उत्कटाभिघातात् हेतोः । त्रासात् भयादिव । उत्कम्पितः सञ्जातोत्कम्पः केतुरेव हस्तः यस्य तत् । शोणितपूर्वं शोणितशब्दपूर्वकं पुरं शोणितपुरम् । अग्रे । पुरतः । ददर्श । [1] शोणितपूर्वमिति वाचकस्य वाच्ये उपचारः ॥ ११ ॥

पुरोपकण्ठे पुरभिन्नियोगात्
प्राकारभावं प्रमथा भजन्तः ।
प्रलम्बहन्तुः प्रसमीक्ष्य वेगं
भीताः पलायन्त भृशार्तनादाः ॥ १२ ॥

**पुरेति**—पुरस्य उपकण्ठे समीपे । पुरभिदः शिवस्य नियोगात् । प्राकारभावं शोणितपुररक्षणाय प्राकारत्वम् । भजन्तः । प्रमथाः शिवपारि-

[1] अत एव 'हिरण्यपूर्वं कशिपुं प्रचक्षते' इत्यादिप्राचीनप्रयोगाश्चेति बोध्यम्.

षदाः। प्रलम्बहन्तुः बलदेवस्य। वेगं आगमसम्भ्रमम्। प्रसमीक्ष्य। भीताः। भृशार्तनादाश्च सन्तः। पलायन्त पलायन्ते स्म। परोपसर्गादयतेर्लङ्। 'उपसर्गस्यायतौ' (पा. सू. ८-२-१९) इति रेफस्य लकारः॥ १२॥

**इतस्ततस्संपततां यदूनां**
**व्यक्तानुबन्धं विरुदैरुदारैः।**
**सुरद्विषश्शुश्रुवुरेकतान**
**कलध्वनिं काञ्चनकाहलीनाम्॥ १३॥**

**इतस्तत इति**—इतस्ततः समन्तात्। संपतताम्। यदूनाम्. उदारैः महद्भिः। विरुदैः, विरुदानि शत्रुविजयख्यातिचिह्नगीत्यादीनि, "सपत्नविजयख्यातिचिह्नं विरुदमस्त्रियाम्" इति यादवः, तैः। व्यक्तानुबन्धं स्फुटसम्पर्कम्। काञ्चनीनां काहलीनां वाद्यविशेषाणाम्। कलमव्यक्तमधुरं ध्वनिम्। सुरद्विषः शोणितपुरस्था दैत्याः। [1]एकतानं विविच्य श्रोतुमेकाग्रं यथा तथा। शुश्रुवुः। काञ्चनशब्दात् 'प्राणिरजतादिभ्योऽञ्' (पा. सू. ४-३-१५४) इति विकारार्थेऽञ्प्रत्यये सति काञ्चनशब्दस्तद्विकारवाची॥ १३॥

**[2]कशाग्रसंस्पर्शममृष्यमाणैः**
**समीरवेगैस्समरावलिप्ताः।**
**उदग्रहेषामुखरैस्तुरङ्गैः**
**वृष्ण्यन्धका वैरिपुरीमवृण्वन्॥ १४॥**

**कशाग्रेति**—समरावलिप्ताः युद्धविषये दृप्ताः। वृष्ण्यन्धकाः वृष्णिवंश्या अन्धकवंश्याश्च राजानः। कशा अश्वानां ताडनी,

[1] 'एकतानोऽनन्यवृत्तिः' इति अमरकोशोऽत्र बोध्यः. [2] कराग्र—ग्र. मु.

तदग्रस्य संस्पर्शं अमृष्यमाणैः तावन्मात्रमप्यसहमानैः । समीरवेगैः । उदग्रहेषामुखरैः तारेण हेषितेन शब्दवद्भिः । तुरङ्गैः । वैरिणो बाणस्य पुरीम् । अवृण्वन् आवृण्वन्ति स्म ॥ १४ ॥

उद्वेलवेगांस्तनतो गभीरं
और्वप्रतिच्छन्दविदीप्तदृष्टीन् ।
अचोदयन् दानववप्रभङ्गे
स्तम्बेरमान् सागरपोतकल्पान् ॥ १५ ॥

**उद्वेलेति**—उद्वेलवेगान् निर्मर्यादवेगान् । गभीरं यथा तथा । स्तनतः बृंहितं कुर्वतः । और्वप्रतिच्छन्दाः बाडवाग्निसदृश्यः विदीप्ता दृष्टयः येषां तान् । अत एव सागरपोतकल्पान् समुद्रडिम्भानिव स्थितान् । स्तम्बेरमान् । दानवस्य बाणासुरस्य वप्रभङ्गे तत्पुरप्राकार-भङ्गे । अचोदयन् चोदयन्ति स्म । प्राकारमूलबन्धवाचिना वप्रशब्देन प्राकारो लक्षणया निर्दिष्टो मूलभङ्गपर्यन्तं तद्भङ्गद्योतनाय ॥ १५ ॥

प्राकारभङ्गे प्रसभं प्रयुक्ता
दम्भोलिभीमायतदन्तकाण्डाः ।
[1] ऊर्ध्वप्रवृत्तैर्निज[2]हस्ततालैः
उत्तम्भयामासुरिवान्तरिक्षम् ॥ १६ ॥

**प्राकारभङ्ग इति**—प्रसभं हठात् । प्राकारभङ्गे । प्रयुक्ताः [3] चोदिताः । दम्भोलिभीमानि वज्रवद्भयंकराणि आयतानि च दन्त-काण्डानि येषां ते । गजा इति शेषः । ऊर्ध्वप्रवृत्तैः उपरि प्रसारितैः । निजहस्ता एव तालाः तालवृक्षाः तैः । अन्तरिक्षम् । उत्तम्भयामासुरिव ।

---

[1] ऊर्ध्वं प्रवृत्तै–झ. [2] हस्तनालै–ग्र. दे. मु. [3] बोधिता–घ. ट.

दन्तैः प्राकारभङ्गसौकर्याय उपरि प्रसारिताश्शुण्डा अत्यौन्नत्यात् अन्तरिक्षस्योत्तम्भनस्तम्भा इवाभासन्तेत्युत्प्रेक्षा। वृतुधातुर्ण्यर्थान्तर्भावविवक्षायां सकर्मक इति प्रवृत्तैरित्यस्य प्रवर्तितैरित्यर्थे साधुता। अत एव तेन निर्वर्तितमित्यर्थे 'तेन निर्वृत्तम्' (पा. सू. ४–२–३८, ५–१–७९) इति सौत्रनिर्देशः ॥ १६ ॥

**असह्यवेगैस्सहसा बलोघैः**
**आक्रम्यमाणा बलिनां यदूनाम्।**
**प्रचुक्षुभे दैत्यपुरी प्रभूता**
**संवर्तभिन्नेव समुद्रवेला ॥ १७ ॥**

**असह्येति**—असह्यवेगैः अविषह्यरयैः। बलिनां शक्तिमताम्। यदूनां। बलौघैः सेनासमूहैः। सहसा अतर्कितं। आक्रम्यमाणा। प्रभूता समृद्धा। दैत्यपुरी। संवर्तभिन्ना प्रलये विदीर्णा। समुद्रस्य वेला जलवृद्धिरिव। प्रचुक्षुभे क्षुभिता ॥ १७॥

**यथार्थशौर्या यदुवीरयोधाः**
**स्थानानि चित्तानि च दानवानाम्।**
**व्यकम्पयन् विक्रमसत्कथानां**
**सिद्धान्तभागैरिव सिंहनादैः ॥ १८ ॥**

**यथार्थेति**—यथार्थं नियतं शौर्यं पराक्रमणं येषां ते यथार्थशौर्याः। पदार्थानतिवृत्त्यर्थस्य यथाशब्दस्य प्रयोजनवाचिना अर्थशब्देन 'यथाऽसादृश्ये' (पा. सू. २–१–७) इत्यव्ययीभावे, ततश्शौर्यशब्देन बहुव्रीहिः। यदुवीरयोधाः यदुश्रेष्ठस्य भटाः। विक्रमाः

शौर्यकरणान्येव सत्कथाः कूटयुद्धकल्पच्छलजात्यादिरूपासदुत्तरप्रवेश-रहिता वादकथाः तासां। सिद्धान्तभागैरिव स्थायिपक्षैरिव स्थितैः। सिंह-नादैः क्ष्वेलितैः। दानवानां। स्थानानि गृहाणि। चित्तानि च। व्यकम्पयन् कम्पयन्ति स्म। स्थानानां कम्पश्चलनं, चित्तानां भयमिति यथार्हमर्थो ग्राह्यः। क्ष्वेलितानां सिद्धान्त[1]भागत्वेत्प्रेक्षणेन भगवद्योधानां जयशालित्वं व्यज्यते॥ १८॥

जहार चित्तानि बिभेद सौधान्
श्रोत्राण्यरीणां बधिरीचकार।
अनन्यशब्दं च जगद्वितेने
घोरस्तदा यादवसैन्यघोषः॥ १९॥

जहारेति—तदा पुरोपमर्दनसमये। घोरः भयंकरः। यादव-सैन्यस्य घोषः। अरीणां। चित्तानि। जहार मूढानि चकार। सौधान् बिभेद कम्पनेन भग्नांश्चकार। श्रोत्राणि च बधिरीचकार अनुपहतान्यप्युपहतानि चकार। अरीणामिति वाक्यत्रयेऽपि सम्बन्धः। जगच्च अनन्यशब्दं शब्दान्तररहितं वितेने शब्दान्तराण्यभिबभूवेत्यर्थः॥ १९॥

विमथ्यमानात्स्वपुराद्यदूनां
मन्थाचलेनेव महाबलेन।
विनिष्पपात त्रिदशारिनेता
काले समुद्रादिव कालकूटः॥ २०॥

विमथ्यमानादिति—त्रिदशारिनेता असुराणां नायको बाणः। यदूनां। महाबलेन महता सैन्येन। मन्थाचलेन मन्दररूपेण पर्वतेन।

---

[1] भागत्वेनोत्प्रेक्षणेन—घ. ट.

विमथ्यमानात् निष्पिष्यमाणात्। स्वपुरात्। काले अमृतमथनकाले। समुद्रात। कालकूटः क्ष्वेलविशेष इव विनिष्पपात॥ २०॥

स रोषरूक्षो बहुदीप्तहेतिः
[1]दिशो दिधक्षन्निव दैत्यवह्निः।
कृष्णाम्बुवाहप्रमुखं प्रतस्थे
तापच्छिदा तेन शमं प्रयास्यन्॥ २१॥

स इति—रोषरूक्षः कोपेन परुषः। बहुदीप्तहेतिः बहुलोज्ज्वलायुधः। दिशः। दिधक्षन् दग्धुमिच्छन्निव स्थितः। सः। दैत्यः बाणासुर एव वह्निः। कृष्ण एवाम्बुवाहः तस्य प्रमुखं अभिमुखं यथा तथा। तापच्छिदा आधिदैविकादितापत्रयहारिणा। तेन कृष्णाम्बुवाहेन। शमं गर्वशान्तिं। प्रयास्यन्। प्रतस्थे प्रस्थितः। उपमानार्थपक्षे—रूक्षः तीक्ष्णः। हेतयो ज्वालाः। तापः आतपाद्यूष्मा। शमः नाशः॥ ॥२१॥

सरित्पतीनामिव सन्निपाते
वार्ष्णेयदैतेयबलोदधीनाम्।
अदभ्रसङ्घोषमभूतपूर्वं
युगान्तसंवादि बभूव युद्धम्॥ २२॥

सरित्पतीनामिति—वार्ष्णेयानां वृष्णिवंश्यानां दैतेयानां असुराणां च बलानि सैन्यान्येव उदधयः तेषां। सरित्पतीनामिव प्रसिद्धोदधीनामिव। सन्निपाते मेलने सति। अदभ्रो बहुलस्सङ्घोषः संसृष्टो घोषः कोलाहलो यस्मिंस्तत्तथोक्तम्। अभूतपूर्वं पूर्वमभूतम्। सुप्सुपेति समासः। युगान्तसंवादि प्रलयसदृशम्। युद्धं। बभूव।

[1] दिशा दिधक्षन्—ङ.

वृष्णिशब्दात् 'इतश्चानिञः' (पा. सू. ४-१-१२२) इत्यपत्यार्थे ढकि वार्ष्णेयः ॥ २२ ॥

बलद्वयक्षुण्णमहीतलोत्थं
रजस्तदा संवृतसर्वलोकम् ।
अकल्पयत्स्वेतरतत्त्वलोपात्
अपञ्चभूतामिव विश्वसृष्टिम् ॥ २३ ॥

**बलेति**—तदा युद्धसमये । बलद्वयक्षुण्णमहीतलोत्थं कृष्णबाणसैन्यद्वयनिष्पिष्टाद्भूतलादुत्थितम् । संवृतसर्वलोकं आच्छादितसकलभुवनम् । रजः । स्वेतरतत्त्वलोपात् रजोऽतिरिक्तानां जलादितत्त्वानां लोपात् । विश्वसृष्टिं लोकानां सृष्टिम् । अपञ्चभूतां पृथिव्येकरूपामिव । अकल्पयत् अकरोत् ॥ २३ ॥

प्रथीयसा सूक्ष्मनिरन्तरेण
क्षौमाभिरामेण परागभूम्ना ।
प्रच्छन्नसेनाङ्गतया तदानीं
आसीज्जयश्रीरवकुण्ठितेव ॥ २४ ॥

**प्रथीयसेति**—प्रथीयसा विपुलतरेण । सूक्ष्मेण लघुना, निरन्तरेण सान्द्रेण च । क्षौमाभिरामेण दुकूलेनेव मनोज्ञेन । परागभूम्ना सेनाधूलिबाहुल्येन । प्रच्छन्नसेनाङ्गतया प्रच्छन्नानि तिरोहितानि सेनाङ्गानि रथाश्वादीन्येव अङ्गानि अवयवा यस्य तस्य भावेन । तदानीम् । जयश्रीः युद्धरङ्गगता । अवकुण्ठितेवासीत् । स्त्रीत्वाविवक्षया प्रच्छन्नसेनाङ्गेत्यत्र स्त्रीप्रत्ययो न कृतः । केचित्तत्रापि स्त्रीप्रत्यये 'संज्ञाजातिव्यतिरिक्ता गुणवचनाः' इति मतमनुरुध्य 'त्वतलोर्गुणवचनस्य' (वार्तिकं—३९२७) इति पुंवद्भावमाहुः ॥ २४ ॥

रजोनुबन्धादभिसंवृताङ्गी
भास्वत्करस्पर्शमनश्नुवाना ।
निवारिताशावितातिस्तदाऽऽसीत्
नभस्स्थली नाकिभिरप्यदृश्या ॥ २५ ॥

रज इति—रजोऽनुबन्धात् रजस्सम्पर्कात् । अभिसंवृताङ्गी अवकुण्ठितशरीरा । भास्वत्करस्पर्शं सूर्यकिरणसंपर्कम् । अनश्नुवाना अभजन्ती । निवारिताशावितातिः आच्छादितदिक्पङ्क्तिः । नभस्स्थली । नाकिभिः समापगतैः स्वर्गिभिरपि । अदृश्या द्रष्टुमशक्या । आसीत् । अत्र नभस्स्थल्या रजस्वलासमाधिर्गम्यते । साऽपि रजस्सम्बन्धात् अवकुण्ठितसर्वशरीरा [2] अस्पृश्यत्वात्करस्पर्शमलभमाना । 'यां मलवद्वाससं सम्भवन्ति' (तै-सं. २–५–१) इत्यादिनिन्दनात् पत्युपभोगस्नानाभ्यङ्गदन्तधावनादिविषयचापलरहिता च सती, दर्शननिषेधात् समीपगतैरपि पुरुषैरदृश्या भवतीति भावः ॥ २५ ॥

रणाख्यदर्शे रजसोत्थितेन
प्रच्छाद्यमाने तमसेव भानौ ।
निस्त्रिंशधारासलिले निमग्नाः
शुद्धिं परामन्वभवन् सुयोधाः ॥ २६ ॥

रणेति—रणाख्यदर्शे रण[3]संज्ञायाममावास्यायां । तमसा राहुणेव । उत्थितेन । रजसा । भानौ । प्रच्छाद्यमाने सति । निस्त्रिंशः [1]............ ........................................................
............... .... निस्त्रिंशः' इति वैजयन्ती, तस्य धारा अग्रमेव

---

[1] 'सह सुपा' (पा. सू. २-१-४) इत्यत्र विभक्तेन 'सुपा' इति सूत्रेणेत्यर्थः ।
[2] अस्पर्शत्वा–घ. ट. [3] संज्ञायामिवामा–घ. ट. [4] "सुहीपत्राकृतिरसिनामा आयुधविशेषः 'स्नुहीदलाभो'" इत्ययं ग्रन्थोऽत्र ग्रन्थपातस्थाने पाठ्य इति भाति.

सलिलं तास्मिन् । निमग्नाः । सुयोधाः सुभटाः । परां उत्कृष्टां । शुद्धिं । अन्वभूवन्. खड्गधाराभिपतनेन परिपूता आसन्नित्यर्थः । सूर्यग्रहे "सर्वं गङ्गासमं तोयम्" (व्यासस्मृतिः) इति स्मरणात् यत्र क्वचित्तोयमात्रे निमग्ना अपि परां शुद्धिं प्राप्नुवन्तीति भावः ॥ २६ ॥

**असृक्छटासारवशाद्ध्वजिन्या**
**रजस्समेते तमसि प्रशान्ते ।**
**सत्वानुरूपं विदधे प्रमोदं**
**समान्मिथस्संमुखयन् प्रकाशः ॥ २७ ॥**

**असृगिति**—ध्वजिन्याः सेनायाः । असृक्छटायाः रक्तसन्दोहस्य आसारवशात् धारासम्पातवृष्ट्यायत्ततया । रजस्समेते धूलिसहिते । तमसि अन्धकारे । प्रशान्ते सति । समान् शौर्येण अन्योन्यानुरूपान् योधान् । सत्वानुरूपं बलानुरूपं । मिथः अन्योन्यं । सम्मुखयन् सम्मुखान् कुर्वन्, अन्योन्यं सम्मुखी[1]कृत्य यावद्बलं योधयन्निति यावत् । प्रकाशः आलोकः । प्रमोदं रणसौकर्यलाभात् योधानां हर्षं । विदधे । अत्र रजस्तमोगुणप्रशान्त्या समान् रजस्तमःप्रयुक्तबुद्धिवैषम्यरहितान् पुरुषान् सत्वानुरूपं सत्वगुणानुरूपं मिथस्संमुखयन् आध्यात्मिकैकाग्रहान् कुर्वन् प्रकाशो बोधः तेषां सुखं यथा विधत्ते,

तत्र सत्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥
(भगवद्गीता १४—६)

इत्यादिस्मरणात्, तद्वदिति ध्वन्यते ॥ २७ ॥

[1] कृत्य, बलं—घ. ट.

ततो हरस्त्रातुमनास्स्वभक्तं
दत्ताभयं दानवसार्वभौमम् ।
अनुद्रुतो भूतगणैरनन्तैः
प्रत्युद्ययौ विश्वपतिं प्रकुप्यन् ॥ २८ ॥

तत इति—ततः युद्धारम्भानन्तरं । स्वस्य भक्तं । दत्तमभयं यस्मै तं । दानवानां सार्वभौमं महाराजं बाणं । त्रातुं मनो यस्य स तथोक्तः । 'तुं काममनसोरपि' इति मलोपः[1] । अनन्तैः । भूतगणैः प्रमथगणैः । अनुद्रुतः अनुसृतः । हरः । प्रकुप्यन् सन् । विश्वस्य पतिं विष्णुं कृष्णम् । प्रत्युद्ययौ ॥ २८ ॥

तमुन्मदादग्रवृषाधिरूढं[2]
सिताचले मेरुमिव ज्वलन्तम् ।
शरैः प्रतिप्रास्थित शार्ङ्गधन्वा
देवं सुधासूतिकलावतंसम् ॥ २९ ॥

तमिति—शार्ङ्गधन्वा कृष्णः । उन्मदं उन्मदिष्णुं उदग्रं उन्नतं वृषमधिरूढम् । अत एव, सिताचले कैलासे । मेरुमिव । ज्वलन्तं दीप्यमानम् । सुधासूतिकलावतंसं चन्द्रकलाशेखरम् । तं देवं हरम् । शरैः । प्रतिप्रास्थित प्रत्युज्जगाम । "समवप्रविभ्यस्स्थः" (पा. सू. १-३-२२) इत्यात्मनेपदिनः ष्ठाधातो[3]र्लुङ् । हरवृषभस्य धावल्यं प्रसिद्धम् । हरस्य—

तप्तहेमनिकायाभं नीलकण्ठं त्रिलोचनम् ।
प्रसादसुमुखं वीक्ष्य प्रणेमुर्जातकौतुकाः ॥

---

[1] 'लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि । समो वा हितततयोर्मांसस्य पचियुड्घञोः' इति काशिकावृत्तौ अपरस्पराः क्रियासातत्ये (पा. सू. ६-१-४४) इति सूत्रे दृश्यते. [2] तमुन्नतोदग्र–ध. ट. [3] निष्ठानिधातोः–च.

इत्यादिपुराणेषु सुवर्णवर्णत्वमपि प्रसिद्धमिति "सिताचले मेरुमिव ज्वलन्तम्" इत्युक्तम् ॥ २९ ॥

**शिलीमुखैश्शौरिधनुर्विमुक्तैः**
**विस्मारितान् पूर्वविकत्थनानि ।**
**पलायमानान् प्रमथानशेषान्**
**मेने पशूनेव पतिः पशूनाम् ॥ ३० ॥**

**शिलीमुखैरिति**—पशूनां पतिश्शिवः । शौरिधनुर्विमुक्तैः कृष्णचापमुक्तैः । शिलीमुखैः बाणैः । पूर्वविकत्थनानि प्राक्तनान्यागमनकाले कृतान्यात्मश्लाघावचनानि । विस्मारितान् । पलायमानान् । प्रमथान् स्वपारिषदान् । पशूनेव मेने, कातर्येणाविशेषादिति भावः । यद्यपि विपूर्वस्स्मरतिस्स्मृत्यभाववाची । तथाऽपि प्रतियोगितया स्मृत्यनुप्रवेशोऽस्तीति 'गतिबुद्धि' (पा. सू. १-४-५२) इत्यादिना द्विकर्मकत्वोपपत्तिः । अत एव 'हृक्रोरन्यतरस्याम्' (पा. सू. १-४-५३) इति सूत्रे हरतेः प्रापणार्थस्य स्वातन्त्र्येण गत्यर्थत्वाभावेऽपि, प्रापणनान्तरीयकगतिप्रतीतिरस्तीति गत्यर्थतामङ्गीकृत्य प्राप्तविभाषेत्युक्तम् । 'ण्यन्ते कर्तुश्च कर्मणः' इति प्रयोज्यकर्मणां कर्मत्वस्य निष्ठयाऽभिधानात्कर्तुरीप्सितकर्मानभिधानेन विकत्थनानीति द्वितीया ॥ ३० ॥

**[2] आस्वादनीं दानवशोणितानां**
**अकुण्ठितामद्रिविदारणेऽपि ।**
**अनाहतास्त्रो युधि शम्बरारिः**
**संस्तम्भयामास गुहस्य शक्तिम् ॥ ३१ ॥**

**आस्वादनीमिति**—युधि युद्धे । अनाहतास्त्रः अप्रतिहतायुधः । शम्बरस्यारिः प्रद्युम्नः । दानवशोणितानां तारकाद्यसुरक्षतजानां ।

[1] कर्तृत्वस्य—घ. ट. [2] आस्वादिनीं—ग्र. दे. मु. आस्वादिकां—झ.

आस्वादनीम । 'कृत्यल्युटो बहुलम्' (पा. सू. ३-३-११३) इति बहुल-ग्रहणात् कर्तरि ल्युट् । टित्त्वात् ङीप् । अद्रिविदारणेऽपि क्रौञ्चपर्वत-भेदनेऽपि । अकुण्ठितां अहततैक्ष्ण्याम् । गुहस्य स्कन्दस्य । शक्तिं[1] काम् आयुधविशेषम् । संस्तम्भयामास सम्यक् स्तब्धं चकार ॥ ३१ ॥

क्लेशादिदोषैरपराहतेन
क्रीडामनुष्येण जनार्दनेन ।
ज्वरे निरस्ते गिरिशप्रयुक्ते
वीतज्वरं विश्वमिदं बभूव ॥ ३२ ॥

क्लेशादीति—क्लेशाः अविद्यास्मितारागद्वेषाभिनिवेशाः, आदि-शब्देन कर्मविपाकादयो गृह्यन्ते. एते योगशास्त्रोक्ताः पुरुषदोषाः, परब्रह्मरूपत्वादेतैः । अपराहतेन अनाहतेन । क्रीडामनुष्येण जनार्द-नेन । गिरिशप्रयुक्ते कैलासवासिना नीललोहितेन प्रहिते । ज्वरे निरस्ते वैष्णवज्वरं सृष्ट्वा क्षिप्ते सति । विश्वं जगत् । वीतज्वरं महेश्वरज्वरनिरासरूपभगवच्चरितानुसन्धानस्य ज्वरशान्त्युपायस्य सम्प-न्नत्वादपगतज्वरभयम् । बभूव । तथा भागवते माहेश्वरज्वरं प्रति भगवद्वचनम्—

त्रिशिरस्ते प्रसन्नोऽहं व्येतु ते मज्ज्वराद्भयम् ।
यो नौ स्मरति संवादं तस्य त्वन्न भवेद्भयम् ॥ इति ॥ ३२ ॥

अथ प्रयुक्तानसुरेन्द्रगुप्त्यै
प्रसह्य वह्नीनपि पञ्च जित्वा ।
अजृम्भयद्भावितजृम्भणास्त्रो
वृषध्वजं विष्णुरचिन्त्यभूमा ॥ ३३ ॥

अथेति—अथ ज्वरनिरासानन्तरम् । अचिन्त्यभूमा अमेयमहिमा विष्णुः । असुरेन्द्रगुप्त्यै बाणस्य संरक्षणाय । प्रयुक्तान् शङ्करेण

[1] 'कासूशक्ती कुवाच्यस्त्रे' इति यादवकोशोऽत्र बोध्यः.

प्राकारात्मना निवेशितान्। पञ्चापि वह्नीन्। प्रसह्य हठात्। जित्वा। भावितजृम्भणास्त्रः प्रयुक्तजृम्भणास्त्रः सन्। वृषध्वजं शङ्करं। अजृम्भयत् जृम्भयति स्म। जृम्भणं वातोद्रेकविशेषेण मुखविवरणं, तत्र व्याप्तमकरोदित्यर्थः। प्रसह्येति हठार्थमव्ययम्। "प्रसह्य तु हठार्थकम्" इत्यमरः।

**शरव्यभूतत्रिपुरेऽप्यमोघं**
**शूलायुधे शौर्यमवेक्ष्य शौरेः।**
**पुरन्दरप्रत्युपरोधजातं**
**व्ययोजयन्विस्मयमादितेयाः॥ ३४॥**

**शरव्येति**—शरव्यभूतं शरलक्ष्यत्वं प्राप्तं त्रिपुरं यस्य तस्मिन्। शूलायुधेऽपि। अमोघं अवितथम्। शौरेः। शौर्यम्। आदितेयाः देवाः। अवेक्ष्य। पुरन्दरप्रत्युपरोधेन पारिजातहरणे इन्द्रविजयेन जातं। विस्मयं। व्ययोजयन् वियुक्तमकुर्वन्, व्यसृजन्नित्यर्थः। 'युजिर् योगे' (रुधादि १४४५) इति धातोः हेतुमति णिच्। त्रयाणां पुराणां समाहारः त्रिपुरं, [1]पात्रादिः॥ ३४॥

**बाणस्सहस्रेण[2] भुजैः प्रमाद्यन्**
**आत्मानुरूपैरसुरैस्समेतः।**
**असह्यशस्त्रास्त्रबलो बलादीन्**
**प्रत्यग्रहीत्प्रत्ययितप्रभावान्॥ ३५॥**

**बाण इति**—सहस्रेण भुजैः सहस्रसङ्ख्यैर्भुजैः[3]। प्रमाद्यन्। आत्मानुरूपैः शौर्ये स्वसदृशैः। असुरैः। समेतः असह्यं शस्त्राणामायुधानां अस्त्राणामाग्नेयवारुणादीनां च बलं सामर्थ्यं यस्य . . . .

---

[1] इदं वाक्यं च-कोशे न दृश्यते. 'पात्राद्यन्तस्य न' (वा. १५५९) इत्यनेन निषेधात् 'अकारान्तोत्तरपदो' (वा. १५५८) इत्यनेन न स्त्रीत्वमिति भावः.
[2] भुजैः स माद्यन्. [3] बाहुभिः- ङ.

[1] . . . . . . . . . . . . . .

. . . . . . . . . . . . . .

एकवचनान्तता । तारकादेराकृतिगणत्वादितचि प्रत्ययितशब्दस्साधुः ॥ ३५ ॥

**स वज्रनिर्घोषनिभाट्टहासो**
**गात्रेण रुन्धन् गगनावकाशम् ।**
**उदग्रधन्वा शरवृष्टिमुग्रां**
**उत्पातजीमूत इवोज्जगार ॥ ३६ ॥**

**स इति**—वज्रनिर्घोषनिभाट्टहासः अशनिध्वानतुल्याट्टहासः । गात्रेण गगनावकाशं रुन्धन्, अतिविपुलाकारत्वादिति भावः । उदग्रधन्वा उच्छ्रितचापः । सः बाणः । उत्पातजीमूत इव अशनिघोषगगनाक्रमणमहेन्द्रचापवान् उत्पातकालमेघ इव । उदग्रां उत्कटाम् । शरवृष्टिं । उज्जगार उद्गिरति स्म । मुमोचेत्यर्थः । पक्षे शरं जलम् । 'शरं जले शरः काण्डे' इति विश्वः ॥ ३६ ॥

**शरासनैरर्धसहस्रसङ्ख्यैः**
**योद्धुं प्रवृत्तो युगपत्प्रकृष्टैः ।**
**प्रतिद्रुतान् प्रार्दयत प्रकुप्यन्**
**एकस्समस्तानपि यादवाग्र्यान् ॥ ३७ ॥**

**शरासनैरिति**—युगपत्प्रकृष्टैः एककालमाकृष्टैः सहस्रस्यार्धं अर्धसहस्रं, लक्षणया पञ्चशत्युच्यते, सा सङ्ख्या येषां तैः । शरासनैः करपञ्चशतीगृहीतैः । योद्धुम् । प्रवृत्तः । प्रकुप्यन् । एकः बाणः । प्रति-

[1] "अत्र सः बाणः । प्रत्ययितप्रभावान् प्रत्ययितः संजातविश्वासः प्रभावो महिमा येषां तान् । बलादीन् बलरामप्रभृतीन् । प्रत्यग्रहीत् युद्धार्थं प्रतिगृह्णाति स्म । 'विंशत्याद्यास्सदैकत्वे' इति कोशात्सहस्रशब्दस्य" इत्यर्थकोऽत्र व्याख्याग्रन्थो गलित इति भाति ।

द्रुतान् युद्धाय प्रत्यागतान् । समस्तानपि । यादवाग्रयान् यादवमुख्यान् । प्रार्दयत प्रकर्षेणार्दितानकरोत् । 'अर्द हिंसायाम्' (चुरादि १८२९) इति चौरादिको धातुः ॥ ३७॥

अथ क्षणादन्तरितान्तरिक्षा
वात्या विहङ्गेन्द्रविहारजाता ।
अलातचक्रप्रतिमानकार्षीत्
बाणाशनीन् बाणघनप्रसूतान् ॥ ३८ ॥

**अथेति**—अथ । क्षणात् अल्पकालमात्रेण ।[1] . . . .

जाता । वात्या मण्डलवातः । अलातचक्रप्रतिमान् चक्राकारेण भ्रमितमुल्मुकमलातचक्रं, तत्सदृशान् । अकार्षीत् । अलातचक्रमिव मण्डलीकृत्य चिक्षेपेत्यर्थः ॥ ३८ ॥

गरुत्मतः पक्षमरुत्प्रचारात्
दूरीकृतो वारुणनागपाशैः ।
उषासहायस्सरथस्सधन्वा
जग्राह दैतेयबलस्य पार्ष्णिम् ॥ ३९ ॥

**गरुत्मत इति**—गरुत्मतः । पक्षमरुत्प्रचारात् पक्षानिलसञ्चारात् । वारुणनागपाशैः वरुणसम्बन्धिभिः नागसम्बन्धिभिश्च

---

1 अत्र "बाणघनप्रसूतान् बाण: बाणासुर एव घनो मेघः तत्प्रसूतान् तज्जनितान् । बाणस्य बाणासुरस्य अशनीन् आयुधविशेषान् । अन्तरितान्तरिक्षा अन्तरितं संजातावकाशं अन्तरिक्षं गगनं यस्यास्सा । विहङ्गेन्द्रविहारजाता विहङ्गेन्द्रस्य गरुडस्य विहारेण संचरणेन" इत्यर्थको व्याख्याग्रन्थोऽत्र गलित इति भाति ।

पाशैः दूरीकृतः, बाणेन यैः पाशैर्बद्धो निरुद्धः, तैर्मुक्त इत्यर्थः। सरथः रथेन सहितः। सधन्वा धन्वना चापेन सहितश्च। उषासहायः उषापातिरनिरुद्धः। दैतेयबलस्य बाणसैन्यस्य। पार्ष्णि पश्चाद्भागम्। जग्राह। पश्चाद्भागे युद्धार्थमागत इत्यर्थः "पार्ष्णिरुन्मत्तनार्यां स्त्री सैन्यपृष्ठे पुमानयम्" इति रत्नमाला ॥ ३९ ॥

**विनिघ्नतो दैत्यबलौघमग्रे**
**चापाभियोगो युधि शम्बरारेः।**
**चकार चक्रीकृतचन्द्रलेखं**
**शम्भोश्शिरःकम्पमनन्यलभ्यम् ॥ ४० ॥**

**विनिघ्नत इति**—युधि युद्धे। दैत्यबलौघं असुरसेनासमूहं। अग्रे स्वस्य पुरस्तात्। विनिघ्नतः शम्बरारेः प्रद्युम्नस्य। चापाभियोगः धनुषि निष्ठा। अनन्यलभ्यं अन्यैरल्पविक्रमैः लब्धुमशक्यं। चक्रीकृतचन्द्रलेखं परितो भ्रमणादलातचक्रवत् मण्डलीकृतशेखरचन्द्रखण्डं। शम्भोः। शिरःकम्पं शिरसः श्लाघाकम्पनं। चकार जनयामास ॥ ४० ॥

**रामोऽपि लङ्काधिपतेस्समानान्**
**मुसल्यवृत्तीन् मुसलेन भिन्दन्।**
**चमत्कृतिं चक्रधरस्य कुर्वन्**
**[1] आदत्त सङ्ग्रामविहारमग्र्यम् ॥ ४१ ॥**

**राम इति**—लङ्काधिपतेस्समानान् रावणस्य सदृशान्। मुसलेन वध्या वृत्तिर्येषां तान् क्रूरचरितानसुरान्। मुसलेन स्वायुधभूतेन भिन्दन्। रामोऽपि। चक्रधरस्य कृष्णस्य। चमत्कृतिं

[1] आधत्त—च. ग्र. मु.

हृदयोल्लासं। कुर्वन् सन्। अग्र्यं पराार्थ्यं। सङ्ग्रामविहारं। आदत्त अकरोदित्यर्थः ॥ ४१ ॥

**उदग्रशृङ्गोल्बणबाहुभूम्ना**
**सञ्चारिकैलासनिभेन तेन।**
**अमृष्यता क्षिप्रमकारि सैन्यं**
**नागाधिपेनेव वनं नलानाम्॥ ४२ ॥**

**उदग्रेति**—उदग्रं उन्नतं शृङ्गमिव उल्बणः उत्कटः बाहुभूमा भुजमहत्त्वं यस्य तेन। सञ्चारिकैलासनिभेन शिखरायामबाहुशालितया धावल्यादिना च संचरिष्णुकैलासेनेव स्थितेन। अमृष्यता असहमानेन। तेन बलदेवेन। सैन्यं असुरबलं। क्षिप्रं शीघ्रं। नागाधिपेन गजश्रेष्ठेनैरावतेन। नलानां तृणविशेषाणां। वनमिव। अकारि कृतं। ऐरावतेन नलवनमिव बलदेवः परसैन्यममृद्नादित्यर्थः। ऐरावतेऽपि उदग्राणि शृङ्गाणि विषाणान्येव उल्बणो बाहुभूमा यस्येति, सञ्चारिकैलासनिभ इति च विशेषणयोजनाऽनुसन्धेया ॥
॥ ४२ ॥

**स लाङ्गलाकर्षणनिर्विचेष्टान्**
**निष्पिष्य नागान्निषधप्रमाणान्।**
**रणक्षितिं शोणितमांसपङ्कैः**
**आमग्ननिस्पन्दरथामकार्षीत्॥ ४३ ॥**

**स इति**—सः बलदेवः। लाङ्गलेनाकर्षणात् निर्विचेष्टान्। निषधप्रमाणान् निषधाख्यपर्वतसमानपरिमाणान्। नागान् गजान्। निष्पिष्य विमृद्य। रणक्षितिं युद्धभूमिं। शोणितमांसपङ्कैः निर्गलितरक्तमांसकर्दमैः। आमग्नाः अत एव निस्पन्दाश्च रथा यस्यां

तथाभूतां। अकार्षीत् कृतवान्। निस्पन्दशब्दः सकारयुक्तः षत्वप्राप्त्यभावात्॥ ४३॥

हलायुधोत्क्षिप्तरथौघपूर्णं
समीक्ष्य देवास्सहसाऽन्तरिक्षम्।
आशङ्क्य दैतेयबलोपयानं
दृढार्गलां देवपुरीमकुर्वन्॥ ४४॥

हलायुधेति—हलायुधेन बलदेवेन उत्क्षिप्तैः लाङ्गलेन उद्धृत्य विक्षिप्तैः रथौघैः पूर्णम्। अन्तरिक्षम्। देवाः। सहसा अतर्कितं समीक्ष्य। दैतेयबलोपयानं असुरसैन्यागमनम्। आशङ्क्य। देवपुरीं अमरावतीम्। दृढार्गलाम्। अकुर्वन्। बलदेवोत्क्षिप्तेषु रथेषु गगनचारिदैत्यसेनागमनभ्रान्त्या देवनगरीगोपुरमपिधायार्गलां दृढघटितामकुर्वन्नित्यर्थः। देवानामुक्तकर्मासम्भवेऽपि तदुक्तिरतिशयोक्तिभेदः। तेन बलदेवोत्क्षिप्तरथानामतिबाहुल्यं व्यज्यते॥ ४४॥

प्रभुश्च किञ्चित्प्रथयन्नमर्षं
क्रीडोचितान् [1]प्रेक्ष्य कृताभियोगान्।
विव्याध बाणानुचरानयोध्यः
शार्ङ्गोदधेरूर्मिनिभैश्शरौघैः॥ ४५॥

प्रभुश्चेति—अयोध्यः केनापि योद्धुमशक्यः। प्रभुः कृष्णश्च। कृताभियोगान् कृतप्रथमशरपातनान्। अत एव, क्रीडोचितान् समरविहारे उचितान्। बाणस्यानुचरान्। प्रेक्ष्य। किञ्चित्। अमर्षं कोपम्। प्रथयन् प्रकाशयन् सन्। शार्ङ्गं स्वचापं उदधिरिव तस्य। ऊर्मिनिभैः। शरौघैः। विव्याध ताडयामास॥ ४५॥

---

[1] वीक्ष्य.

अदृष्टतूणीरमनुप्लवान्यैः
अग्राह्यसन्धानविमोक्षबाणम् ।
अमंसतैनं स्थिरचापचक्रं
प्रत्येकमात्माभिमुखं प्रतीपाः ॥ ४६ ॥

**अदृष्टेति**—अनुप्लवान्यैः स्वानुयायिव्यतिरिक्तैः परिपन्थिभिः। अदृष्टतूणीरं अनवलोकितनिषङ्गम्, युद्धे पश्चाद्भागस्याप्रदर्शनादिति भावः। अग्राह्यौ शीघ्रप्रयोगतया परैः बोद्धुमशक्यौ सन्धानविमोक्षौ येषां तथाभूता बाणा यस्य तम्। स्थिरचापचक्रं ध्रुवचापवलयं, सदा आकर्णाकृष्टैकरूपचापमित्यर्थः। एनं कृष्णम्। प्रतीपाः परिपन्थिनः। प्रत्येकं आत्माभिमुखं अमंसत सर्वेऽपि सदा स्वाभिमुखमेव शरान् पातयन्तममन्यन्तेति कृष्णस्य हस्तलाघवातिशयोक्तिः ॥ ४६ ॥

निषङ्गदत्ताग्रकरे मुरारौ
निर्भिद्य दैत्यान् भुवमाविशन्तः।
लक्ष्याणि दूरादलभन्त बाणा
रसातलस्थैरपि दानवेन्द्रैः ॥ ४७ ॥

**निषङ्गेति**—मुरारौ कृष्णे। निषङ्गदत्ताग्रकरे बाणसन्धानविमोक्षयोरतिशीघ्रत्वेन दुर्ग्रहतया सदा [1]तूणीरासक्तकराग्रतयैव प्रतीयमाने सति। दैत्यान्। निर्भिद्य। भुवं। आविशन्तः। बाणाः। रसातलस्थैः पातालस्थितैरपि। दानवेन्द्रैः। दूराल्लक्ष्याण्यलभन्त, तानपि निर्बिभिदुरित्यर्थः। निषङ्गदत्ताग्र इत्यस्य कांश्चिद्बाणान् विसृज्य बाणान्तरग्रहणार्थं निषङ्गदत्ताग्रकर इति वा तात्पर्यम्। तेन तावतैव कालेन विसृष्टा बाणाः पातालं प्रविश्य [2]तत्रस्थानसुरान् निर्बिभिदुरिति बाणवेगोत्कर्षवर्णना लभ्यते ॥ ४७ ॥

[1] तूणीरात्यन्त—च.   [2] तत्रस्थानप्यसुरान्.

न सेहिरे शार्ङ्गपयोदजातां
नाराचवृष्टिं दनुजेन्द्रयोधाः ।
अमोघवाचा कविना प्रयुक्तां
अन्तर्वतीं सूक्तिमिवानभिज्ञाः ॥ ४८ ॥

न सेहिर इति—दनुजेन्द्रस्य बाणस्य योधाः । शार्ङ्गं कृष्णचाप एव पयोदः ततो जाताम् । नाराचानामायसशराणां वृष्टिं । अमोघवाचा अवितथगिरा, अपुष्टार्थानि विशेषणानि अप्रयुञ्जानेन । कविना । प्रयुक्ताम् । अन्तर्वतीं गर्भितार्थवतीम् । सूक्तिं कविताम् । अनभिज्ञाः तत्तद्विशेषणवासनानभिज्ञा मन्दा इव । न सेहिरे न सहन्ते स्म । मन्दाः स्वबुद्धिदोषमजानन्तः तत्सूक्तिं दूषयन्तीति तदेव तेषामसहनं विवक्षितम् । "प्रक्ष्वेडनस्तु नाराच [1] ऐषणश्चायसश्शरः" इति यादवः । ४८ ॥

यतो यतो यादवसैन्यमासीत्
ततस्ततो दैत्यचमूरपायात् ।
गतानि तेजस्तमसोरिवारात्
आशाविकल्पेन तयोरभूवन् ॥ ४९ ॥

यतो यत इति—यतो यतः यत्र यत्र । यादवसैन्यं । आसीत् । ततस्ततः प्रदेशात् । दैत्यचमूः । अपायात् अपयाति स्म, यादवसैन्यमसहमानेति भावः । तयोः कृष्णबाणसैन्ययोः । तेजस्तमसोरिव । आरात् समीपे । आशाविकल्पेन दिग्व्यत्ययेन । गतानि गमनानि । अभूवन् । यथा दीपे इत आनीयमाने तमस्ततो गच्छति, ततो नीयमाने पुनरित आगच्छति, एवं यादवसैन्यपाताद्बिभ्यती दैत्यसेना दिग्व्यत्ययेन तत्र तत्र भ्रमणं प्राप्तेत्यर्थः ॥ ४९ ॥

[1] एषण–घ. 'एषणश्चायसे शरे' इति मुद्रिते.

**अशूरसन्दर्शनतापशान्त्यै**
**स्वहेतिधारागृहमाश्रयन्तीम् ।**
**विहारयामासुरिव स्ववृत्त्या[1]**
**वीरश्रियं वृष्णिकुलप्रवीराः ॥ ५० ॥**

**अशूरेति**—वृष्णिकुलप्रवीराः वृष्णिकुलश्रेष्ठा राजानः । अशूराणां सन्दर्शनेन यस्तापः मनस्तापः, तस्य शान्त्यै । स्वेषां हेतयः आयुधानि तासां धारामग्रमेव गृहमाश्रयन्तीं । वीरश्रियं । स्ववृत्त्य पराक्रमणरूपया । विहारयामासुरिव क्रीडयामासुरिव । [2]असुरानशूरान् त्यक्त्वा निजायुधधारामाश्रितवतीं वीरलक्ष्मीं पराक्रमेण उपचितां चक्रुरित्यर्थः । यथा अशूरसन्दर्शनतापशान्त्यै शूरस्य सूर्यस्य सन्दर्शनेन य उत्कृष्टस्तापः तस्य शान्त्यै परितो जलधाराप्रपातयुक्तं धारागृहमाश्रयन्तीं राज्ञीं तदनुजीविनो धाराप्रपातनादिना विहारयन्ति, तद्वदिति गम्यते । नञ उत्कर्षोऽप्यर्थ इति शब्दप्रकाशिकायां भोजराजेनोक्तम् । अमानुषोऽयमिति [3]प्रयोगो नञस्तदर्थत्वं च तत्रैवोक्तमिति अशूरेत्यादौ नञस्तापोत्कर्षा[4]र्थता । यद्यपि सूरशब्दो रविवाची दन्त्यादिः प्रसिद्धः, तथाऽपि '[5]केचित् कुमुदाकरा इवासोढशूरभासः' इति वासवदत्ताश्लेषदर्शनात् तालव्यादिरपीति सुभूतिचन्द्रादयः ॥ ५० ॥

**कृपाणभिन्नद्विपकुम्भमुक्ता**
**मुक्ताः पतन्त्यो रणवप्रभूमौ ।**
**प्ररोहतां वीरयशस्तरूणां**
**बीजान्यभूवन् बहुधा विकीर्णाः ॥ ५१ ॥**

**कृपाणेति**—कृपाणभिन्नद्विपकुम्भमुक्ताः खड्गनिकृत्तैर्गजमस्तकैर्निसृष्टाः । रणवप्रभूमौ युद्धक्षेत्ररूपायां भूमौ । "वप्रः पितरि

[1] रिवात्मवृत्त्या—घ. ग्र. दे. सु. [2] असुरानशूरा इति त्यक्त्वा—च. [3] 'प्रयोगे' इति स्फुटः पाठः. [4] र्थताऽपि । सूर—घ. छ. [5] 'केचित्कैरवाकरा इव' इति मुद्रितकोशे ८२ पुटे दृश्यते ।

ना न स्त्री क्षत्रे रोधसि सानुनि " इति यादवः। बहुधा। विकीर्णाः सत्यः। पतन्त्यः। मुक्ताः मौक्तिकानि। प्ररोहतां प्रादुर्भवतां। वीरयशस्तरूणां निकृत्तगजकुम्भानां वीराणां यशांस्येव तरवस्तेषां। बीजानि। अभूवन्॥ ५१॥

द्विपाचलेभ्यश्शरवृष्टिपातैः
आपातितानां रुधिरापगानाम्।
अकल्पयन् योधमुखेन्दुक्लृप्ताः
कौमुद्वतीं संपदमट्टहासाः॥ ५२॥

द्विपाचलेभ्य इति—शराणि बाणाः, शराणि जलानि च, "शरं नीरं शरः काण्डे" [1] इत्यमरः, तेषां वृष्टिपातैः। द्विपा एवाचलास्तेभ्यः। आपातितानां प्रपातितानां। रुधिरापगानां रक्तनदीनां। योधमुखेन्दुक्लृप्ताः भटानां मुखचन्द्रैः सृष्टाः। अट्टहासाः। कौमुद्वतीं कुमुद्वतीसम्बन्धिनीं। संपदं शोभां। अकल्पयन् अकुर्वन्। कुमुद्वत्योऽपि इन्दुक्लृप्ताः इन्दुना सज्जीकृता भवन्तीति भावः॥ ५२॥

अदृश्यतान्योन्यविलूनशीर्षै
आरब्धमन्योन्यकृतप्रशंसैः।
अनेकरूपैकसुराङ्गनाप्तैः
अपास्तवैरं रणरङ्गनृत्तम्॥ ५३॥

अदृश्यतेति—अन्योन्यविलूनशीर्षैः युगपदेव परस्परेण निकृत्तशिरोभिः। "उत्तमाङ्गं शिरश्शीर्षं" इत्यमरः। अन्योन्यकृतप्रशंसैः दिव्यदेहप्राप्त्यनन्तरं परस्परेण श्लाघितैः। अनेकरूपैकसुराङ्गनाप्तैः अनेकवीरवरणाय तावद्रूपामेकामप्सरसं प्राप्तैर्योधैः। अपास्तवैरं निरस्त-

---

[1] नेदं नामलिङ्गानुशासनस्थम्, किंतु विश्वकोशे दृश्यते। अतोऽत्र 'इत्यमरः' इत्यस्य स्थाने 'इति विश्वः' इति शुद्धपाठेन भाव्यम्।

प्राचीनशात्रवं यथा तथा । आरब्धं । रणरङ्गनृत्तं रणखले कबन्धनृत्तं । अदृश्यत । "अमर्त्यभावेऽपि कयोश्चिदासीदेकाप्सरःप्रार्थितयोर्विवादः" इति न्यायपरिहारायानेकरूपेति विशेषणम् ॥ ५३ ॥

**प्रयोजितैः प्राणतृणैः प्रगल्भा**
**रथ्याभिगम्येषु रणापणेषु ।**
**क्षणप्रभालोलतरैरविन्दन्**
**यावद्युगान्तानि यशोधनानि ॥ ५४ ॥**

**प्रयोजितैरिति**—प्रगल्भाः युद्धकुशलाः, क्रयविक्रयकुशलाश्च । रथानां समूहो रथ्या । "खलगोरथात् (पा. सू. ४-२-५०)" इति समूहार्थे यः, रथ्या नगराभ्यन्तरमार्गश्च. तया अभिगम्येषु । रणान्येवापणाः पण्यविक्रयशालाः, तेषु । प्रयोजितैः त्यक्तैः, मूलधनत्वेन दत्तैश्च । क्षणप्रभालोलतरैः विद्युद्भिरिवातिचञ्चलैः, अस्थायिभिः । प्राणा एव तृणानि, अनादरविषयत्वात् तैः । यावद्युगान्तानि कल्पान्तपर्यन्तस्थायीनि । यशांस्येव धनानि । अविन्दन् अलभन्त ॥५४ ॥

[1] **कृतापदानाः कृशजीविताशाः**
**स्वनाथनामाङ्कजयोक्तिमन्तः ।**
**जयश्रियं दोष्णि निवेशयन्तः**
**कीर्तिं दिगन्तावसथामकुर्वन् ॥ ५५ ॥**

**कृतेति**—कृशजीविताशाः क्षीणप्राणेच्छास्सन्तः । कृतापदानाः कृतपराक्रमाः । "अपदानं पराक्रमः" इति वैजयन्ती । स्वनाथनामाङ्कजयोक्तिमन्तः स्वेषां जयानन्तरममुना जितमिति स्वस्वामिनामचिह्नां जयोक्तिं वदन्तः । "[2]न बहुव्रीहिगम्यार्थे भवन्ति

---

[1] राबद्धमन्योन्य—**ग्र. मु.** [2] कृतापदानाङ्कुशजीवितानां--**झ.** [2] 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः' वदयमपि 'समानाधिकरणसमासाद्बहुव्रीहिः (वा. १३०६) इति वार्त्तिकार्थसंग्रहः.

मतुबादयः" इत्यस्य प्रायिकत्वात् कर्मधारयान्मत्वर्थीयः। योधा इति शेषः। जयश्रियं। दोष्णि बाहौ। निवेशयन्तस्सन्तः। कीर्तिं। दिगन्तावसथां दिगन्तविश्रान्तां। अकुर्वन्। यथा अभिमतां पत्नीं गृहीत्वा तदन्यामावसथान्तरे निवेशयन्ति तद्वदिति भावः॥ ५५॥

**अमोघशस्त्रास्त्रतरङ्गभीमे**
**वैरोपसन्दर्शितबाडबाग्नौ।**
**विकत्थनं संयति विक्लबानां**
**वीरोदधौ गोष्पदवद्विलिल्ये॥ ५६॥**

**अमोघेति**—अमोघानि शस्त्राणि खड्गादीनि अस्त्राण्यैन्द्र-वारुणादीनि तान्येव तरङ्गाः तैर्भीमे। वैरेण शात्रवेण उपसन्दर्शितः बाडबाग्निर्यस्मिन् बडवानलप्रज्वलद्वैरानुबन्धे। संयति युद्ध एव। वीराणामुदधौ वीराणामप्युदधिवन्निमज्जनसाधन इति साम्यादुदधित्व-रूपणं। विक्लबानां कातराणां। विकत्थनं युद्धात्प्राचीनमात्मश्लाघनं। गोष्पदवत् गोखुर[1]श्वभ्रमिव। विलिल्ये विलीनमभूत्। "गोष्पदं गोखुरश्वभ्रं" इति यादवः॥ ५६॥

[2] **जिगीषुभिर्जीवितसंशयाख्या**
**दोलाऽधिरूढा दृढ[3]वैरबन्धा।**
**अदूरतो [4]यादवमर्ष[5]वेगं**
**मिथः प्रतिक्षेपशतानि चक्रे॥ ५७॥**

**जिगीषुभिरिति**—जिगीषुभिः जेतुमिच्छुभिर्योधैः। जीवित-संशयाख्या प्राणसंशयाभिधाना। दोला [6]प्रेङ्खोलिका। अधिरूढा। कीदृशी दृढवैरबन्धा दृढो वैरेण रज्जुकल्पेन बन्धो यस्या इति

---

[1] श्वभ्रवद्विलिल्ये--च. [2] जिगीषवो जीवित संशयाख्यदोलादिरूढा दृढवैरि-बन्धा.—झ. [3] वैरवद्धां—झ [4] यावदमर्ष—ग्र. दे. मु. [5] वेगान्मिथो—झ. [6] प्रेङ्खा अधि—च.

तथोक्ता, वैरदार्ढ्याभावे युद्धसन्नाहवैमुख्याज्जीवितसंशयश्शिथिलीभवेदिति भावः। अदूरतः समीपे। यादवस्य कृष्णस्य, मर्षवेगं मर्षस्तितिक्षा, वेगः कोपवेगः संरम्भः, तदुभयं, द्वन्द्वैकवद्भावः। मिथः अन्योन्यम्। प्रतिक्षेपशतानि तस्या दोलाया बहुवारं प्रतिक्षेपान्। चक्रे। दोलामुभयतस्स्थिताः परस्परं प्रतिक्षिपन्तीति भावः। यदा तु कृष्णः कदाचिल्लीलया तितिक्षामवलम्ब्योदास्त तदा असुरयोधानां जीवितनिश्चयेन, यादवयोधानां तद्व्यतिरेकनिश्चयेन च तेषां जीविते संशयः प्रतिक्षिप्तो निरस्तोऽभवत्। यदा तु किञ्चित्संरम्भं प्राप्यायुध्यत तदा तद्विपर्ययेण स निरस्तोऽभवदिति भावः॥ ५७॥

**शरप्रयोगोचितविप्रकर्ष**
**सम्पादयिष्यन्त्यपराङ्मुखानाम्।**
**प्रशंसनीयानि बभूवुराजौ**
**पश्चात्प्रयातानि धनुर्धराणाम्॥ ५८॥**

**शरेति**—आजौ युद्धे। शरप्रयोगोचितविप्रकर्षं अतिसमीपे शरप्रयोगासम्भवात् तद्योग्यं दूरदेशवर्तित्वं। सम्पादयिष्यन्ति करिष्यमाणानि। अपराङ्मुखानां युद्धे पश्चाद्भागप्रदर्शननिषेधात् अभिमुखानामेव सतां। धनुर्धराणां। पश्चात्प्रयातानि। प्रशंसनीयानि द्रष्टॄणां श्लाघनीयानि। बभूवुः। प्रयातानीति भावे निष्ठा॥ ५८॥

[1]**प्रतीपवृत्त्या प्रतिगृह्य शूराः**
**शत्रुप्रयुक्तां शरवृष्टिमुग्राम्।**
**त्रिविष्टपानोकहपुष्पवृष्टिं**
**वैमानिकैरन्वभवन् विमुक्ताम्॥ ५९॥**

**प्रतीपेति**—शूराः। शत्रुप्रयुक्तां अरिभिर्मुक्तां। उग्रां उत्कटां। शरवृष्टिं। [1]प्रतीपवृत्त्या आभिमुख्येन। प्रतिगृह्य। वैमानिकैः

[1] प्रतिप्रवृत्त्या—घ. ग्र. दे. मु.

विमानचारिभिर्देवैर्धैर्यसन्तुष्टैः । विमुक्तां । त्रिविष्टपानोकहपुष्पवृष्टिं स्वर्गद्रुमकुसुमवर्षं । अन्वभवन् ॥ ५९ ॥

**तस्मिन्नघच्छेदिनि धर्मयुद्धे**
**कायत्यजां कृष्णसमीक्षितानाम् ।**
**सुहृद्द्विषद्भेदवतां समोऽभूत्**
**स्वर्गापवर्गान्तगतिस्सुपन्था: ॥ ६० ॥**

**तस्मिन्निति**—अघच्छेदिनि पापहारिणि । तस्मिन् धर्मयुद्धे । कृष्णसमीक्षितानां सतां । कायत्यजां । सुहृद्द्विषद्भेदवतां सुहृदो द्विषन्त इति विशेषवतां योद्धृणां । स्वर्गापवर्गान्ता स्वर्गमोक्षपर्यन्ता गतिः शास्त्रीयफलं यस्मिन् तथाभूतः । सुपन्थाः [1] पूजितमार्गः । समोऽभूत् । "शास्त्रीयं तु फलं गतिः" इति यादवः । सुपन्था इत्यत्र "न पूजनात्" (पा. सू. ५-४-५९) इति समासान्तनिषेधः । एते कृष्णस्य सुहृद एते द्विषन्त इति भेदे सत्यपि स्वर्गहेतोर्धर्मयुद्धे देहत्यागस्य मुक्तिहेतोरन्तकाले कृष्णसमीक्षणस्य च तुल्यत्वात्पारलौकिक-भेदो नासीत् । फलप्रदस्य कृष्णस्य [2] तत्तत्कर्ममात्रानुसारित्वेन क्वचिदपि पक्षपाताभावादिति भावः ॥ ६० ॥

**बभूव कीर्त्या धृतकेतकश्रीः**
**निस्त्रिंशधाराधरपङ्क्तिलीला ।**
**रणस्थली यादवदानवानां**
**आकालिकी प्रावृडिवास्त्रवर्षैः ॥ ६१ ॥**

**बभूवेति**—कीर्त्या सम्यक्कृतयुद्धानां यशसा । धृतकेतकश्रीः धारितकेतकीपुष्पशोभा । निस्त्रिंशाः खड्गविशेषाः त एव धाराधरा मेघाः, तेषां पङ्क्त्या नीला । अस्त्रवर्षैः, उपलक्षिता । यादवदानवानां ।

---

[1] पूजितो मार्गः—ज.    [2] तत्तत्कर्मानुसारित्वेन—घ.

रणस्थली । आकालिकी अकालभवा अचिरस्थायिनी वा । प्रावृडिव । बभूव । आकालिकीत्यत्र प्रथमार्थे अकालशब्दात्प्रावृट्कालान्यकालरूपकालविशेषपरात् ‘कालाठ्ठञ्’ (पा. सू. ४-३-११) इति भावार्थे ठञ् प्रत्ययः। द्वितीयार्थे समानकालावाद्यन्तावस्या इति विग्रहे ‘आकालिकडाद्यन्तवचने’ (पा. सू. ५-१-११४) इति निपातः । उभयत्र ‘टिड्ढाणञ्’ (पा. सू. ४-१-१५) इत्यादिना ङीप् ॥ ६१ ॥

**अलङ्घनीया रथवारणाद्यैः**
**आ सागरादप्रतिघप्रवाहाः ।**
**उदग्रभूभृत्प्रभवाः पृथिव्यां**
**उत्तस्थिरे शोणितशैवलिन्यः ॥ ६२ ॥**

**अलङ्घनीया इति**—रथवारणाद्यैः । अलङ्घनीयाः निम्नत्वाच्चरितुमशक्याः । आ सागरात् सागरपर्यन्तम् । अप्रतिघप्रवाहाः शैलाद्यप्रतिबद्धप्रवाहाः । उदग्रा उच्छ्रिता भूभृतो राजानः पर्वता इत्यपि गम्यते, ते प्रभवा उत्पादका यासां ताः । शोणितशैवलिन्यः रक्तनद्यः । पृथिव्यां । उत्तस्थिरे प्रवहन्ति स्म । ‘उदोऽनूर्ध्वकर्मणि’ (पा. सू. ४-३-२४) इत्यात्मनेपदम् । आ सागरादिति ‘पञ्चम्यपाङ्परिभिः’ (पा. सू. २-३-१०) इत्याङ्योगे पञ्चमी । [1] विभाषाधिकारादव्ययीभावसमासाभावः ॥ ६२ ॥

---

[1] विभाषाधिकारादित्यादि । यद्यप्यव्ययीभावे सत्यपि ‘नाव्ययीभावात्’ (पा. सू. २-४-८.) इति लुङ्निषेधात् तत्रैव अपञ्चम्या इति पर्युदासेनामादेशाप्रवृत्त्या च आसागरादिति सिध्यति। तथाऽपि प्रकृते समस्ताद्वितीयाविभक्तेरेवोचितत्वेन तत्र च आसागरमिति रूपस्यैव साधुतया प्रकृते आसागरादिति असमस्तमेवाङ्गीकरणीयमित्याशयेनैवमुक्तमिति भाति ॥

ज्वलत्प्रतापानलजातदीप्तिः
समिद्वती [1]सैन्ययुगस्य लीला।
जयश्रिया वीरपतिंवराया
वैवाहिकी सम्पदिवावभासे ॥ ६३ ॥

ज्वलदिति—ज्वलता प्रतापानलेन जातदीप्तिः सञ्जातशोभा। समिद्वती युद्धवती, एधवतीत्यपि गम्यते। सैन्ययुगस्य सेनाद्वयस्य लीला रणक्रीडा। वीरपतिंवरायाः पतिं वृणीत इति पतिंवरा स्वयंवरप्रवृत्ता कन्या, 'संज्ञायां भृतॄवृजि' (पा. सू. ३-२-४६) इत्यादिना खचि [1]मुमागमश्च, वीराणां पतिंवरेति शिवभागवतवत्समासः, तस्याः। जयश्रियः। वैवाहिकी विवाहप्रयोजना। सम्पत् उपकरणसमृद्धिरिव। आबभासे ॥ ६३ ॥

[2]अमर्षवैश्वानरधूमलेखां
अन्योन्यसंहारनिशां कृपाणीम्।
अवेक्ष्य मृत्योर्भ्रुकुटीमनन्दन्
वीरास्स्वविक्रान्तिशिरीषमालाम् ॥ ६४ ॥

अमर्षेति—वीराः सुभटाः। अमर्षवैश्वानरधूमलेखां . . .

. . . . . . . . . . . . . . . .

. . . . . . . . . . . . . . . .

. . . . . . . . . . . . . . . .

1 'अरुर्द्विषदजन्तस्य मुम्' (पा. सू. ६-३-६७) इति सूत्रेणेति भावः।

2 "अमर्ष एव वैश्वानरो वह्निस्तस्य धूमलेखां धूमपङ्क्तिरूपां। अन्योन्यसंहारनिशां परस्परसंहरणकालरात्रिरूपां। मृत्योः यमस्य भ्रकुटीं क्रोधजन्यललाटसंकोचनरूपां। कृपाणीं परैराधूतां करवालिकां स्वविक्रान्तेः स्वसंबन्धिन्या विक्रान्तिस्त्रियाः शिरीषमालां" शिरीषाह्वयातिमृदुकुसुमविशेषमालारूपां" इत्यर्थको व्याख्याग्रन्थोऽत्र गलित इति भाति ॥

अवेक्ष्य। अनन्दन्। कोपोग्रैः परैराधूतां कृपाणीं वीक्ष्य स्वकर्मणस्समय इत्यहृष्यन्नित्यर्थः ॥ ६४ ॥

**मनस्विनस्संयति[1] वीरशय्यां**
**अभूषयन् प्रीतिकृतश्शिवानाम्।**
**सुखावहाः स्वर्गविलासिनीनां**
**विहारशय्यामपि वीरलोके ॥ ६५ ॥**

**मनस्विन इति**—मनस्विनः रणोत्साहवन्तो वीराः। संयति युद्धे। शिवानां सृगालानां। प्रीतिकरास्सन्तः। वीरशय्यां युद्धभूमिं अभूषयन् हता युद्धभूमावशेरतेत्यर्थः। "स्त्रियां शिवा[2] भूरिमायु" इति सृगालपर्यायेष्वमरः। वीरलोके युद्धहतैर्वीरैः प्राप्तव्ये परलोके। स्वर्गविलासिनीनां अप्सरसां। सुखावहाः आनन्दकृतस्सन्तः। विहारशय्यां क्रीडाशयनमपि। अभूषयन्नित्यनुषङ्गः ॥ ६५ ॥

**समाश्रितैराहवसत्रदीक्षां**
**कुर्वद्भिरन्योन्यमिवोपकारम्।**
**अलभ्यत श्लाघितमप्सरोभिः**
**दैत्यैर्मनुष्यैरपि देवभूयम् ॥ ६६ ॥**

**समाश्रितैरिति**—आहवो युद्धमेव सत्रं बहुलयजमानकः सोमयागविशेषः तत्र दीक्षां। समाश्रितैः। अन्योन्यमुपकारं कुर्वद्भिरिव स्थितैः रणहननस्य सत्रदीक्षायाश्च स्वर्गहेतुतया परस्परोपकारप्रवृत्तैरिव स्थितैः। दैत्यैर्मनुष्यैरपि। अप्सरोभिः पतिंवराभिः। श्लाघितं। देवभूयं

---

[1] संप्रति—झ. [2] अमरसुधायां तु भूरिमाय इति पाठमभिप्रेत्य भूरयो माया यस्येति विग्रहः प्रदर्शितः। वैजयन्त्यामप्यकारान्तपाठ एव दृश्यते। भूरिमायु—इति पाठे च 'मायुः पित्तं' इत्यमरकोशबलादेव पित्तार्थकमायुशब्दसत्त्वात् भूरिर्मायुः पित्तं यस्येति विग्रहो बोध्यः।

देवत्वं। अलभ्यत लब्धम्। देवभूयमित्यत्र 'भुवो भावे' (पा.सू. ३-१-१०७) इति क्यप्॥ ६६॥

पर्यस्तपादं पतितैः पृथिव्यां
वज्राहतैरद्रिगणैरिवान्यैः।
द्विपेन्द्रयूथैर्द्रुतसर्पिणीनां
द्वीपायितं शोणितवाहिनीनाम्॥ ६७॥

पर्यस्तेति—पर्यस्तपादं विप्रकीर्णचरणं यथा तथा। पृथिव्यां। पतितैः। वज्राहतैः कुलिशच्छिन्नैः। अन्यैः प्रसिद्धातिरिक्तैः। अद्रिगणैः पर्वतसमूहैरिव स्थितै। द्विपेन्द्राणां गजप्रवराणां यूथैः। द्रुतसर्पिणीनां शीघ्रं प्रवहन्तीनां। शोणितवाहिनीनां रक्तनदीनां। द्वीपायितं द्वीपवदाचरितम्। "द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम्" इत्यमरः॥ ६७॥

हतावशिष्टा दनुजेन्द्रभृत्याः
प्रद्युम्नविक्रान्तिभयान्निवृत्ताः।
तत्केतुचिह्नस्मरणेन बिभ्युः
निशाम्य दृष्टीर्निजवल्लभानाम्॥ ६८॥

हतेति—हतानामवशिष्टाः। प्रद्युम्नस्य विक्रान्तेः पराक्रमात् यद्भयं तेन निवृत्ताः। दनुजेन्द्रस्य बाणस्य भृत्याः। निजवल्लभानां गृहेषु स्वप्रेयसीनां। दृष्टीः नयनानि। निशाम्य दृष्ट्वा। तत्केतुचिह्नस्मरणेन प्रद्युम्नस्य ध्वजलाञ्छनस्य मीनस्य स्मरणेन सादृश्यकृतेन। बिभ्युः बिभ्यति स्म। तेषामुक्तरूपभयासम्बन्धेऽपि तत्सम्बन्धोक्तिरतिशयोक्तिभेदः। तेन प्रद्युम्नस्य पराक्रमातिशयो व्यज्यते॥ ६८॥

**स्वकोपचापेन ततः प्रणुन्नो**
**महेश्वरानुग्रहसंहितात्मा ।**
**अतीत्य मौर्वीमिव दैत्यसेनां**
**बाणस्स्वयं शौरिबलं विवेश ॥ ६९ ॥**

**स्वकोपेति**—ततः स्वकीयानां हननेन पलायनेन च क्षयस्यानन्तरं । स्वकोपेनैव चापेन प्रणुन्नः प्रेरितः । महेश्वरानुग्रहेण शिवस्य प्रसादेन संहितात्मा योजितधैर्यः, धनुषि कृतसन्धानरूपश्च, "आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि"[1] इत्यमरशेषः । बाणः बाणासुर एव सायकः । मौर्वीमिव । दैत्यसेनां । अतीत्य । स्वयं असहायः । शौरिबलं कृष्णसैन्यं । विवेश, कृष्णेन युद्धमुद्दिश्येति भावः ॥ ६९ ॥

**व्यभज्यत व्याप्तहयोर्मिजालं**
**बलं यदूनां बलिनन्दनेन ।**
**एकेन पर्याप्तभुजाद्रिभूम्ना**
**नाथो नदीनां नलसेतुनेव ॥ ७० ॥**

**व्यभज्यतेति**—पर्याप्तः भुजानामद्रीणामिव भूमा बहुत्वं यस्य तेन । बलिनन्दनेन बलेः पुत्रेण बाणेन । एकेन । व्याप्तं विततं हयानामूर्मीणामिव जालं समूहः यस्मिन् तत् । यदूनां बलं यदुसैन्यम् । नदीनां नाथः समुद्रः । नलसेतुनेव । व्यभज्यत विभज्यते स्म । संरम्भेण बाणे प्रविशति भयादुभयतोऽपसृतं बलं दत्तमार्गमासीदित्यर्थः। अत्रोपमानोपमेययोः नदीनाथयदुबलयोः भिन्नलिङ्गत्वं न दोषः । यत्र साधारणधर्मवाचकपदस्याप्यन्यतरोचितलिङ्गवत्त्वं भवेत् "चिन्तारत्नमिव च्युतोऽसि करतः" इत्यादौ, तत्रैव तद्धर्मस्यान्यतरमात्रावगतेः लिङ्गभेदस्य दोषत्वं, न त्वन्यत्रेति काव्यप्रकशादिषु व्यवस्थापनात् ।

---

[1] इत्यमरः—च.

इह च व्यभज्यतेति साधारणधर्मपरक्रियापदस्य लिङ्गभेदेऽपि एकरूपत्वात् । न च व्याप्तहयोर्मिजालमित्यस्य यदुबलमात्रान्वयित्वेन कश्चिद्दोषः । तस्योर्मिसदृशहयव्याप्तत्वार्थकस्य तावन्मात्रान्वयस्यैव विवक्षितत्वात्, तावतैव हयप्रति . . . . . धर्मा ऊर्मय इत्यवगतिसम्भवात् ॥ ७० ॥

**अस्त्राणि तेन प्रहितानि तूर्णं**
**विहारभूम्ना वितथानि कृत्वा ।**
**युगान्तसूर्यायुतयोगदीप्तं**
**रामानुजन्मा जगृहे रथाङ्गम् ॥ ७१ ॥**

**अस्त्राणीति**—रामस्यानुजन्मा कृष्णः । तेन बाणेन । प्रहितानि । अस्त्राणि । विहारभूम्ना प्रत्यस्त्रमोचनरूपलीलामहिम्ना । तूर्णं । वितथानि । कृत्वा । युगान्तसूर्यायुतयोगदीप्तं [2] प्रलयसूर्याणामयुतसहस्रमेलनमिव भास्वरं । रथाङ्गं चक्रं । जगृहे गृहीतवान् ॥ ७१ ॥

**अथाच्छिनद्भीषणसत्वसारां**
**भुजाटवीं भूतपतेस्समक्षम् ।**
**चक्रेण सङ्कल्पनिभेन कृष्णः**
**किं वा विधौ वैरिणि केन रक्ष्यम् ॥ ७२ ॥**

**अथेति**—अथ । कृष्णः । सङ्कल्पनिभेन स्वसङ्कल्पवदप्रतिहततया तत्तुल्येन । चक्रेण । भीषणसत्त्वसारां लोकभयङ्करबलोत्कर्षां । भुजाटवीं बाणभुजकाननं । भूतपतेः शिवस्य । समक्षं अक्षिसमीपमेव । अच्छिनत् । ननु रक्षणार्थं शिवे सन्निधाय जाग्रत्यपि कथमेवं जातं तत्राह—किं वेति । विधौ वैरिणि [1] विधुः विष्णुः, तस्मिन् परिपन्थिनि,

[1] 'विधुः श्रीवत्सलाञ्छनः' इति स्वर्गवर्गे 'विधुर्विष्णौ चन्द्रमसि' इति नानार्थवर्गे चामरः. [2] अत्र 'प्रलयसूर्याणामयुतस्य दशसहस्रस्य मेलनमिव' इति पाठः स्यात्.

विधिर्दैवं तस्मिन् प्रतिकूल इत्यपि गम्यते। केन किं रक्ष्यं. केनापि किमपि रक्षितुं न शक्यत इत्यर्थः ॥ ७२ ॥

**अवृण्वत क्ष्मां हरिचक्रलूना**
**महत्तरा बाणभुजाः पतन्तः।**
**महेन्द्रहस्तप्राहितेन**
**वज्रेण भिन्ना इव सानुमन्तः॥ ७३ ॥**

**अवृण्वतेति**—हरिचक्रलूनाः कृष्णस्य चक्रेण भिन्नाः। महत्तराः महीयांसः। पतन्तः। बाणभुजाः। पूर्वं। महेन्द्रहस्तप्रहितेन इन्द्रकरप्रेषितेन। वज्रेण। भिन्नाः निकृत्ताः। सानुमन्तः पर्वता इव। क्ष्मां भूमिं। अवृण्वत आवृतवन्तः ॥ ७३ ॥

**अमर्त्यशत्रोरवलेपहेतौ**
**बहिर्द्वये बाहुवने विलूने।**
**[1]दयाघनः संयति दैत्यहन्ता**
**प्रदीप्तमस्त्रं प्रतिसञ्जहार॥ ७४ ॥**

**अमर्त्येति**— संयति युद्धे। दयैव धनं यस्य सः। दैत्यहन्ता कृष्णः। अमर्त्यानां शत्रोः बाणस्य। अवलेपहेतौ गर्वहेतौ। [2]बहिर्द्वये बहिर्भूतं द्वयं यस्मात् तस्मिन्, इतर[3]साधारणबाहुद्वयातिरिक्तबाहु-

---

[1] दयासरः—घ. [2] बहिर्भूते द्वये यस्मादिति विग्रहोऽत्र समुचित इति भाति। अत एवोत्तरत्र 'बाहुचतुष्टयातिरिक्ते' इति व्याख्याग्रन्थ उपपद्यते। तथाच श्रीभागवतवचनं 'चत्वारोऽस्य भुजाश्शिष्टा भविष्यन्त्यजरामराः' (श्रीभाग १०-६२ ४९) इति. [3] 'साधारणबाहुद्वयातिरिक्ते बाहूना वनं' इति च-कोशे पाठो दृश्यते। स च श्रीभागवताननुगुणः। तत्र हि बाणस्य बाहुचतुष्टयमवशेषितमिति दृश्यते। तथा हि तत्रत्यमिदं वचनम् 'चत्वारोऽस्य भुजाश्शिष्टा भविष्यन्त्यजरामराः' (१०-६२-४९) इति ॥

द्वयातिरिक्ते बाहुचतुष्टयातिरिक्ते इति भावः । बाहूनां वने । विलूने सति । प्रदीप्तं प्रज्वलितं । अस्त्रं चक्रायुधं । प्रतिसञ्जहार प्रतिनिवर्तयामास । परमकारुणिकः कृष्णः दृप्तानां दर्पशातनमात्रं करोतीति तद्दर्पनिमित्तभुजाटवीभेदनमात्रेण चक्रं प्रतिनिवर्तितवानित्यर्थः । भुजबाहुल्यतो दर्प इति च भागवते तस्य चोक्तिप्रत्युक्तिभ्यां दर्शितम् ।

त्रिलोक्यां प्रतियोद्धारं न लेभे त्वदृते समम् ॥ ८ ॥
कण्डूत्या निभृतैर्दोर्भिः युयुत्सुर्दिग्गजानहम् ॥
अभ्ययां चूर्णयन्नद्रीन् भीतास्तेऽपि प्रदुद्रुवुः ॥ ९ ॥
तच्छ्रुत्वा भगवान् क्रुद्धः केतुस्ते भज्यते यदा ॥
त्वद्दर्पघ्नं भवेन्मूढ संयुगो मत्समेन ते ॥ १० ॥

(श्रीभागवते १०-६२, ८-१०) इति ॥ ७४ ॥

**अनीकिनीमाश्रितदीर्घनिद्रां**
**बाणो निकृत्तामपि बाहुपङ्क्तिम् ।**
**अजातखेदो बुबुधे न नूनं**
**विपद्भिरश्रान्तधियो हि वीराः ॥ ७५ ॥**

**अनीकिनीमिति**—अजातखेदः बाहुवनच्छेदेऽप्यजातव्यथः । बाणः । आश्रितदीर्घनिद्रां प्राप्तमरणां । अनीकिनीं सेनां । निकृत्तां । बाहुपङ्क्तिमपि । न बुबुधे न ज्ञातवान्, न गणयामासेत्यर्थः । नूनमिति निश्चये । "तर्कनिश्चययोर्नूनं" इति यादवः । कथं महतीमिमां विपदं न गणितवांस्तत्राह—विपद्भिरिति । वीराः रणोत्साहवन्तः । विपद्भिः । अश्रान्तधियः अखिन्नमनसो हि । युद्धे [1] विपत्परम्परामप्यासां न गणयन्तीति स्वभाव इत्यर्थः ॥ ७५ ॥

[1] विपत्परंपरां प्राप्तां—घ.

अशान्तदर्पस्त्वसुरो भुजाभ्यां
विकृष्टधन्वा विससर्ज बाणान् ।
तदैनमन्वीक्ष्य निहन्तुमैच्छत्
जन्योद्धतं दैत्यमनन्यजन्यः ॥ ७६ ॥

**अशान्तेति**—अशान्तदर्पस्तु अवधारणे तुशब्दः, बाहुवनच्छेदेऽप्यनपेतगर्व एव स्थितः। असुरः बाणः। भुजाभ्यां अवशेषिताभ्यां। विकृष्टधन्वा आकृष्टचापस्सन्। बाणान्। विससर्ज। तदा अनन्यजन्यः अन्यैरनुत्पाद्यः कृष्णः। जन्ये युद्धे उद्धतं "युद्धमायोधनं जन्यम्" इत्यमरः। एनं दैत्यम्। अन्वीक्ष्य। निहन्तुमैच्छत् भुजवनच्छेदेनापि दर्पो न भिन्न इति हन्तुमेवेच्छति स्म ॥ ७६ ॥

ततस्तमव्याहतदिव्यशक्ति
मध्याह्न[1]मार्ताण्डविदीप्तहेतिम् ।
पश्यन्मुकुन्दं प्रतिबोधभूम्ना
जयोक्तिपूर्वं गिरिशो जगाद ॥ ७७ ॥

**तत इति**—ततः बाणजिघांसानन्तरं। अव्याहतदिव्यशक्तिं [2]अप्रातिहताप्राकृतशक्तिं। मध्याह्नमार्तण्डवत् विदीप्ता हेतिश्चक्रायुधं यस्य तं। मुकुन्दं। पश्यन्। गिरिशः कैलासनिकेतनश्श्रीकण्ठः। प्रतिबोधभूम्ना तन्महिमावबोधबाहुल्येन। जयोक्तिः पूर्वं यस्मिन् कर्मणि तद्यथा भवति तथा। जगाद ॥ ७७ ॥

---

[1] मार्ताण्ड—**च.** [2] अप्रतिहताक्षतशक्तिं—**घ.**

मैवं प्रभो मत्परिवारभूतं
बलेस्सुतं बाधितुमर्हसि त्वम् ।
मयैष रक्ष्यो दनुजस्त्वयाऽपि
स्वभक्तबुद्ध्यैव समीक्षणीयः ॥ ७८ ॥

**मैवमिति**—हे प्रभो । मत्परिवारभूतं मद्भृत्यत्वं प्राप्तं । बलेस्सुतं । त्वमेवं बाधितुं नार्हसि । एषः । दनुजः । मया । रक्ष्यः, मद्भक्तत्वात् त्वयाऽपि । स्वभक्तबुद्ध्या त्वद्भक्त इति बुद्ध्यैव । समीक्षणीयः । मद्भक्तस्यापि [1] त्वया परिपालनीयत्वात्, भक्तस्य बलेस्सुतत्वा-[2]दिति भावः ॥ ७८ ॥

अथ कृष्णं परभावेन

त्वमादिदेवः त्रियुगस्त्रिधामा
शुद्धामशुद्धां च विभाव्य सृष्टिम् ।
अकर्मतन्त्रैरवतारभेदैः
क्रीडस्यनन्तैरपि जन्तुजातैः ॥ ७९ ॥

**त्वमिति**—आदिदेवः ब्रह्मादीनां प्रथमो देवः । त्रीणि युगानि गुणयुगलानि यस्येति त्रियुगः, ज्ञानबलैश्वर्यवीर्यशक्तितेजोरूप-गुणषट्कशाली । त्रीणि धामानि परमपदरविबिम्बदुग्धोदधिरूपाणि स्थानानि यस्येति त्रिधामा । त्वं । शुद्धां सृष्टिं शुद्धसत्वमयविभव-विग्रहादिसृष्टिं । अशुद्धां सृष्टिं त्रिगुणमयब्रह्माण्डादिसृष्टिं च । विभाव्य कृत्वा । अकर्मतन्त्रैः अकर्माधीनैः । अवतारभेदैः मत्स्य-कूर्माद्यवतारविशेषैः । अनन्तैः असङ्ख्यैः । जन्तुजातैः प्राणिवर्गै-रपि । क्रीडसि ।

---

[1] त्वद्भक्तस्यापि—घ. [2] अत्र 'चेति' इति पाठश्चेत् स्पष्टः.

"मोदते भगवान् भूतैः बालः क्रीडनकैरिव"
इत्यादौ सर्वसृज्यानां भगवत्क्रीडोपकरणत्वं प्रसिद्धम् ॥ ७९ ॥

**अयं स ते वेदमयो गरुत्मान्**
**वेदैरशेषैरपि वेद्यसे त्वम् ।**
**विभागमृच्छन्त्यमरास्त्वदन्ये**
**शाखैकदेशेषु शकुन्तकल्पाः ॥ ८० ॥**

**अयमिति**—अयं दृश्यमानः। सः प्रसिद्धः, अमृताहरणादिपराक्रमं यः कृतवानिति भावः। ते तव। गरुत्मान्। वेदमयः वेदरूपः। "सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिरः" इत्यादिश्रुतेः। अतो [1]देवानां त्वच्छेषत्वमित एवावसीयत इति भावः। [2]तदेव वेदैरशेषैरिति—अशेषैरपि वेदैः। त्वं। वेद्यसे बोध्यसे। "सर्वे वेदा यत्पदमामनन्ति" इति श्रुतेः। त्वदन्ये अमराः ब्रह्मादयस्तु। शकुन्तकल्पाः पक्षितुल्याः सन्तः। शाखानां वेदप्रभेदानां एकदेशेषु। विभागं प्रतिपादनव्यवस्थां ऋच्छन्ति प्राप्नुवन्ति। यथा शकुन्ता महावृक्षस्य विटपैकदेशेष्वावासविभागमृच्छन्ति, तद्वदित्यर्थः। देवतान्तरप्रतिपादकवेदभागानामपि त्वय्येव महातात्पर्यमिति भावः। अन्यथा सर्ववेदवेद्यत्वोक्तिविरोधात् ॥ ८० ॥

**सिसृक्षतस्ते भुवनानि सप्त**
**प्रसादतो नाथ बभूव वेधाः ।**
**संहर्तुकामस्य तवैव कोपात्**
**अहं त्वया दत्तनिजाधिकारः ॥ ८१ ॥**

**सिसृक्षत इति**—हे नाथ। वेधाः चतुर्मुखः। सप्त। भुवनानि सिसृक्षतः। ते तव। प्रसादतः प्रसादात्। बभूव। संहर्तुकामस्य

[1] देवानां, इत्यस्य थाने 'वेदानां' इति पाठस्स्यादिति भाति. [2] 'तदेव' इत्यस्य स्थाने 'तदेवाह—' इति पाठः स्यादिति भाति ॥

इमानि भुवनानि प्रलये संहर्तुं कामो यस्य तस्य। तवैव। कोपात्। अहं। [1]बभूवेत्यनुषङ्गः। लिट उत्तमपुरुषेऽपि तथैव रूपम्। त्वया दत्तनिजाधिकारः इत्युभयत्रापि विशेषणम्।

एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ मम।
मया दर्शितपन्थानौ सृष्टिसंहारकारकौ॥

इति भारते भगवद्वचनात्॥ ८१॥

अविक्रियश्चेष्टयसि त्वमेको
विश्वानि भूतानि विहारशक्त्या।
अचेष्टमानप्रकृतीन्ययांसि
[2]स्थाताऽप्ययस्कान्त इवाभिमुख्यात्॥ ८२॥

अविक्रिय इति—अविक्रियः विकाररहितः। त्वं। एकः अन्यानिरपेक्ष एव। विश्वानि सर्वाणि। भूतानि। विहारशक्त्या क्रीडानुकूलशक्त्या। चेष्टयसि। कथमिव—अयस्कान्तः मणिविशेषः। स्थाता स्वयं चेष्टारहितस्तिष्ठन्नपि। आभिमुख्यात् सन्निधानात् विहारशक्तिस्थानीयात्। अचेष्टमानप्रकृतीनि स्वतश्चेष्टारहितस्वभावानि। अयांसीव॥ ८२॥

अलङ्घ्यमायागुणजालभीतान्
अनन्यचित्ताननुकम्पमानः।
त्वदत्तयैव स्वपदाब्जभाजा
भक्त्या स्वयं तारयसे भवाब्धिम्॥ ८३॥

अलङ्घ्येति—अलङ्घ्याः लङ्घितुमशक्याः मायाया गुणाः सत्त्वरजस्तमांस्येव जालं आनायः बन्धनहेतुत्वात्, ततो भीतान्।

---

[1] शिशुत्वेन स्वस्य तदानीं स्वोत्पत्तिज्ञानाभावात् 'सुप्तोऽहं किल विललाप' इतिवदत्र 'बभूव' इति पारोक्ष्येण निर्देशः. [2] स्वतोऽप्ययस्कान्त—**ग्र. दे. मु.**

अनन्यचित्तान् अन्यनिरपेक्षान् एकान्तभक्तान्। अनुकम्पमानः दयमानस्त्वम्। स्वदत्तयैव। स्वपदाब्जभाजा स्वविषयिण्या। भक्त्या। भवाब्धिम्। स्वयम्। तारयसे। स्वयमेव मुक्त्युपयोगिनीं प्रकृष्टां भक्तिं दत्त्वा मोचयसीत्यर्थः ॥८३॥

**भारावताराय भुवोऽवतीर्णं**
**भवन्तमन्तर्हितदिव्यभावम्।**
**संस्थापयन्तं नियमेन धर्मं**
**धर्मं परं वेदविदो विदुस्त्वाम् ॥८४॥**

**भारेति**—भुवः। भारावताराय। अवतीर्णं। अन्तर्हितदिव्यभावं भवन्तं तिरोहिताप्राकृतस्वभावं भवन्तं। धर्मं नियमेन संस्थापयन्तं तदेकपरतया प्रतिष्ठापयन्तं। त्वां। वेदविदः। परं परमपुरुषार्थमोक्षोपयोगित्वादुत्कृष्टम्। धर्मं। विदुः जानन्ति। "कृष्णं धर्मं सनातनम्" इत्यादौ परधर्मरूपत्वं भगवतः प्रसिद्धम्॥ ८४॥

**विधाय दैत्यप्रकृतीनशेषान्**
**नामावशेषान्नरलोकपालान्।**
**करिष्यसि त्वं करुणार्द्रचेता**
**नाथ क्षितिं नावमिवास्तभाराम् ॥ ८५ ॥**

**विधायेति**—हे नाथ। करुणार्द्रचेतास्त्वं। दैत्यप्रकृतीन् असुरतुल्यस्वभावान्। नरलोकपालान् राज्ञः, अशेषान् अन्यानपि पौण्ड्रकादीन्। नामावशेषान्। विधाय उपसंहृत्य। क्षितिं। नावमिव भारातिशयात् समुद्रे प्रसक्तमज्जनां नावमिव। अस्तभारां अपास्तभारां। करिष्यसि॥ ८५॥

दयाक्षमाभ्यामिह दीव्यसि त्वं
लक्ष्मीमहीभ्यामिव लालितात्मा।
तत् क्षम्यतामस्य मदेकभक्तेः
आजानतः[1]स्वात्मचमत्क्रियेयम् ॥ ८६ ॥

**दयेति**—इह लोके। त्वं। दयाक्षमाभ्यां। लक्ष्मीमहीभ्यामिव। लालितात्मा उपलालितरूपः, सेवितस्सन्। दीव्यसि क्रीडसि। तत् तस्मात् दयाक्षमायोगित्वात्। मदेकभक्तेः अहमेको भक्तिभजनीयो यस्य तस्य। अस्य बाणस्य। आजानतः स्वभावतः। इयं। स्वात्मनि चमत्क्रिया चमत्कारः शौर्यगर्वः, क्षम्यतां सह्यतामिति प्रार्थनायां लोट् ॥ ८६ ॥

नाथो यदूनामिति भूतनाथे
स्वभक्तरक्षामभियाचमाने।
अतर्कितप्रत्युपकारलेशां
आकस्मिकीमाद्रियतानुकम्पाम् ॥ ८७ ॥

**नाथ इति**— यदूनां। नाथः। इति उक्तप्रकारेण। भूतनाथे। स्वभक्तरक्षां। अभियाचमाने सति। अतर्कितप्रत्युपकारलेशां अनपेक्षितप्रत्युपकारलवाम्। अत एव. आकस्मिकीं अकस्मात् भवां [2] निर्हेतुकाम्। अनुकम्पां। आद्रियत अङ्गीकृतवानित्यर्थः ॥ ८७ ॥

---

[1] रजानतः—**ग्र. दे. मु.**  [2] निर्हेतुकामिति। अत्रेदं बोध्यम्—नात्र निर्हेतुकामित्यनेन कारणसामान्याजन्यत्वं विवक्षितम्, किं तु रक्षाप्रार्थनातिरिक्तस्वप्रत्युपकारादिरूपकारणाजन्यत्वमेव। अत एवाचार्यपादैर्मूल एव 'स्वभक्तरक्षामभियाचमाने अतर्कितप्रत्युपकारलेशां' इत्यनुगृहीतम्। अत एव च 'सर्वज्ञोऽपि हि विश्वेशः सदा कारुणिकोऽपि सन्। संसारतन्त्रवाहित्वाद्रक्षापेक्षां प्रतीक्षते'॥ इत्यादिप्रमाणान्यप्युपपद्यन्त इति.

प्रविश्य देहं पुनरुत्पतन्त्या
स्वमौलिभाजेव सुरस्रवन्त्या ।
वाचा मनःप्रीतिमिवोद्वमन्तं
शौरिस्तदा शूलिनमित्युवाच ॥ ८८ ॥

**प्रविश्येति**—तदा । देहं । प्रविश्य । पुनरुत्पतन्त्या मुखादुद्गच्छन्त्या । स्वमौलि[1]भाजा स्वमकुटवासिन्या । सुरस्रवन्त्या गङ्गयेव स्थितया । वाचा । मनःप्रीतिं मूर्तां मनसः प्रीतिं । उद्वमन्तमिव स्थितं । शूलिनं । शौरिः । इत्युवाच ॥ ८८ ॥

तवैष भक्तो मम चेति मन्ये
क्षान्तस्ततो नित्यमसौ मयाऽपि ।
न चास्ति बन्धोरपि साम्पराये
वीरव्रतं धारयतोपकारः[2] ॥ ८९ ॥

**तवेति**—एषः असौ बाणः। तव । भक्तः। अत एव, मम च भक्तः। इति । मन्ये। ततो हेतोः। मयाऽपि। असौ। नित्यं। क्षान्तः अपराधेषु सोढः। तर्हीदानीमपि किमिति न सोढम्? तत्राह—न चेति। साम्पराये युद्धे। वीरव्रतं। धारयता, पुरुषेण। बन्धोरपि। उपकारः। न चास्ति नास्त्येवेत्यर्थः। युद्धे बन्धुदाक्षिण्यमपि न कार्यमिति वीराणां नियम इत्यर्थः॥ ८९ ॥

[1] भाजा मकुटा—घ. [2] पकारं—ग्र. दे. मु.

विहारनृत्तानि वितन्वतस्ते
वल्गुध्वनिं वादयिता मृदङ्गम् ।
भजत्वविच्छिन्नधृतिर्भवन्तं
दत्ताभयो दैत्यपतिर्मयाऽसौ ॥ ९० ॥

विहारेति—मया । दत्ताभयः । असौ । दैत्यपतिः । विहारनृत्तानि । वितन्वतः कुर्वतः । ते । वल्गुध्वनिं मञ्जुशब्दं । मृदङ्गं वाद्यविशेषं । वादयिता साधु वादयन् । अविच्छिन्नधृतिः अनवरतसन्तोषश्च सन् । भवन्तं । भजतु सेवताम् । मयाऽपि दत्ताभयस्याकुतोभयत्वादिति भावः । वादयितेति [1] साधुकारिणि तृन्प्रत्ययः । अत एव तद्योगे [2] द्वितीया ॥ ९० ॥

अथान्वमंस्त त्रिजगन्नियन्ता
पत्युः पशूनां प्रणयानुरोधात् ।
बाणावरोधप्रमदाजनानां
स्थायीनि मङ्गल्यविभूषणानि ॥ ९१ ॥

अथेति—वाक्यारम्भे अथशब्दः । [3] त्रिजगतां नियन्ता कृष्णः । पशूनां पत्युः शिवस्य । प्रणयानुरोधात् स्नेहानुवर्तनात् । बाणस्य अवरोधप्रमदाजनानां अन्तःपुरस्त्रीजनानां । मङ्गल्यानि भर्तृमतीचिह्नानि मङ्गलसूत्ररूपाणि विभूषणानि । स्थायीनि अन्वमंस्त 'विहारनृत्तानि' (२० स. ९० श्लो.) इत्यादिषूक्तप्रकारेण स्थायित्वेनानुमन्यते स्म ॥

---

[1] 'आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' (पा. सू. ३-२-१३४) इति सूत्रेणेति भावः.

[2] 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' (पा. सू. २-३-६९) इति सूत्रेण तृनो योगे षष्ठीनिषेधान्मृदङ्गमित्यत्र द्वितीयेति भावः.

[3] त्रिजगतो नि—च.

ततोऽसुरेन्द्रः प्रणिपातपूर्वं
जगत्परित्राणरतं जगाद ।
उषानिरुद्धान्वयतस्समीक्ष्याः
भृत्या वयं प्रीतधिया त्वयेति ॥ ९२ ॥

**तत इति**—ततः भगवद्वचनानन्तरं। असुरेन्द्रः बाणः। जगत्परित्राणरतं लोकरक्षणनिरतं कृष्णं। प्रणिपातपूर्वं। जगाद। किमिति? प्रीतधिया प्रसन्नमनसा। त्वया। उषानिरुद्धयोरन्वयतः विवाहसम्बन्धाद्धेतोः। वयं। भृत्याः। समीक्ष्याः इति। दुहितृप्रदातृकुलं वरकुलस्य वशवर्तितया भृत्यप्रायं भवतीति भावः। तथा [1] रघुवंशे दशरथं प्रति जनकवचनम्—

"भृत्यभावि दुहितुः परिग्रहात्
[2] वीक्ष्यतां कुलमिदं निमेरिति" (रघुवंशे ११-४९)

हिरण्यरत्नानि हिरण्यपूर्वैः
बलादुपात्तान्युपदाय बाणः।
निरोधखिन्नावुचितोपचारैः
आनर्च सस्नेहमुषानिरुद्धौ॥ ९३ ॥

**हिरण्येति**—बाणः। हिरण्यपूर्वैः हिरण्यकशिपुप्रभृतिभिः स्वप्राचीनैः। बलादुपात्तानि भुजबलादार्जितानि। हिरण्यानि रत्नानि च। उपदाय उपदीकृत्य। निरोधेन खिन्नौ। उषानिरुद्धौ। सस्नेहं यथा तथा। उचितोपचारैः [3] निरोधहननप्रार्थनादिभिः। आनर्च अर्चति स्म ॥ ९३ ॥

---

[1] वंशे दशरथं—घ. [2] 'दिश्यतां' इति मुद्रितपाठः. [3] 'निरोधसहन' इति शुद्धपाठोऽत्र भाव्यमिति भाति.

सम्बन्धिभावप्रतिपत्तिभाजा
सन्धाय बाणेन स सत्यसन्धः ।
उषापतेर्यौतकलाभ[1]लक्ष्यात्
जेता [2]जहारैव विपक्षलक्ष्मीम् ॥ ९४ ॥

**सम्बन्धीति**—सत्यसन्धः सत्यप्रतिज्ञः । जेता जयशीलः । सः कृष्णः । सम्बन्धिभावप्रतिपत्तिभाजा दुहितृप्रदानात् कृष्णस्य स्वयं सम्बन्धित्वबुद्धिभाजा । बाणेन सह । सन्धाय सन्धिं कृत्वा । उषापतेः अनिरुद्धस्य । यौतकलाभल[3]क्ष्यात् विवाहसमयेषु युतयोर्वधूवरयोः यद्दीयते तद्यौतकं । "कन्यादाने धनं दत्तं यौतकं युतकं च तत्" इति यादवः, तस्य लाभव्याजात् । विपक्षस्य शत्रोर्बाणस्य लक्ष्मीं । जहारैव आहृतवानेव । एवकारः साकल्येनापहारद्योतनार्थः ॥ ९४ ॥

हरेण दत्तां हरिणाऽपि बाणः
स्थिरीकृतामप्रतिघामभीतिम् [3] ।
तनुत्रयन् वर्जितलेखवैरः
शमान्वितामास्थित शम्भुसेवाम् ॥ ९५ ॥

**हरेणेति**—हरेण । दत्तां । हरिणा कृष्णेनापि । स्थिरीकृतां । अप्रतिघां अप्रतिबन्धां । अभीतिं अभयं । तनुत्रयन् तनुत्रं कवचं कुर्वन् । वर्जितलेखवैरः परिहृतसुराविरोधः । बाणः । शमान्वितां शम्भुसेवां आस्थित [4]शान्तवैर एव शिवसेवां करिष्य इति प्रतिज्ञातवान् । "आङः स्थः प्रतिज्ञाने" (वा. ९१२) इत्यात्मनेपदे लुङ् ॥ ९५ ॥

---

[1] लक्षात्—च. ग्र. दे. मु. [2] जहारेव—ग्र. दे. मु. [3] प्रतिघातभीतिम्—झ.
[4] शान्तवैर एवं—घ.

**यथार्थनामानमथानिरुद्धं**
**कृत्वा सभार्यं कृतकृत्यचेताः ।**
**सबन्धुसैन्यस्सविशेषदृश्यां**
**प्रत्याययौ विश्वपतिः पुरीं स्वाम् ॥ ९६ ॥**

**यथार्थेति**—अथ । यथार्थनामानं अन्वर्थनामानं । अनिरुद्धं । सभार्यं । कृत्वा । कृतकृत्यचेताः । सबन्धुसैन्यः बन्धुभिः सैन्यैश्च सहितः । विश्वपतिः कृष्णः । सविशेषदृश्यां सातिशयं प्रेक्षणीयां । स्वां पुरीं द्वारकां । प्रत्याययौ प्रत्याजगाम । अनिरुद्धो बाणगृहे देवकार्यनिर्वहणाय निरोधवशवर्तितामाभिनीय स्थितः, न तु वस्तुतः केनापि निरोद्धुं [1] शक्य इति यथार्थनामानमित्यनेन व्यञ्जितम् ॥ ९६ ॥

**देवास्सहस्रनयनं दनुजेन्द्रमन्ये**
**निर्धूतमानमनघेन निशामयन्तः ।**
**कूपोदकप्रभवकूर्मनयेन जातां**
**अस्वामिकप्रभुपरिग्रहबुद्धिमौज्झन् ॥ ९७ ॥**

**देवा इति**—देवाः । सहस्रनयनं स्वेषां प्रभुमिन्द्रं । अन्ये असुराः । दनुजेन्द्रं स्वेषां प्रभुं बाणं च । अनघेन अपहतपाप्मना कृष्णेन । निर्धूतमानं हृतगर्वं । निशामयन्तः पश्यन्तस्सन्तः । कूपोदकप्रभवकूर्मनयेन [2] कूपोदके उत्पन्नस्य कूर्मस्य नीत्या, स्वकूपादन्यजलाशयमजानन् कूर्मः [3] समुद्रे स्थितेऽपि कूपमेव महानिति मन्यते, तस्य भङ्ग्या । जातां । अस्वामिकप्रभुपरिग्रहबुद्धिं स्वाम्यन्तररहितस्य प्रभोः परिग्रहः स्वेन कृत इति बुद्धिं । औज्झन् अत्यजन् ॥ ९७ ॥

[1] शक्यत इति—घ. [2] कूपे—घ. [3] समुद्रस्थितेरपि—घ.

नीतस्त्रिलोकपतिना निजराजधानीं
भूयः प्रजात इव पौरजनैः प्रतीतः ।
दैत्येश्वरस्य सुतया सहितस्स रेमे
रागाधिको रतिपतेरनघः कुमारः ॥ ९८॥

नीत इति—त्रिलोकपतिना त्रयाणां लोकानां स्वामिना कृष्णेन । निजराजधानीं द्वारकां । नीतः । पौरजनैः । भूयः प्रजात इव प्रतीतः विपदुत्तीर्णत्वात्पुनरुत्पन्न इव दृष्टः । दैत्येश्वरस्य सुतया उषया । सहितः । रतिपतेः प्रद्युम्नस्य । अनघः रम्यः । सः कुमारः अनिरुद्धः । रागाधिकस्सन् । रेमे उषया सह क्रीडति स्म ॥ ९८॥

अथ तमुषासहायमुपयातमुपायनवान्
जनपदपत्तनप्रभृतिकादुपगम्य जनः ।
उपचरति स्म सम्यगुपपन्नधृतिर्बहुधा
यदुनगरे विवाहविजयोत्सवयन्त्रितधीः ॥ ९९॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयनाम्नि
महाकाव्ये विंशस्सर्गः.

---

अथेति—अथ । उपयातं बाणपुरात्समागतं । उषासहायं । तं अनिरुद्धं । उपपन्नधृतिः उत्पन्नसन्तोषः । विवाहविजयाभ्यां उत्सवाभ्यां यन्त्रितधीः वशीकृताशयः । अत एव, उपायनवान् उपहारवान् । जनः । जनपदपत्तनप्रभृतिकात् जनपदाः राष्ट्राणि, पत्तनानि नगराणि, [1] देशादयो गृह्यन्ते, ततः । उपगम्य । यदूनां नगरे द्वारकायां । बहुधा बहुप्रकारेण हर्षप्रकाशकोपहारदानादिना । सम्यक् । उपचरति स्म उपाचरत् । तोटकमिदं वृत्तम् ॥ ९९॥

इति श्रीमद्भरद्वाजकुलतिलक-विश्वजिद्याजि-श्रीरङ्गराजाध्वरिवरसूनुना
अप्पय्यदीक्षितेन विरचिते यादवाभ्युदयव्याख्याने
विंशस्सर्गः.

---

1 इतः पूर्वं ‘प्रभृतिशब्देनान्ये’ इति ग्रन्थेन भाव्यमिति भाति.

## अथ एकविंशस्सर्गः.

वासुदेव इति नाम दधानः
पौण्ड्रकस्तदनु भूरिमदान्धः ।
मानुषत्वकवचान्तरितेन
स्पर्धते स्म हरिणा हतचित्तः ॥ १ ॥

वासुदेव इति—तदनु तदनन्तरं । वासुदेव इति नाम दधानः स्वयमेव कृत्वा धारयन् । तत्र निमित्तं—भूरिमदान्धः प्रचुरमदोदग्रधीः । अत एव हतचित्तः कलुषचेताः । पौण्ड्रकः राजा । मानुषत्वमेव कवचं तेनान्तरितेन तिरोहितेन । हरिणा कृष्णेन । स्पर्धते स्म [1] वासुदेवनाम दधातीति मोहादस्पर्धतेत्यर्थः । स्वागतावृत्तमिदम् ॥ १ ॥

हेतिपञ्चकमधारयत श्री-
वत्सकौस्तुभमुखानि च मूढः ।
ऐश्वराणि चरितानि च पूर्वा-
ण्यात्मनः स्वयमजूघुषदाप्तैः ॥ २ ॥

हेतीति—मूढः पौण्ड्रकः । हेतिपञ्चकं शङ्खचक्रादिभगवदायुध-पञ्चकं । श्रीवत्सकौस्तुभमुखानि च भगवच्चिह्नानि । अधारयत । ऐश्वराणि ईश्वरसम्बन्धीनि । पूर्वाणि चरितानि जगत्युन्मज्जनमधुकैटभ-ध्वंसनादीनि । स्वयं आत्मनः स्वस्य । [2] अजूघुषत् स्वक्रियात्वेन घोषयति स्म । '[3] घुषिर् शब्दे' इति भौवादिकधातोर्णिच् [4] ॥ २ ॥

---

[1] वासुदेवो नाम—च्त्र. [2] एतदनन्तरं 'आप्तैः सुहृद्भिः' इत्यर्थकेन ग्रन्थेनात्र भाव्यमिति भाति. [3] अत एव सिद्धान्तकौमुद्यां 'घुषिर् अविश्ब्दने' (भ्वादि ६५३) 'विशब्दनं प्रतिज्ञानं ततोऽन्यास्मिन्नर्थे इत्येके। शब्द इत्यन्ये पेठुः इत्युक्तम्. [4] 'ततो लुङ्' इति शेषः.

इन्द्रजालकुहनादिषु दाक्ष्यात्
ईश एष इति मोहितलोकः।
अध्यशत भुजगेश्वरशय्या
आरुरोह विहगेन्द्रविवर्तम् ॥ ३ ॥

इन्द्रजालेति—इन्द्रजालं व्यामोहककलाविशेषः, कुहना [1]कृत्रिम . . . . . . धारणादिरूपः कपटः, आदिशब्देन पुरुषान्तरमुखकृतलोकाविश्वासोत्पादनादि गृह्यते, एषु । दाक्ष्यात् सामर्थ्यात् । ईश एष इति मोहितलोकः । भुजगेश्वर-शय्यां कृत्रिमशेषशय्यां । अध्यशेत । 'अधिशीङ्स्थासां कर्म' (पा. सू. १-४-४६) इति अधिकरणस्य कर्मता । विहगेन्द्रविवर्तं गरुडाकृतिं सुपर्णाकृतिवाहनं । आरुरोह ॥ ३ ॥

अन्वहं च महतीं वनमालां
माल्यकृद्भिरुपकल्प्य बभार ।
नामधेयमदिशत्सचिवानां
नाकनायकविशेषनिरूढम् ॥ ४ ॥

अन्वहमिति—किंच । अन्वहं अहन्यहनि । महतीं । वनमालां । माल्यकृद्भिः । उपकल्प्य ग्रथयित्वा । बभार । सचिवानां । नाकनायकविशेषेषु देवविशेषेषु निरूढं इन्द्रचन्द्रादिनामधेयं । अदिशत् ॥ ४ ॥

बद्धकृत्रिमभुजान्तरयुग्म
शस्यमानमनुजीविजनेन ।
विश्वकर्तुरवतार इति स्वं
बह्वमंस्त बधिरो निगमेषु ॥ ५ ॥

बद्धेति—निगमेषु बधिरः अनुकरणादिरूपभगवद्द्रोहाचरणे प्रत्यवाय इति वेदरहस्यानभिज्ञः पौण्ड्रकः । बद्धं कृत्रिमभुजान्तरयुग्मं

[1] अत्र 'कृत्रिम शंखचक्रधारणादि' इति पाठः स्यात्.

स्वतस्सिद्धभुजयुग्मातिरिक्तं भुजयुग्मं येन तं । अनुजीविजनेन । शस्यमानं त्वमेव साक्षाद्विष्णुरिति स्तूयमानं । स्वं [1] आत्मानं । विश्वकर्तुः नारायणस्य । अवतार इति । बहुमंस्त बहु यथा तथा मन्यते स्म । तस्य स्वत एव सर्वेश्वरत्वाभिमाने स्थिते लोके विश्वासोत्पादनापर . . . . . . दिकल्पनमिति भावः ॥ ५ ॥

इत्थमीश्वरविडम्बनरूपं
नाटकीयमनुरुध्य विहारम् ।
शोच्यतामपि [2] परावरविद्भिः
हास्यतामपि जगाम जगद्भिः ॥ ६ ॥

**इत्थमिति**—इत्थं उक्तप्रकारेण । ईश्वरविडम्बनरूपं जगदीश्वरस्य विष्णोरनुकरणरूपम् । नाटकीयं नाटकचरित्रसदृशम् । विहारम् । अनुरुध्य अनुवर्त्य । परावरविद्भिः उत्कृष्टाप[3]कृष्टत्वविद्भिः, शोच्यतां भगवद्द्रोहादयमेवमात्महा जात इति शोचनीयताम् । जगद्भिः जनैः कृत्रिमवेषं जानद्भिः । हास्यतामपि । जगाम ॥ ६ ॥

मस्तकस्थितदुरत्ययमृत्योः
तस्य दूत उपसृत्य जगाद ।
कृत्यशेषविनिवेशितचित्तं
निर्भयो नृपतिसंसदि नाथम् ॥ ७ ॥

**मस्तकेति**—मस्तके स्थितः दुरत्ययः दुरतिक्रमः मृत्युः यस्य तस्य आसन्नमृत्योः पौण्ड्रकस्य[4] . . . . . . .

[1] स्वात्मानं—घ. ट. [2] परापर—झ. [3] कृष्टतत्त्वावेदिभिः—घ. ज. ट.
[4] एतदनन्तरं "दूतः चारः । कृत्यशेषे कर्तव्यशेषे विनिवेशितं विन्यस्तं चित्तं मानसं यस्य तं । नाथं कृष्णम् । उपसृत्य । नृपतिसंसदि राजसभायां । निर्भयः भयरहितस्सन् । जगाद गदति स्म" इत्यर्थकव्याख्याग्रन्थेनात्र गलितेन भाव्यमिति भाति.

*कृष्णकृष्ण गदतो गिरमर्थ्यां
संशृणुष्व महतीमिह मत्तः ।
अप्रमत्तमतिभिस्सह मित्त्रैः
आप्तवाक्यमवधीर्य न सिद्धिः ॥ ८ ॥

[कृष्णकृष्णेति––कृष्णकृष्ण 'वाक्यादेरामन्त्रितस्य' (पा. सू. ८-१-८) इत्यादिना द्विर्भावः । अप्रमत्तमतिभिः अवहितबुद्धिभिः । मित्त्रैः सुहृद्भिस्सह । अर्थ्यां अर्थात्प्रयोजनादनपेतां प्रयोजनवतीमित्यर्थः । 'धर्मपथ्यर्थन्यायादनपेते' (पा. सू. ४-४-९२) इत्यनेन यत्प्रत्ययः । इह अस्मिन् देशे काले विषये वा । महतीं पूजनीयाम् । गिरं वाक्यम् । गदतः व्यक्तं वदतः । मत्तः पौण्ड्रकदूतान्मत्सकाशात् । पञ्चम्यास्तसिल् । संशृणुष्व सम्यगाकर्णय । आप्तवाक्यं आप्तानामस्मदादीनां हितोक्तिं । अवधीर्य तिरस्कृत्य । स्थितस्येति शेषः । अत एव समानकर्तृकत्वनिबन्धनक्त्वाप्रत्ययोपपत्तिः । सिद्धिर्न अभीप्सितावाप्तिर्न भवेत् । अत आप्तवाक्यमनवधीर्य भवता तथैव वर्तितव्यमिति भावः । अत्र श्लोके गिरमित्यस्य कर्मणो गदत इत्यत्रान्वयात् संशृणुष्वेत्यत्र शृणोतेरविवक्षितकर्मकतयाऽकर्मकत्वात् 'अर्तिश्रुदृशिभ्यश्चेति वक्तव्यं' (वा. ९२६) इति वार्तिकात्तत आत्मनेपदमुपपद्यते । एवमेव 'हितान्न यस्संशृणुते स किं प्रभुः' इत्यादयः प्रयोगाः ।]

*अस्ति कश्चिदवधारितभूमा
पूरुषः श्रुतिगणेषु पुराणः ।
स क्षितिं परिगृहीतविहारः
पौण्ड्रकत्वमधिगम्य भुनक्ति ॥ ९ ॥

[किं तद्वाक्यमिति चेदाह––अस्तीति ॥ श्रुतिगणेषु निगमबृन्देषु । अवधारितः विनिश्चितो भूमा महिमा जगत्सृष्टिनियमनादि-

रूपं माहात्म्यं यस्य स तथोक्तः । पुराणः पुरातनः । कश्चित् ज्ञेयस्वरूपः । पूरुषः निखिलजगदन्तर्यामी । अस्ति । अस्तीति त्रैकाल्य-सत्ताभिप्रायेणायं प्रयोगः । सः तादृङ्निगमगणश्रूयमाणवैभवशाली परमपुरुषः । पौण्ड्रकत्वमधिगम्य पौण्ड्रकपदव्यवहार्यत्वं प्राप्य । परिगृहीतविहारः आश्रितमानुषलीलारूपविहारः । क्षितिं भूमिं । भुनक्ति पालयतीत्यर्थः ॥]

*तस्य नित्यनिरुपाधिकभूम्नो
विश्वभोक्तुरधिगम्य तितिक्षाम् ।
भुज्यते नियतकर्मविपाकैः
युष्मदादिभिरिला बहुभागा ॥ १० ॥

[तस्येति—नित्यः अविनश्वरः, निरुपाधिकः स्वाभाविकः, भूमा महिमा यस्य तस्य । विश्वभोक्तुः निखिलप्रपञ्चस्यानुभवितुः । तस्य पौण्ड्रकस्य । तितिक्षां क्षमां । अधिगम्य प्राप्य । बहवः अनेके भागाः प्रदेशा यस्यां सा । इला भूमिः । नियतकर्मविपाकैः नियतोऽवश्यं-भावी कर्मणां विपाकः फलं येषां तैः । युष्मदादिभिः भवत्प्रभृतिभिः । भुज्यते अनुभूयते । कर्मबद्धैरनुष्ठितानां कर्मणां फलमवश्यंभावी-त्येव पौण्ड्रको भवदादीनां तत्तत्क्षितिभागेश्वरत्वं क्षमते । न तु भवदादीनां निरुपाधिकेश्वरत्वबुद्ध्येति भावः ॥]

*अर्थतत्वमिदमश्रुतपूर्वं
शृण्वताऽत्रभवता भवितव्यम् ।
निश्चलीकृतहिताहितसीम्ना
जिष्णुना यदुकुलस्य विभूत्यै ॥ ११ ॥

[अर्थेति—अत्र अस्मिन् विषये । निश्चलीकृता अचञ्चलीकृता हिताहितयोरिष्टानिष्टयोः सीमा मर्यादा येन तेन । जिष्णुना जयशीलेन ।

भवता त्वया। यदुकुलस्य यदुवंशस्य। विभूत्यै समृद्धयै। इदं मयोक्तं। अश्रुतपूर्वं अनाकर्णितचरं। अर्थतत्वं पौण्ड्रकभिन्नस्य कर्मफलायत्तेश्वरभावरूपं विषययाथार्थ्यं। शृण्वता आकर्णयता सता। भवितव्वं वर्तितव्यम्। न तु स्वस्य निरुपाधिकेश्वरभावानुसन्धानवतेति भावः ॥]

एतच्चिह्नाङ्कितश्लोकचतुष्टयस्य सव्याख्यमातृकाकोशेषु व्याख्याया अनुपलम्भाद्व्याख्येयमस्माभिर्निर्माय संयोजिता।

आदिशत्यखिललोकनियन्ता
त्वामसौ भजनसौहृदनिघ्नः।
ईशितव्यगणनालिखितस्त्वं
मा कृथा [2] वितथमीश्वरमानम् ॥ १२ ॥

[1] इत्याह—ईशितव्येति—ईशितव्यानां नियम्यकोटीनां गणनायां लिखितः। त्वं ईश्वरमानं जगदीश्वरस्य तस्य सत्कारं। वितथं मा कृथाः व्यर्थं मा कार्षीः। इदानीं क्रियमाणो नियोगस्तत्र पथ्यतया सत्काररूपः, अयं नाद्रियते चेत् अन्यथैवारिष्टमापतेदिति भावः। पौण्ड्रकस्य वचनमुत्तरश्लोकमारभ्य। अथवा उत्तरार्धमपि तद्वचनमेव। मन्नियम्यभूतस्त्वं त्वयि वितथमीश्वराभिमानं मा कृथा इत्यर्थः ॥ १२ ॥

बाह्यवर्त्मनि परावरतत्व-
व्यत्ययेन विनिवृत्तसतत्वे।
चित्तवृत्तिमधिरोप्य विमूढाः
[3] श्रेयसो हि बहिरेव भवन्ति ॥ १३ ॥

बाह्येति—विमूढाः अज्ञाः। परावरतत्वयोर्व्यत्ययेन व्यत्यासेन, परतत्वस्यावरत्वेन अवरतत्वस्य परत्वेन च भ्रान्त्या। विनिवृत्त-

अत्र "आदिशतीति—अखिललोकानां समस्तभुवनानां नियन्ता नियामकः। भजनसौहृदनिघ्नः भजनस्य भक्तेः सौहृदस्य सुहृद्भावस्य च निघ्नः परवशः। भजनजनितसमीचीनहृदयतापरतन्त्र इति वा। असौ पौण्ड्रकः। त्वां भवन्तं। आदिशति आज्ञापयति। कथमाज्ञाप्यः" इत्येतदर्थकग्रन्थेन गलितेन भाव्यमिति भाति ॥

सतत्वे व्यावृत्ततत्वे वस्तुतत्वाननुरोधिनी । 'रूपं तत्वं सतत्वं च' इति यादवः । बाह्यानां तत्वावगमबहिर्भूतानां पामराणां वर्त्मनि मार्गे । चित्तवृत्तिं । अधिरोप्य निवेश्य । श्रेयसो बहिरेव भवन्ति हि । अतः श्रेयस्कामिना त्वया तत्वविषयो मदुपदेश आदरणीय इति भावः ॥ ॥ १३ ॥

**ईश्वरस्त्वमसि चेत्कुत [1] एवं**
**न त्वदग्रज इति प्रमितिः स्यात् ।**
**द्वौ युवां परम इत्यपि दुःस्थं**
**कस्ततो विषम एव न चान्यः ॥ १४ ॥**

**ईश्वर इति**—त्वमीश्वरोऽसि चेत् । एवं त्वद्वदेव । त्वदग्रजो नेति तवाग्रजो बलभद्र ईश्वरो न भवतीति । कुतः प्रमितिस्यात् कस्मात् प्रमाणात् प्रमा भवेत् । नात्र नियामकमास्ति, द्वयो[2]रपि वैभवाद्यविशेषादिति भावः । तर्हि द्वयोरपीश्वरत्वमस्तु, तत्राह—द्वाविति । द्वौ युवां । परमः परमपुरुषः [3] । इत्यपि इतिवचनमपि । दुःखेन तिष्ठतीति दुःस्थं, दोषयुक्तमित्यर्थः । दोषमेव सामान्यमुखेनाह—कस्तत इति । ततो विषमः तस्माद्विलक्षणः । क एव को वा । अन्यो न, त्वद्व्यतिरिक्तो[4] नैव । यस्माद्यो विलक्षणः तस्मात्स व्यतिरिक्तो भवत्येव, दहनात्तुहिनमिवेत्यर्थः । तथा च स्यमन्तकमणिचौर्यशङ्कया कृष्णे बलदेवस्य कोपात्प्रवास इत्यादेः भेदकधर्मस्य प्रसिद्धत्वात् [5] युवयोरेकपरमपुरुषावतारत्वं न सम्भवतीति भावः । तयोः प्रत्येकं परमपुरुषत्वमाशङ्क्य निराकृतं "द्यावाभूमी जनयन् देव एकः" इत्यादिषु एकेश्वरत्वस्य

---

[1] एवं तत्त्वदग्रज इति प्रमितः स्यात्—झ. एवं स त्वदग्रज—ग्र. मु. [2] तत्र द्वयो—घ. [3] पुरुषः इति वचनमपि—घ. ज. ट. [4] 'तद्व्यतिरिक्त' इत्यत्र पाठः स्यात्. [5] युवयोरेकस्य परम—घ.

प्रसिद्धेः । तत्रापि "अस्ति कश्चिदवधारितभूमा पूरुषः श्रुतिगणेषु पुराणः" (२१ स. ३ श्लो.) इति [1]दूतमुखेन तदर्थप्रकाशनाच्च ॥ १४ ॥

अर्थवादकुहनाभिरपि स्वान्
नेश्वरान् विगणयन्ति सुरेन्द्राः ।
निष्प्रमाणजनुषो जनवादात्
कः स्विदीश इति विश्वसिति स्वम् ॥ १५ ॥

अर्थवादेति—सुरेन्द्राः सुरश्रेष्ठाः "न किरिन्द्र त्वदुत्तरः" ऋक्सं ३ अष्ट. ६ अध्या. १९ वर्ग १ ऋक्. "विश्वस्मादिन्द्र उत्तरः" (ऋक्संहिता ८ अष्ट. ४ अध्या. ४ वर्ग १-२३ ऋचः) "इन्द्रो यातोऽवसितस्य राजा" (ऋक्सं अष्ट. २ अध्या. ३८ वर्ग १५ ऋक्. तै. ब्रा. २-८-४) "अग्निरग्रे प्रथमो देवतानां" (तै-ब्रा २-४-३) "राजानौ वा एतौ देवतानां यदग्नीषोमौ (तै-सं—२—६-२) इत्यादयो मन्त्रार्थवादाः, अर्थवादानां स्तुतिद्वारेव मन्त्राणामप्यनुष्ठेयार्थस्मृतिद्वारा विध्यर्थत्वादर्थवादशब्देन ग्रहणम् "अर्थवादः परार्थोक्तिः" इति यादवः, त एव कुहनाः कपटाः, विवक्षितमर्थं [2]निगूह्य अविवक्षितार्थप्रकाशनात्, ताभिरपि । स्वान् स्वात्मनः । ईश्वरान् । न विगणयन्ति न मन्यन्ते । निष्प्रमाणजनुषः मूलप्रमाणरहितजन्मनः । जनवादात् अयमीश्वर इति लोकवादात् । स्वं स्वात्मानं ईश इति । कस्स्वित् । विश्वसिति । स्विदिति प्रश्ने "स्वित्प्रश्ने च वितर्के च" इत्यमरः । अर्थवादरूपैर्वेदैरपि अविश्वसनीयमीश्वरभावं निर्मूललोकवादमात्रेण बालिशोऽपि न मन्यत इति स्तवमात्रकृतं अहमीश्वर इति भ्रमं त्यजेत्यर्थः ॥ १५ ॥

---

[1] दूतवाक्यमुखेन तदर्थप्रदर्शनाच्च--च. ज. ट. [2] निगृह्य--घ. ट.

**गोपिकाभिरपि कर्मभिरास्तां**
**बद्ध एव यदि मुक्तिविधाता ।**
**[1] अद्भुतस्थितिरनान्तरबाह्यः**
**सप्तमस्तु समयोऽयमपूर्वः ॥ १६ ॥**

**गोपिकाभिरिति**—कर्मभिरित्यास्तां नाम यज्ञादिकर्मानुष्ठानात्कर्मभिस्त्वं बद्ध [2] इति तिष्ठतु । गोपिकाभिरपि बद्ध एव परस्त्रीविशंवद एव । यदि मुक्तिविधाता [3] चेतनानां मुक्तेर्दाता । तदा अद्भुतस्थितिः आश्चर्यमर्यादः । अनान्तरबाह्यः आन्तरो वैष्णवादिः, बाह्य आर्हतादिः, वेदानुरोधाननुरोधावान्तरबाह्यत्वे, तदुभयव्यतिरिक्तः । अपूर्वः इदंप्रथमः । सप्तमः ब्राह्मवैष्णवशैव [4] . . . वैषम्यद्योतनार्थः । पूर्वसमयेषु हि न क्वापि स्वयं बद्धस्य मुक्तिदातृपरमेश्वरस्वरूपत्वमस्ति । अत्र तदस्तीत्यद्भुतमित्युपहासः ॥ १६ ॥

**इष्ट एव तु मदीश्वरभावः**
**त्वन्मुखैर्न खलु शक्यनिरोधः ।**
**मत्सुखादिषु कथं विशयानैः**
**मत्परत्व[5]मपदं प्रतिषेध्यम् ॥ १७ ॥**

**इष्ट इति**—मदीश्वरभावः इष्ट एव मदीश्वरत्वं सम्प्रतिपन्नमेव । त्वन्मुखैः त्वत्प्रभृतिभिः । न खलु शक्यनिरोधः निरोद्धुं न शक्य[6] इत्यर्थः । खलुर्वाक्यालङ्कारे । अमुमर्थं हेतुना साधयति—मत्सुखा-

---

[1] अद्भुतस्थितिरनन्तर-**ग्र. दे. मु.** [2] इति तथा तिष्ठतु-**च.** [3] चेज्जनानां-**घ. च. ट.** [4] 'शाक्तगाणपतकापालिकेभ्यस्तुशब्दो' इत्यत्र ग.लितो ग्रन्थ इति भाति. [5] मपदप्रति-**घ.** मपरप्रति-**ट.** [6] शक्यत इत्यर्थः-**ज. ट. ज.**

दिष्विात । मम सुखदुःखादिषु । विशयानैः । त्वन्मुखैः । मत्परत्वं मम व्यतिरिक्तत्वं । अपदं विवादानास्पदमसन्दिग्धं । कथं प्रतिषेध्यं । अन्यस्य सुख[1]दुःखादय एवाप्रत्यक्षाः, न तु स्वस्यापि । तथा च यस्य यो वर्तमानसुखदुःखादिसंयोगं न जानाति तस्य तस्माद्व्यतिरिक्तत्वमसन्दिग्धमिति न तत्प्रतिषेद्धुं शक्यत इत्यर्थः । अनेन परत्वं परमात्मत्वं निषेद्धुं न शक्यत इति छलेन प्रतीयत इति प्रकृतसङ्गतिः । यद्यपि [2]छलोत्तरत्वात् तत्प्रतिवादिनाऽप्येवं स्वेश्वरत्वस्य वक्तुं शक्यत्वेन स्वव्याघातकनयात् जात्युत्तरत्वाच्च नेदं सदुत्तरं । तथापि प्रकृते [3]सर्वथा सदुत्तरासम्भवात् . . . श्लेषमात्रेणापि शोभां पुष्णातीत्येवमुक्तम् । पदशब्दस्य विषयमात्रवाचिनोऽपि "पदं द्यूतसमाह्वयम्" इत्यादौ विवादविषये विशिष्य प्रयोगात्प्रयोगः ॥ १७ ॥

एवं कृष्णस्यानीश्वरत्वं स्थापितं। सम्प्रति तत्फलं कर्तव्यं निर्दिशति—

**नामधेयमनपायि मदीयं**
**त्यज्यतां प्रथय दासतया वा ।**
**चिह्नधारणमनेन गतार्थं**
**कल्पनेन कथमीश्वरभावः ॥**

**नामधेयमिति**—अनपायि सदास्थायि मदीयं नामधेयं वासुदेव इति नाम । त्यज्यतां ।

सर्वाणि तत्र भूतानि वसन्ति परमात्मनि ।
भूतेषु च स सर्वात्मा वासुदेवस्ततः स्मृतः ॥

इति परमात्मवाचितया निरुक्तं वासुदेवनाम अनिदंप्रथममिति अभिप्रेत्य

[1] दुःखादिः नवाप्रत्यक्षः–घ. ज. ट. [2] छलोत्तरत्वात्प्रतिवादिना–ज.
[3] सर्वदा–ठ.

अनपीयाति विशेषणम् । दासतया च प्रथय मद्दासतया वा मदीयं नाम त्वयि प्रकाशयेत्यर्थः । अनेन नाम्ना [1]उक्तेन प्रकारेण । [2]चिह्नस्य उक्तशङ्खचक्रादिमच्चिह्नस्य धारणं । गतार्थं अवगतार्थं, व्याख्यातं, तदपि त्यक्तव्यम् । [3]मद्दासतया वा मदीयं नाम त्वयि प्रकाश्य इदं प्रथनीयमिति भावः । कल्पनेन कृत्रिमेश्वरनामवेषसम्पादनेन । कथमीश्वरभावः, ईश्वरत्वं न सिध्यतीत्यर्थः । अतो निष्प्रयोजने मद्द्रोहपर्यवसायिनि च नाभिनिवेष्टव्यमिति भावः ॥ १८ ॥

नामवेषविषये कर्तव्यमुक्तं । ईश्वरोऽहमिति बुद्धिमधिकृत्याह—

**तादधीन्यनियमं यदि बुद्ध्वा**
**सोऽहमित्यनुबुभूषसि तत्स्यात् ।**
**अन्यथा तु निगृहीतिरलङ्घ्या**
**राजभावतृषितैरिव भृत्यैः ॥ १९ ॥**

**तादधीन्येति**–तस्मिन्नधीनस्य भावः तादधीन्यं, सर्वान्तर्यामिणः तस्य शरीरतया तत्पारतन्त्र्यं, तस्य नियमः बन्धमोक्षावस्थाद्वयेऽप्यनुवृत्तिः, तमर्थं । बुद्ध्वा । यदि । सोऽहं ईश्वरोऽहमिति । अनुबुभूषसि अनुभवितुमिच्छसि । तदा, तत् स्यात् युज्यते । प्रकारप्रकारिशब्दयोः सामानाधिकरण्यव्युत्पत्तिसिद्धत्वादिति भावः । अन्यथा अभेददृष्ट्या ईश्वरोऽहमित्यनुभवे तु । राजभावतृषितैः [4]राजत्वलोलुपैः । भृत्यैरिव । निगृहीतिरलङ्घ्या निग्रहो लङ्घितुं न शक्यत इत्यर्थः । अतस्तादृगनुभवस्तव मा भूदिति भावः ॥ १९ ॥

---

[1] उक्तप्रकारेण–ग्र. च. [2] चिह्नस्य शङ्खचक्रादि–घ. [3] मद्दासतया वाऽत्र मदीयनाम त्वयि प्रकाशनीयं प्रथनीयमिति भावः–घ ज ट. [4] राज्यलोलुपैः–घ. ज. ट.

आत्मन्यन्यथाप्रतिपत्तौ महत्पातकमप्यस्तीत्याह—

**पाप्मनां तमसि पातयितॄणां**
**आत्मचौर्यमधिराजपदस्थम् ।**
**चोदितेन नियतोऽपि हृतात्मा[1]**
**चोरदण्डमवशादुपयाति ॥ २० ॥**

**पाप्मनामिति**—आत्मचौर्यं आत्मापहारः, आत्मन्यन्यथाप्रतिपत्तिः। तमसि तमो दुःखं, तन्मये नरके। पातयितॄणां । पाप्मनां पापानां। अधिराजपदस्थं अधिको राजा अधिराजः तस्य पदे स्थितम्, सर्वोत्तरं पातकमित्यर्थः ।

योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥
(महाभारते—उद्यो. ४२-३५).

इति हि स्मर्यते । चोदितं चोदना, आज्ञा शास्त्ररूपा [2]'श्रुतिस्मृती ममैवाज्ञा' इति वचनात्, तेन । नियतः निबद्धो वारितोऽपि । हृतात्मा तदतिलङ्घनेन कृतात्मापहारः । अवशात् अनायत्ततया । चोरदण्डं । उपयाति । . . . . . . . . . . . .
. . . . पतनमुचितमेव । अतः पापभयाभावेऽपि उन्मार्गवर्तिनां शासितुर्मत्तो दण्डभयाद्वा आत्मचौर्यान्निवर्तितव्यमिति भावः ॥ २० ॥

**अभ्युपेतबडिशामिषनीतिं**
**प्राप्तुमिच्छुरधिकारमयोग्यम् ।**
**इष्टमर्थमनवाप्य वराकः**
**प्रत्यवैति सहसा परतन्त्रः ॥ २१ ॥**

**अभ्युपेतेति**—बडिशं मत्स्यवेधनं तस्यामिषं तत्र स्यूतं मांसं, अभ्युपेता प्राप्ता बडिशामिषस्य नीतिर्भङ्गी येन तं, बडिशामिषवत्

---

1. मृतात्मा—झ. 2. 'यस्तामुल्लङ्घ्य वर्तेत । आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः' इति शिष्टं पादत्रयम्.

प्रलोभ्यानर्थसम्पादकमित्यर्थः । अयोग्यं स्वस्याननुरूपं स्वेन कर्तुमशक्यं । अधिकारं आधिपत्यं । प्राप्तुमिच्छुः । परतन्त्रः स्वयमन्याधीनः । वराकः शोच्यः आगाम्यनर्थानभिज्ञ इति प्रबुद्धानां शोचनीयः । 'वराकस्सङ्करे शोच्ये' इति विश्वः । इष्टमर्थमनवाप्य । सहसा शीघ्रं । प्रत्यवैति अनर्थमापद्यते । अतस्त्वदयोग्यत्वादीश्वरनामवेषाभेदधियस्त्यक्तव्या इति साधारणनिर्देशः ॥ २१ ॥

**नापराध्यति क एव नियत्या**
**पण्डितस्तु विनिवृत्य समिन्धे ।**
**अस्ति चाद्य शरणागतिरर्थ्या**
**मत्परस्य तव जीवितुमिच्छोः ॥ २२ ॥**

**नापराध्यतीति**—क एव को वा । नियत्या विधिना । नापराध्यति । पामरः परीक्षको वा सर्वोऽपि विधिवशात् कदाचित् अपराधं करोत्येवेत्यर्थः[1] । परीक्षकस्य त्वयं विशेष इत्याह—पण्डितस्त्विति । पण्डितस्तु । विनिवृत्य निवृत्तो भूत्वा । समिन्धे दीप्यते, वर्धत इत्यर्थः । निवृत्तस्यापि कथं प्राचीनापराधक्षालनं भवेत्तत्राह—अस्ति चेति । जीवितुमिच्छोः । तव । अद्य इदानीम् । मत्परस्य मन्निष्ठस्य सतः । अर्थ्या प्रार्थनीया । शरणागतिश्चास्ति । अपराधेभ्यो निवृत्य मां शरणं प्राप्तश्चेत् चिरमेधिष्यस इत्यर्थः ॥ २२ ॥

**इत्युदीरितवति प्रणिधौ तं**
**प्रत्युवाच विहसन् प्रभुराद्यः ।**
**पथ्यमद्य वचनं तव मन्ये**
**यद्ब्रवीषि चिरलिप्सितमेतत् ॥ २३ ॥**

**इतीति**—प्रणिधौ चारे दूते । इति । उदीरितवति उक्तवति

[1] अत एव श्रीमद्वाल्मीकिरामायणे 'न कश्चिन्नापराध्यति' इति सीतावचनं दृश्यते.

सति । विहसन् । आद्यः प्रभुः कृष्णः । तम् । प्रत्युवाच । अद्य इदानीं । तव । वचनम् । पथ्यं पथोऽनपेतं, हितं । मन्ये । अज्ञानकृतापराधनिवृत्त्यनुकूलत्वादित्यापाततोऽर्थः । तद्वधरूपकृत्यशेषानुकूलत्वादिति हृदयम् । यद्ब्रवीषि । एतत् । चिरलिप्सितं स्वयमेव शरणागतौ पौण्ड्रको गृह्णाति न वेति सन्देहेन तत्सन्देशवचनाल्लब्धुमिष्टमित्यापाततोऽर्थः । स्वयमेव तद्वधोद्योगे नृशंसता स्यादिति तदीयं किञ्चिदागः [1] . . . [2]चिराल्लब्धुमिष्टमिति हृदयम् ॥ २३ ॥

यदुक्तं पौण्ड्रकेण त्वयीश्वरमतिस्त्यक्तव्या, मयीश्वरभावना च कर्तव्येति तत्र प्रतिसन्दिशति—

**उग्रसेनभृतका वयमेते**
**नेशितार इति विभ्रमवन्तः ।**
**सम्प्रति त्वदुपदेशमहिम्ना**
**भावयेमहि तवेश्वरभावम् ॥ २४ ॥**

**उग्रसेन इति**—एते परिदृश्यमानरूपाः । वयं । उग्रसेनस्य भृतकाः कर्मकाराः । ईशितारः ईश्वरा इति । विभ्रमवन्तो न भ्रान्तिमन्तो न भवामः । स्वयं कर्मकाराणामीश्वरत्वभ्रान्तेः को वा अवकाश इति भावः । अतः अस्मिन् सन्देशः कृतकर इति तात्पर्यम् । सम्प्रति इदानीं । त्वदुपदेश[3]महिम्ना । तव । ईश्वरभावं ईश्वरत्वं । भावयेमहि श्रद्दधीमहि । अयमापाततोऽर्थः । परमार्थतस्तु उग्रा सेना यस्येत्युग्रसेनो जीवः, तस्य सेनावदिहामुत्र च गतागतयोस्सह सञ्चारिणि इन्द्रियवर्गस्य विषयसन्निकर्षमात्रप्रकोपितयोग्रत्वात्, स भृतको भृतकवच्छेषभूतो येषां ते । वयं । ईशितार इति विभ्रमवन्तो न । किन्तु ईशितार इति प्रमितिमन्त एव । सम्प्रति । त्वदुपदेशमहिम्ना त्वदुपदेशरूपा-

---

[1] 'अस्माभिः' इति पदमात्र भाव्यमिति भाति. [2] चिराल्लब्धुमिति—घ. ट.
[3] महिम्ना इश्वर—घ. ट.

पराधमहत्त्वेन । ईश्वरभावमस्मदीयं । तव । भावयेमहि द्योतयेमेत्यर्थः । अपराधानुरूपशासनेनेति भावः ॥ २४ ॥

**त्वय्यनीश्वरमतिं न च कुर्मः**
**त्वं परोऽसि नियमेन परस्मात् ।**
**त्वां दिदृक्षव इमे वयमाशु**
**त्वत्पदं गतभियः प्रतियामः ॥ २५ ॥**

**त्वयीति**—त्वयि । अनीश्वरमतिं ईश्वरो न भवसीति बुद्धिम् । न च कुर्मः । त्वं । नियमेन अवश्यं । परस्मात् जगदुत्कृष्टात् चतुर्मुखादेरपि । परः उत्कृष्टोऽसि "परात्परं पुरुषमुपैति दिव्यम्" इति श्रुतिप्रतिपन्नः परमपुरुषोऽसि । त्वां । दिदृक्षवः द्रष्टुमिच्छवः । इमे । वयं । गतभियः 'अस्ति चाद्य शरणागतिः' (श्लो. २२) इति त्वद्वचनविश्वासादपेतभयाः, यद्वा तवाभजने हानिर्भविष्यतीति प्राप्तभयास्सन्तः । त्वत्पदमाशु प्रतियामः त्वच्चरणमुद्दिश्य गच्छाम इत्यापाततोऽर्थः । हृदयस्थस्त्वयमर्थः—त्वयि अनीश्वरमतिं ईश्वररहितबुद्धिं । न कुर्मः । तव नियन्ता ईश्वरोऽस्तीति निश्चिनुमः । त्वं । नियमेन । परस्मात् परमात्मनः । परः व्यतिरिक्तोऽसि । त्वां दिदृक्षवः कृत्रिमपरमात्मवेषधारिणं त्वां द्रष्टुं कूतूहलिनः । इमे । वयं । गतभयाः नामवेषादिसाम्यवैरेण त्वं यत्किञ्चित्कारिष्यसीति भयरहितास्सन्तः । त्वत्पदं तव स्थानं । प्रतियास्याम इति ॥ २५ ॥

**त्वादृशं प्रमितिमत्तमदृष्ट्वा**
**त्वय्यनादरवतामतिलोके ।**
**यामिमां वदसि वाचमनूचीं**
**भागधेयमिव पक्वमिदं नः ॥ २६ ॥**

**त्वादृशमिति**—त्वादृशं त्वत्समानं । प्रकृष्टा मितिमत्ता बोध-

वक्ता यस्य तथाभूतं, त्वन्माहिमोपदेष्टारं। अदृष्ट्वा। अतिलोके लोकानतिक्रान्ते, सर्वोत्तरे । त्वयि । अनादरवतां भजनाकरणेन उपेक्षां कुर्वतां । नः अस्माकं। अनूचीं त्वद्भजनकारित्वादनुकूलां । यां इमां वाचं त्वदुपदेशरूपां । वदसि । इदं । पक्कं फलोन्मुखं । नो भागधेयं अस्मद्भाग्यमिव। इदमिति विधेयप्राधान्येन नपुंसकत्वं। हृदयस्थोऽयमर्थः—त्वादृशं त्वत्समानमनन्योपमेयं । प्रमितिमत्तं प्रमित्या प्रमितत्वेन क्षुद्रतया मत्तं मदेनेत्थमपराधकारिणं । त्वां। अदृष्ट्वा। अतिलोके लोकानतिक्रान्ते लोकोपद्रवकारिणि । त्वयि । अनादरवतां निग्रहाकरणेन उपेक्षां कुर्वतां । नः। अनूचीं त्वन्निग्रहहेतुत्वात् अनुकूलां। यां। इमां वाचं अपराधरूपां । वदसि । इदं । पक्कं । भागधेयमिवेति । अत्र त्वामित्यध्या[1]हार्यः ॥ २६॥

एवं पौण्ड्रकं प्रति सन्दिश्य दूतं प्रत्याह—

**द्रक्ष्यते शरणमेत्य विभुस्ते**
**क्षेप्यते च न मयैव न चक्रम्।**
**गच्छ शीघ्रमभिधत्स्व तमीशं**
**त्वामुपैति कुकुरध्वजिनीति ॥ २७॥**

**द्रक्ष्यत इति**—ते । विभुः स्वामी । शरणमेत्य रक्षितृत्वेन प्राप्य । द्रक्ष्यते विलोकयिष्यते । चक्रं च मयैव न न क्षेप्यते, तेन न [2]त्याजनीयं मयैव तस्य पुरतः अवश्यं त्यक्ष्यत इत्यर्थः। तव। विभुः। शरणं तस्य स्थानं। एत्य। द्रक्ष्यते। मयैव। चक्रं। न न क्षेप्यते। अवश्यं तस्योपरि विसृक्ष्यत इति हृद्गतोऽर्थः । शीघ्रं । गच्छ। ईशं तव स्वामिनं। तं पौण्ड्रकं। कुकुरध्वजिनी कुकुरवंश्यानां यादवानां सेना । त्वां। उपैति। इति। अभिधत्स्व ब्रूहि ॥ २७॥

---

[1] हारः—च. [2] त्याजनीयम्—घ.

आत्तहेतिरपसर्पनिवृत्तौ
चिन्तितागमधिरुह्य सुपर्णम् ।
[1] प्रास्थित प्रतिबलावसथाय
प्राणितात्रिदशभूतिरनन्तः ॥ २८ ॥

**आत्तेति**—अपसर्पस्य चारस्य निवृत्तौ सत्यां । आत्तहेतिः गृहीतायुधः । प्राणितात्रिदशभूतिः उन्मिषितामरैश्वर्यः । अनन्तः कृष्णः । चिन्तितागं चिन्तितमात्रोपस्थितं । सुपर्णं । अधिरुह्य । प्रतिबलावसथाय प्रतिपक्षस्य निकेतनाय । प्रास्थित प्रतिष्ठते स्म । "गृहे स्त्वावसथः क्षयः" इत्यमरशेषः । यद्यपि "यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः । चारश्च गूढपुरुषः" इत्यमरकोशे तच्चारतत्पर्याया गूढपुरुषवाचित्वेनोक्ताः । तथाऽपि—

"प्रकाशश्चाप्रकाशश्च चारश्च द्विविधस्स्मृतः ।
अप्रकाशोऽयमुद्दिष्टः प्रकाशो दूत उच्यते ॥

(कामन्दके १३-३३)

इति कामन्दीयो दूतस्यापि चारविशेषत्वोक्तेः [2] तत्रापि शब्दप्रयोगः । अत एव तत्र [3] प्रागपि प्रणिधिशब्दः प्रयुक्तः ॥ २८ ॥

साहसैकरसिकेन ततोऽसौ
पौण्ड्रकेण युयुधे यदुवीरः ।
तत्सखित्वमुपगम्य च पार्ष्णिं
गृह्णता सपदि काशिनृपेण ॥ २९ ॥

**साहसेति**—ततः अनन्तरं । यदुवीरः कृष्णः । साहसे

---

[1] प्रस्थितः-झ. [2] अत्र "तत्रापसर्पशब्दप्रयोगः" इति पाठः स्यात् । तत्रेत्यस्य दूत इत्यर्थो बोध्यः । एममुत्तरत्रापि. [3] प्रागपीति ॥ अत्रैव सर्गे 'इत्युदीरितवति प्रणिधौ तं' इत्यस्मिन् (२३) श्लोक इत्यर्थः.

अविमृश्य बलात्कारे एकस्मिन् रसिकेन अभिलाषवता। पौण्ड्केण। तत्सखित्वमुपगम्य पौण्ड्रकस्य मित्रत्वं प्राप्य। सपदि। पार्ष्णि सेना-पश्चाद्भागम्। गृह्णता। काशिनृपेण, काशिर्देशविशेषः, तस्य राज्ञा च। युयुधे॥ २९॥

तत्र वैरिपृतने समकालं
पूर्वपश्चिमतया प्रपतन्त्यौ।
भावयन्नुभयतोमुखभावं
प्रत्यविध्यदधिसायकधन्वा॥ ३०॥

तत्रेति—तत्र युद्धदेशे। अधिसायकधन्वा अधिगतः सायको येन तत्तथोक्तं "प्रादिभ्यो धातुजस्य" (वा. १३६०) इति बहुव्रीहिः। तथा-भूतं धन्व धनुर्यस्य स कृष्णः। समकालं एककालं। अत्यन्तसंयोगे द्वितीया। पूर्वपश्चिमतया प्राचीनतया प्रतीचीनतया च। प्रपतन्त्यौ। वैरिपृतने पौण्ड्रक-काशिनृपयोः सेने। उभयतः दिग्द्वयेऽपि मुखं आभिमुख्यं यस्य तस्य भावं तथात्वं। भावयन् अतिशीघ्रतया अग्राह्येण कालभेदेन युगपदेव प्रभावमहिम्ना च सम्पादयन् सन्। प्रत्यविध्यत् प्रतिविध्यति स्म॥ ॥ ३०॥

वैरिसैन्यविततेषु समन्तात्
दिङ्मुखेषु सममेव पृषत्कैः।
तस्य दीप्तरुचिभिर्विनिपेते
मध्यगस्य किरणैरिव पूष्णः॥ ३१॥

वैरीति—समन्तात् परितः। वैरिसैन्यैर्विततेषु। दिङ्मुखेषु दीप्तरुचिभिः। तस्य कृष्णस्य। पृषत्कैः बाणैः। मध्यगस्य नभो-मध्यं गतस्य। पूष्णः सूर्यस्य। किरणैरिव। सममेव युगपदेव। विनिपेते विनिपातितमभूत्। भावे लिट्॥ ३१॥

विद्विषौ युगपदुत्थितवन्तौ
सागराविव विलङ्घितवेलौ ।
रूपिणी इव रजस्तमसी द्वे
सत्ववृत्तिरनघस्स जघान ॥ ३२ ॥

विद्विषाविति—सत्वे बले वृत्तिर्वर्तनं यस्य स सत्ववृत्तिः सत्वगुणवृत्तिश्च। अनघः अपहतपाप्मा। सः कृष्णः। विलङ्घितवेलौ। सागराविव। युगपत् उत्थितवन्तौ। विद्विषौ। रूपिणी मूर्ते। रजस्तमसी। द्वे इव। जघान। सत्वोद्रेकेण रजस्तमसोरभिभवो युक्त इति भावः। रूपिणी इवेत्यत्र 'ईदूदेद्द्विवचनं प्रगृह्यम्' (पा. सू. १-१-११) इति प्रगृह्यसंज्ञायां प्रकृतिभावः॥ ३२ ॥

अस्तमेवमनयद्यदुभास्वान्
तावुभौ जगदुपद्रवहेतू ।
पूर्वतश्च परतश्च भवन्तौ
दुर्ग्रहाविव दुरासददीप्तिः ॥ ३३ ॥

अस्तमिति--दुरासददीप्तिः दुर्धर्षतेजाः। यदुभास्वान् यदूनां भास्वानिव प्रकाशकः कृष्णः। जगदुपद्रवहेतू जगतामुपद्रवकारकौ। पूर्वतश्च परतश्च भवन्तौ पुरतः पश्चाद्वसन्तौ। तावुभौ। दुर्ग्रहौ पापग्रहाविव। एवं उक्तप्रकारेण। अस्तमनयत् नाशं प्रापयत्। यथा सूर्यः पुरतः पश्चाच्च स्वसन्निकृष्टौ वृष्टिप्रतिबन्धादिना जगद्बाधकौ पापग्रहौ अस्तमदर्शनं नयति तद्वदित्यर्थः॥ ३३ ॥

तस्य तावुभयतो निपतन्तौ
भग्नबाहुविटपायुधपुष्पौ ।
जग्मतुः पृथुकभावविहार-
क्षिप्यमाणयमलार्जुनकक्ष्याम् ॥ ३४ ॥

तस्येति—उभयतो निपतन्तौ कृष्णमुभयतः पतन्तौ ।

विटपतुल्या बाहवः पुष्पतुल्यान्यायुधानि च बाहुविटपायुधपुष्पाणि, भग्नानि तानि ययोस्तौ तथोक्तौ । विटपा इह शाखाः । "विटपः पल्लवे षिद्गे विस्तारे स्तम्बशाखयोः" इति विश्वः । तौ पौण्ड्रककाशिराजौ । तस्य कृष्णस्य । पृथुकभावविहारेण बाल्यक्रीडया क्षिप्यमाणयोः यमलार्जुनयोर्द्रुमयोः अर्जुनवृक्षयोः कक्ष्यां भङ्गीं साम्यं । जग्मतुः । वैजयन्त्यां "मिथुनं युगलं युग्मं" इत्युपक्रम्य [1]"मिथुनात्तद्वति त्रिषु" इति मिथुनादिशब्दानां विशेष्यलिङ्गतया धर्मिवाचकत्वस्यापि दर्शनादिह यमलशब्दस्य धर्मिपरता । तस्येत्यस्य उभयत इत्यनेनान्वये "उभसर्वतसोः कार्या" (वा १४४४) इति द्वितीया स्यात् । अतः कृष्णमित्यध्याहरेण तत्र योजना । तस्येत्यस्य तु [2] पृथग्भावेनान्वयः । सापेक्षत्वेऽपि गमकत्वात्समासः ॥ ३४ ॥

**नामचिह्नवसनाभरणाद्यैः**
**नाथसम्पदनुकारनिरूढैः ।**
**पौण्ड्रकस्थितिमवाप्य सृगालोऽ-**
**प्यन्वभूत्किल गतिं च तदीयाम् ॥ ३५ ॥**

[3] **नामेति**—सृगालोऽपि करवीरपुराधिपतिः सृगालनामा नृपोऽपि । नाथस्य कृष्णस्य सम्पदो विभूतेः अनुकारे अनुकरणे निरूढैः नियतैः, अनुकरणेन प्रसिद्धैरिति वा । नाम वासुदेव इति, चिह्नं श्रीवत्सादि, वसनं पीताम्बरं, आभरणं कौस्तुभादि, आदिशब्देन शङ्खचक्रादिग्रहणं. तैः । पौण्ड्रकस्य स्थितिं मर्यादां । अवाप्य । तदीयां गतिं च कृष्णायुधेन वधरूपां । अन्वभूत् । किलेति वार्तायाम् ॥ ॥ ३५ ॥

---

1 'मिथुनं तद्वति त्रिषु' इति मुद्रितयादवकोशपाठः. 2 'पृथुकभावेनान्वयः' इति पाठस्समीचीनः. 3 नामेति करवीर—घ. ट. ज.

विद्विषां विहितवीरगतीनां
द्वारकोपगममितैर्द्विरदाद्यैः ।
कौरवाध्युषितभाग[1]विभक्तेः
आहितप्रातिभरा क्षितिरासीत् ॥ ३६ ॥

**विद्विषामिति**—वीराणां गतिः शास्त्रीयं फलं वीरस्वर्गः, "शास्त्रीयं तु फलं गतिः" इति यादवः, विहिता वीरगतिः येषां तेषां पौण्ड्रकनरकादीनां । द्वारकोपगमितैः द्वारकां प्रापितैः, 'द्वितीया' (पा. सू. २–१–२४) इति योगविभागात्समासः । द्विरदाद्यैः गजतुरगादिभिः । क्षितिः भूः । कौरवैः दुर्योधनादिभिः अध्युषितस्य भागस्य हस्तिनापुरदेशस्य विभक्तेः विभागात्, सेनाबाहुल्येनावनमनात् , ल्यब्लोपे पञ्चमी । अवनमनमाशङ्क्य । आहितप्रतिभरा आसीत् उडुपादीनामेकत्र भारे मज्जनं स्यादिति यथा प्रदेशान्तरे प्रतिभारं निदधाति एवं भगवता निहितप्रतिभरा अभवदित्यर्थः । अनेन भारतसैन्यभारावतारणं भगवतः कृत्यशेष इति सूचितम् ॥ ३६ ॥

पातितेषु विमतेष्विति नाम
प्राप्य यादवपुरं परमेष्ठी ।
प्रेयसीभिरविभक्तरसाभिः
वीतरागसुभगो विजहार ॥ ३७ ॥

**पातितेष्विति**—वीतरागसुभगः विरक्तानां प्रियः । परमे स्थाने परमपदे तिष्ठतीति परमेष्ठी कृष्णः । इति इत्थम् । नाम प्रसिद्धौ । विमतेषु शत्रुषु । पातितेषु सत्सु । यादवपुरं द्वारकां । प्राप्य । अविभक्तरसाभिः एकरसाभिः, तुल्यानुरागाभिः । प्रेयसीभिस्सह । विजहार । व्यासङ्गान्तराभावादिति भावः ॥ ३७ ॥

---

[1] विभक्तैः—झ.

**जीवयुक्तमितरच्च विचित्रं**
**द्यूतमर्पितपणं विदधानः ।**
**भाविभारतमहाहवसिद्धेः**
**सूचनं वितनुते स्म शुभंयुः ॥ ३८ ॥**

जीवेति—विचित्रं बहुरूपं। जीवयुक्तं द्यूतं मेषकुक्कुटादिप्राणिद्यूतं। इतरत् अक्षादिद्यूतं च। अर्पितः निहितः पणः द्यूतेषु जेतृग्राह्यं धनं यस्मिन् कर्मणि तद्यथा तथा। विदधानः कुर्वाणः। शुभंयुः शुभान्वितः कृष्णः। भाविभारतमहाहवसिद्धेः भविष्यतो भरतवंश्यानां पाण्डवानां धार्तराष्ट्राणां महायुद्धस्य प्राप्तेः। सूचनं। वितनुते स्म। द्यूतमूलकतयैव तस्य भावित्वादिति भावः ॥ ३८ ॥

**तोषितत्रिनयनस्य नृशंसः**
**काशिराजतनयस्य पुरोधाः ।**
**[1] कल्पिताहुतिरजीजनदुग्रां**
**कालवह्निपदवीमिव कृत्याम् ॥ ३९ ॥**

तोषितेति—तोषितत्रिनयनस्य कृष्णेन काशिराजे निहते तद्वैरनिर्यातनाय आराधितशङ्करस्य। काशिराजतनयस्य। नृशंसः क्रूरः। पुरोधाः पुरोहितः। कल्पिताहुतिः—

दक्षिणाग्निं [2] परिचरन्ब्राह्मणैः सममृत्विजम् ।
अभिचारविधानेन स चाग्निः प्रमथैर्वृतः ॥

साधयिष्यति सङ्कल्पमब्रह्मण्ये प्रयोजितः॥ (श्रीभागवते—१०-६६-३०) इति शङ्करवरदानानुरोधेन काशिराजसुतस्य दक्षिणाग्नौ कृता-

---

[1] कल्पिताहुतिमजीजनदुग्रां—घ. [2] परिचरन् ब्राह्मणैस्समम्यगृत्विजम्—च. ज. ट.

हुतिस्सन् । कालवह्निपदवीं उपमानपूर्वपदो बहुव्रीहिः, प्रलयानलतुल्य-सरणिं तद्वल्लोकं दग्धुं क्षमामित्यर्थः । कृत्यां अभिचारकर्मभिः प्रतिपक्ष-नाशनायोत्थाप्या देवता कृत्या, तां । अजीजनत् जनयति स्म ॥ ३९ ॥

**साऽभिपत्य यदुवीरसकाशं**
**हेतिराजविभवेन हताशा ।**
**जन्मधामनि निजे नियमस्थं**
**जञ्जपूकमभिसृत्य जघान ॥ ४० ॥**

**सेति**—सा कृत्या । यदुवीरसकाशं कृष्णसमीपं । अभिपत्य प्राप्य । हेतिराजविभवेन कृष्णनिसृष्टस्यायुधराजस्य चक्रस्य प्रभावेन । हताशा प्रतिहताभिलाषा सती । निजे जन्मधामनि काशिराजसुतस्य अग्र्यगारे । नियमस्थं व्रतस्थं । जञ्जपूकं गर्हितमभिचारमन्त्रजपं कुर्वन्तं पुरोहितं । अभिसृत्य । जघान । असाध्यलक्ष्ये प्रेषणात् कुपिता कृत्या तमेव हतवतीत्यर्थः । जञ्जपूकमित्यत्र "लुपसदचरजप' (पा. सू. ३-१-२४) इत्यादिना भावगर्हायां यङि 'यजजपदशां यङः' (पा. सू. ३–२–१६६) इत्यूकप्रत्ययः ॥ ४० ॥

**निर्ददाह नगरीमथ काशीं**
**विस्फुलिङ्ग इव माधवदीप्तेः ।**
**यादवग्रसनकौतुकवत्या**
**कृत्यया स च रथाङ्गकृशानुः ॥ ४१ ॥**

**निर्ददाहेति**—अथ पुरोहितदहनानन्तरं । यादवस्य कृष्णस्य ग्रसने कौतुकवत्या सञ्जातकौतुकया । तदस्यास्तीत्यर्थे वर्तमानत्वं न विवक्षितं मतुपा, किन्तु तत्सम्बन्धमात्रम् । कृत्यया अभिचारदेवतया सह । माधवदीप्तेः कृष्णस्य मनःप्रज्वलनात्मककोपस्य, प्रतापस्य वा

वाह्निज्वालास्थानीयस्य। विस्फुलिङ्गः कण इव स्थितः, "त्रिषु स्फुलिङ्गोऽग्निकणः" इत्यमरः। सः प्रकृतः कृत्यामनुव्रजन्। रथाङ्गकृशानुः चक्रानलश्च। काशीं नगरीं काशिराजनिवासभूतां वाराणसीं पुरीं। निर्ददाह ॥ ४१ ॥

स्यन्दनद्विरदवाजिपदाति-
प्राज्यसौधपरिपाटिसमृद्ध्या।
चक्रवह्निविभवेन तदाऽभूत्
चन्द्रशेखरविलेपनभूमा ॥ ४२ ॥

स्यन्दनेति—तदा तस्मिन् समये। चक्रवह्निविभवेन चक्रानलप्रभावेन। स्यन्दनद्विरदवाजिपदातिप्राज्यसौधपरिपाटिसमृद्ध्या रथगजतुरगपदातीनां प्रचुरसौधपङ्क्तीनां च दाह्यानां समृद्ध्या हेतुना। चन्द्रशेखरस्य काश्यां सन्निहितस्य विश्वनाथस्य विलेपनं भस्म तस्य भूमा बाहुल्यं अभूत् ॥ ४२ ॥

क्षेत्रमेतदविमुक्तसमाख्यं
मुक्तियोग्यमुपसृष्टमयोग्यैः।
इत्यवेक्ष्य दहनेन तदर्हां
संस्क्रियामिव चकार सुदृष्टिः ॥ ४३ ॥

क्षेत्रमिति—सुदृष्टिः सुदर्शनं भगवच्चक्रं। अविमुक्तसमाख्यं अविमुक्तसंज्ञं। एतत् काशिक्षेत्रं। अयोग्यैः इहावासे अनुचितैरसुरप्रायैः काशिराजादिभिः। उपसृष्टं उपहतं। इत्यवेक्ष्य। दहनेन अग्निना। तदर्हां—

"खननाद्दहनादभिमर्शनाद्गोभि[1]राक्रमणात्तथा।
चतुर्भिश्शुध्यते भूमिः पञ्चमाच्चोपलेपनात् ॥

---

[1] राक्रमणात्। चतुर्भि–ट.

इति दाहस्य [1]भूतसंस्कारत्वश्रवणात् क्षेत्रोचिताम्। संस्क्रियां शुद्धिं। चकारेव ॥ ४३ ॥

**अप्रशान्तरुषमद्भुतदीप्तं**
**दग्धवैरिपुरमायुधराजम्।**
**निर्जराः प्रतिनिशामयमानाः**
**बिभ्यति स्म जगदुश्च जयोक्तिम् ॥ ४४ ॥**

अप्रशान्तेति—दग्धवैरिपुरम्। अथाप्यप्रशान्तरुषम्। अद्भुतदीप्तिं। आयुधराजं चक्रं। प्रतिनिशामयमानाः [2]पलायमाना एव परावृत्य पश्यन्तः। निर्जराः देवाः। बिभ्यति स्म रोषात् किं करिष्यतीति बिभ्युः। [3]कोपशान्तये, जयोक्तिं। जगदुश्च ॥ ४४ ॥

**दैवतैरपि चतुर्मुखमुख्यैः**
**दत्तसत्कृतिरसौ जितकाशी।**
**इष्टनिर्वहणनिर्वृतचित्तं**
**विष्टरश्रवस[4]मभ्युपपेदे ॥ ४५ ॥**

दैवतैरिति—चतुर्मुखमुख्यैः ब्रह्मादिभिः। दैवतैः देवैरपि। दत्तसत्कृतिः रोषोपशान्तये कृतपूजनः। जितकाशी। असौ चक्रराजः। इष्टस्य पौण्ड्रकादिवधस्य निर्वहणेन निर्वृतचित्तं सन्तुष्टमनसं। "निर्वृतिस्तु मनस्तोषः" इति यादवः। विष्टरश्रवसं कृष्णं। अभ्युपपेदे प्राप ॥ ४५ ॥

**आसुरप्रकृतिकेषु निरस्ते-**
**ष्वेवमेभिरनुपालितसख्यः।**

[1] 'भूमिसंस्कार' इति पाठः स्यात्   [2] पलायनोन्मुखा एव—**च. ज.**
[3] तत्कोप—**च.**   [4] मभ्यवपेदे—**घ. ज. ट.**

वानरो भुजबलेन बबाधे
दुर्मतिर्जगदिदं द्विविदाख्यः ॥ ४६ ॥

आसुरेति—आसुरी असुरसम्बन्धिनी प्रकृतिः स्वभावः येषां ते आसुरप्रकृतिकाः, शैषिकः कप्प्रत्ययः, तेषु पौण्ड्रकादिषु। एवं उक्तकारेण । निरस्तेषु सत्सु। एभिः। अनुपालितसख्यः अनुवर्तितमैत्रीकः । दुर्मतिः। द्विविदाख्यः वानरः । इदं जगत् भूलोकं। भुजबलेन। बबाधे ॥ ४६ ॥

भूधरानुदहरद्भुजशाली
प्रक्षिपंश्च नगराणि ममर्द ।
क्षोभयन् जलनिधीननुवेलं
प्लावयंश्च वसुधां प्रजहर्ष ॥ ४७ ॥

भूधरानिति—भुजाभ्यां शालितुं शीलमस्येति भुजशाली द्विविदः। भूधरानुदहरत् पर्वतानुद्धृतवान। [1] प्रक्षिपंश्च। नगराणि। ममर्द मृद्नाति स्म । किञ्च जलनिधीन् । [2] अनुवेलं वेलायां, विभक्त्यर्थेऽव्ययीभावः । क्षोभयन् उद्वेलयन्। तैः वसुधाम् । प्लावयन् सचयंश्च सन्। प्रजहर्ष प्रहृष्यति[3] स्म ॥ ४७ ॥

अन्यवीररहितामिव मत्वा
वारिराशिरशनामवलिम्पन् ।
आत्मनस्सदृशमाद्रियतैकं
धेनुकप्रमथनेन नियुद्धम् ॥ ४८ ॥

अन्येति—वारिराशिरशनां समुद्रवलां सर्वां भूमिम् । अन्यवीररहितां वीरान्तररहितामिव । मत्वा । अवलिम्पन्

---

[1] अथ पूर्वोक्तभूधराणामेव कर्मत्वं बोध्यमिति भाति । [2] अधिवेलं—च.
[3] हृष्यति—घ. च. ट.

स्वयमेकवीरं इति दृप्यन् द्विविदः । धेनुकप्रमथनन बलदेवेन । नियुद्धं बाहुयुद्धं । एकं । आत्मनः । सदृशं अनुरूपं । आद्रियत आद्दतवान् ॥ ४८ ॥

**एकदा हलधरस्य विहारे**
**संपतन्नमितचापलचेष्टः ।**
**द्वारकोपवनपादपभेदी**
**विश्वतः किलकिलां वितताान ॥ ४९ ॥**

**एकदेति**—एकदा । हलधरस्य बलदेवस्य । विहारे क्रीडादेशे उपवने, अधिकरणे घञ् । संपतन् सञ्चरन् । अमितचापला अपरिमितमर्कटलौल्या चेष्टा यस्य स तथोक्तः । द्वारकोपवनपादपभेदी द्वारकारामवृक्षान् भिन्दन् द्विविदः । विश्वतः किलकिलां वितताान सर्वत्र तत्र गत्वा किलकिलाशब्दं चकार ॥ ४९ ॥

**तालकेतुयुवतीर्विहरन्तीः**
**त्रासयन्मुखविकारविशेषैः ।**
**क्रीडनोपकरणानि विभिन्दन्**
**क्ष्वेडितानि विदधे विधिलूनः ॥ ५० ॥**

**तालेति**—विधिलूनः दैवेन आसन्नमृत्युर्द्विविदः । विहरन्तीः । तालकेतोः बलदेवस्य युवतीः । मुखविकारविशेषैः मर्कटजातिप्रसिद्धैः मुखविकारभेदैः । त्रासयन् उद्वेजयन् । [1] क्रीडनोपकरणानि मद्यचषकादीनि । विभिन्दंश्च सन् । क्ष्वेडितानि विदधे सिंहनादांश्चकार ॥ ॥ ५० ॥

---

[1] क्रीडितोप-घ. च. ज. ट.

तं प्रवृत्त[1]कपिकृत्यमदूरात्
बाधित[2]प्रतिबलो बलदेवः ।
जङ्गमस्फाटकभूधरकल्पो
रुक्मशैलरुचिरं निरुरोध ॥ ५१ ॥

तमिति—बाधितप्रतिबलः निहतप्रतिपक्षः । जङ्गमस्फटिकभूधरकल्पः चरिष्णुस्फटिकशैलतुल्यः । बलदेवः । अदूरात् समीपे । प्रवृत्तकपिकृत्यं । रुक्मशैलरुचिरं सुवर्णाचलसुन्दरं । तं द्विविदं । निरुरोध हननाय निरुद्धवान् ॥ ५१ ॥

वानरेण सुहृदा दनुजानां
यातुधानसमरप्रथितेन ।
प्रेषितां द्रुमशिलोच्चयवृष्टिं
निष्पिपेष मुसलेन हलास्त्रः ॥ ५२ ॥

वानरेणेति—दनुजानां असुराणां । सुहृदा । यातुधानानां रक्षसां रावणसम्बन्धिनां समरे युद्धे प्रसिद्धेन । वानरेण द्विविदेन । प्रेषितां निरोधानन्तरं प्रयुक्ताम् । द्रुमशिलोच्चयवृष्टिं तरूणां पर्वतानां च वर्षं । हलास्त्रः हलायुधः । मुसलेन । निष्पिपेष चूर्णीकृतवान् ॥
॥ ५२ ॥

आपतन्नपसरन्नपि भेजे
ग्राह्यतामिव च दुर्ग्रहतां च
अग्रतोऽभवदलक्ष्यत पश्चात्
अप्रतर्क्यरभसो हरिवीरः ॥ ५३ ॥

आपतन्निति—अप्रतर्क्यरभसः अचिन्तनीयवेगः । हरिवीरः वानरश्रेष्ठः । आपतन्नपसरन्नपि । ग्राह्यतामिव दुर्ग्रहतां च भेजे ।

---

1 कपिवृत्तमयोगात्—घ. ट. अ. दे. मु.   प्रतिभवो—ट.

उपर्यापतन् ग्राह्य इवासीत्, अपसरन् दुर्ग्रह आसीदित्यर्थः । अग्रतोऽभवत् पुरतस्सन्निहित आसीत् । पश्चात् अलक्ष्यत तदानीमेव पश्चाद्भागे दृष्ट इति वेगातिशयोक्तिः ॥ ५३ ॥

**तौ परस्परगवेषितरन्ध्रौ**
**कामपालकपिसैनिकपालौ ।**
**योजितोद्धतकरौ युयुधाते**
**दर्प[1]दारुणदिशागजसत्त्वौ ॥ ५४ ॥**

**ताविति**—परस्परस्य गवेषितमन्विष्टं रन्ध्रं अभिभवितुं छिद्रं याभ्यां तौ तथोक्तौ । दर्पेण दारुणयोः भीषणयोः दिशागजयोस्सत्त्वमिव [2]सत्वं ययोरिति तथोक्तौ । तौ कामपालकपिसैनिकपालौ बलदेवद्विविदौ । योजितोद्धतकरौ परस्परोपरिपातितदर्पकण्डूलहस्तौ सन्तौ । युयुधाते युध्येते स्म ॥ ५४ ॥

**तं प्रलम्बदमनः प्लवगेन्द्रं**
**विप्लुतं पुनरपि प्लवमानम् ।**
**कालपाशनिगृहीतमरातिं**
**कल्पमानमभवाय विवेद ॥ ५५ ॥**

**तमिति**—प्रलम्बस्य दमनः बलभद्रः । विप्लुतं बाहुयुद्धमवधूय अन्यत्रापसृतं । पुनरपि प्लवमानं पुनरप्युपर्यापतन्तं । अरातिं प्लवगेन्द्रं द्विविदं । कालपाशेन निगृहीतं । अभवाय मोक्षाय । कल्पमानं सम्पद्यमानं । विवेद अपसृत्यापि पुनः स्वस्योपर्यापतनेन आसन्नमृत्युः स्वायुधेन वधलाभात्पुनः जन्मरहितं च मेन इत्यर्थः । अभवायेति [3]'क्लृपि सम्पद्यमाने च' (वा १४५९) इति चतुर्थी ॥ ५५ ॥

---

[1] दारुणदृशौ गज **झ.** [2] सत्वमनयो—**च.** [3] क्लृपेस्संपद्यमाने—**च.**

सव्यदक्षिण[1]परिक्रमणाभ्यां
द्रागलातमयचक्रनिरीक्ष्यः ।
आततान हलपाणिमदूरा-
दग्निसालवलयस्थमिवारिः ॥ ५६ ॥

सव्येति—द्राक् झडिति । सव्यदक्षिणाभ्यां परिक्रमणाभ्यां। अलातमयचक्रनिरीक्ष्यः अलातरूपमण्डलवद्दृश्यः । अरिः बलदेवस्य द्वेषी द्विविदः । अदूरात् समीपे । हलपाणिं बलदेवं । अग्निसालवलयस्थमिव आततान अग्निप्राकारमण्डलस्थितमिव चकार ॥ ५६ ॥

तं गृहीतगरुडानिलवेगं
सर्वतो युगपदेव समीक्ष्य ।
लाङ्गली जलधिलङ्घनदक्षं
लाघवेन लघयन् विचचार ॥ ५७ ॥

तमिति—गृहीतः गरुडानिलयोर्वेगो येन तं। जलधिलङ्घने दक्षं समर्थं, रावणयुद्धे कृतजलधिलङ्घनं । तं द्विविदं । युगपदेव । सर्वतस्समीक्ष्य परितो दृष्ट्वा । लाघवेन शैघ्र्येण । लघयन् लघूकुर्वन् सन्। विचचार ततोऽप्यधिकेन [2] वेगेन बभ्राम ।

"लघुर्मनोज्ञनिस्सारागुरुषु प्रथितो लघु ।
कृष्णागुरुणि [3]शैघ्र्ये च" इति विश्वः ॥ ५७ ॥

अन्धकारमिव तं प्रतिरुन्धन्
अर्यमेव मुसली निजदीप्त्या ।
दिङ्मुखान्यकलुषाणि वितन्वन्
विश्वदृष्टिविभवाय बभूव ॥ ५८ ॥

अन्धकारमिति—अर्यमा सूर्य इव । निजदीप्त्या। दिङ्मु-

1 परिभ्रमणाभ्याम्—झ. 2 वेगेन परितो बभ्राम—च. 3 शीघ्रे च स्पृक्कायां च स्मृत। लघुरिति—च.

सानि । अकलुषाणि वितन्वन् प्रसन्नानि कुर्वन् । तत्र निमित्तं अन्धकार-मिव । तं द्विविदं । प्रतिरुन्धन् । मुसली बलदेवः । विश्वदृष्टिविभवाय विश्वस्यावलोकनसमृद्ध्यै । कल्पते स्म । सर्वेषां प्रेक्षणीयो बभूवेत्यर्थः । सूर्योऽपि विश्वस्यावलोकनसमृद्धिं करोतीति भावः । बलदेवपक्षे लक्षणया दीप्तिः पराक्रमः ॥ ५८ ॥

घूर्णिताकुलितकौरवधाम्ना
लाङ्गलेन ललितोद्धतलीलः ।
यूथनाथमवरुध्य कपीनां
मौलिघातमवधीन्मुसलेन ॥ ५९ ॥

घूर्णितेति—ललिता रुचिरा उद्धता दृप्ता च लीला यस्य स बलः । घूर्णितं भ्रमितं आकुलितं विह्स्तीकृतजनं कौरवाणां धाम [1]स्थानं येन तेन । लाङ्गलेन । कपीनां । यूथस्य [2]नाथं । अवरुध्य यथा नापसरति तथा निरुध्य । मुसलेन । मौलिघातमवधीत् मौलौ घातः प्रहारो यस्मिन् कर्मणि तद्यथा भवति तथा हन्ति स्म । पुरा स्वयंवर-प्रवृत्तां दुर्योधनसुतां प्रसह्य हृतवन्तं साम्बं कृष्णतनयं गृहीत्वा कौरवा बबन्धुः । ततो बलदेवस्तन्मोक्षाय सान्त्वमुक्त्वा तदश्रृण्वत्सु तेषु तेषां नगरमेव गङ्गायां पिपातयिषुः लाङ्गलेन चकर्षेति कथा घूर्णिते-त्यादिविशेषणेन सूचिता ॥ ५९ ॥

वज्रपाणिमहिताद्भुतभूम्ना
वानरेण निहतेन स रामः ।
व्याचकार विनताभयदाता
पूर्वरामचरितं पुनरुक्तम् ॥ ६० ॥

वज्रपाणीति—विनताभयदाता प्रणतानामभयप्रदाता । स

---

[1] स्थानं हस्तिनापुरं येन—च. ज. ट.   [2] नाथं उपरुध्य—ट.

रामः । वज्रपाणेः इन्द्रस्य महितः श्लाघनीयः अद्भुतः आश्चर्यः भूमा महिमा पराक्रमः यस्य तेन । निहतेन । वानरेण । पूर्वरामस्य रघुनाथस्य चरितं । पुनरुक्तं । व्याचकार । रघुनाथोऽपि 'सकृदेव प्रपन्नाय' (श्रीवाल्मीकिरामा. युद्ध. १८-३३) इत्यादिप्रतिज्ञाना-द्विनताभयदाता, शक्रसूनुतया तच्छ्लाघनीय[1]पराक्रमस्य वालिनो हन्ता चेति [2]तच्चरितमात्रे स्थितं स्फुटीकृतवानित्यर्थः ॥ ६० ॥

धर्ममर्मभिदि दैवविपाकात्
उद्धृते द्विविद[3]नामनि शल्ये ।
रेवतीरमणरेचितखेदा
नाकिनश्च मुनयश्च ननन्दुः ॥ ६१ ॥

धर्मेति—नाकिनश्च मुनयश्च देवाश्च मुनयश्च । धर्ममर्मभिदि [4]धर्मप्राणस्थानस्य भेदके । द्विविदनामनि । शल्ये शरे । दैवविपाकात् भाग्यस्य फलोन्मुख्यात् । उद्धृते सति । रेवतीरमणरेचितखेदाः शल्योद्धारकेण बलदेवेन रिक्तीकृतखेदास्सन्तः ननन्दुः ॥ ६१ ॥

त्रासितेषु विबुधेषु तदग्रे
पीतवन्तममृतं बलभद्रः ।
प्रापयत्प्लवगमुख्यमितीव
स्वर्गिभिस्सह सुधाशनभावम् ॥ ६२ ॥

त्रासितेष्विति—बलभद्रः । विबुधेषु । त्रासितेषु सत्सु । तदग्रे तेभ्यः पूर्वं । अमृतं । पीतवन्तं । प्लवगमुख्यं वानरश्रेष्ठं । इति इत्थं ।

---

[1] सूनुतया श्लाघनीय—घ. [2] तच्चरितमात्र अवसितं—घ. ज. ट. "अत्र तच्चरितमात्रेडितं" इति पाठः स्यादिति भाति । [3] नामविशल्ये—घ. ट. [4] धर्मस्य प्राणस्थानभेदके—घ. ज. ट.

इवशब्दो वाक्यालङ्कारे । स्वर्गिभिः देवैस्सह । सुधाशनभावं अमृताशनत्वं । प्रापयत् ॥ ६२ ॥

भूतले हलधराहितगुप्तौ
सारभूतसुभटग्रहणेन ।
उञ्छवृत्तिरुदरम्भरिरासीत्
तादृशेन तपसैव कृतान्तः ॥ ६३ ॥

**भूतल इति**—हलधरेण बलदेवेन आहिता गुप्तिर्यस्य तस्मिन् । भूतले । उञ्छः खलादिनिपतितपरित्यक्तधान्यकणग्रहणं वृत्तिर्यस्य सः । कृतान्तः । तादृशेन उञ्छवृत्तिरूपेण । तपसैव करणेन । सारभूतस्य [1]सारत्वमुत्कर्षं प्राप्तस्य सुभटस्य वीरस्य द्विविदस्य ग्रहणेन । उदरम्भरिः उदरपूरकः । आसीत् । "फलेग्रहिरात्मंभरिश्च" (पा. सू. ३–२–२६) इति सूत्रे चकारादुदरम्भरिशब्दस्साधुः । अत एव "ज्योत्स्नाकरम्भमुदरम्भरयश्चकोराः" (अनर्घराघवे–२ अङ्क ४२ श्लो.) इत्यन्यत्रापि प्रयोगः । प्राग्बलदेवहतैः प्रलम्बादिभिः उञ्छवृत्त्येव नातितृप्तो मृत्युः द्विविदवधेनात्यन्ततृप्तो बभूवेत्यर्थः । उछञ्वृत्तिर्हालिकैः कृषीवलैः सज्जीकृते धान्यखलादौ कर्तव्येति तदाशयेन हलधरेत्यादि भूतलविशेषणम् ॥ ६३ ॥

एवमीषदवरोपितभारां
भावयन् भुवमतोषयदार्यान् ।
पूर्वदेवजनितानभिमानघ्नन्
पूर्वजेन सहितो यदुनाथः ॥ ६४ ॥

**एवमिति**—पूर्वजेन बलदेवेन । सहितः । यदूनां नाथः कृष्णः । एवं उक्तप्रकारेण । पूर्वदेवैः जनितान् उत्पादितान् प्रागसुरवंश्यान्

1 'सारमुत्कर्षं' इति पाठः स्यात्.

क्षत्रियादिरूपेणोत्पन्नान्। अभिनिघ्नन्। अत एव भुवं। ईषदवरोपितभारां। भावयन् कुर्वंश्च सन्। आर्यान् पूज्यान् देवब्राह्मणादीन्। अतोषयत् ॥ ६४ ॥

भार्गवादिभिरबाधितभूम्नां
निर्ममेष्वपि निकारपराणाम्।
सौभहंसडिभिकप्रभृतीनां
सूदनैरलघयच्च धरित्रीम् ॥ ६५ ॥

भार्गवेति—भार्गवादिभिः परशुरामाद्यैः। अबाधितभूम्नां अनुपप्लुततेजसां। निर्ममेषु मुनिष्वपि। निकारपराणां पराभवनिरतानां। "निकारस्तु तिरस्कारः" इति यादवः। सौभः साल्वः, हंस-[1]डिभिकौ ब्रह्मदत्तस्य राज्ञः पुत्रौ, प्रभृतिना निकुम्भादयो गृह्यन्ते, तेषां। सूदनैः हिंसनैश्च। धरित्रीं। अलघयत् लघूकृतवान्। पुरा भार्गवः साल्वेन युध्यमानः—

"राम राम महाबाहो भृगूणां कीर्तिवर्धन।
[2]त्यज शस्त्राणि चास्त्राणि न त्वं सौभं वधिष्यसि॥
चक्रहस्तो गदापाणिर्दीनानामभयङ्करः।
युधि प्रद्युम्नसाम्बाभ्यां सहितोऽमुं वधिष्यति॥"

इति गायन्तीनां दिव्यकुमारीणां वचश्श्रुत्वा युद्धान्निवृत्त इत्यारण्यपर्वणि कथा। तत्प्राधान्येन भार्गवेत्यादिविशेषणम्। [1]हंसडिम्भिकौ मृगयार्थं प्रस्थितौ पुष्करे समाधिनिष्ठं दुर्वाससं सशिष्यं दृष्ट्वा चतुर्थाश्रमोपालम्भरूपाणि परुषवचनान्यभिधाय तस्य कौपीनकमण्डलुशिक्य-दण्डादीन्यपि चिच्छिदतुरिति हरिवंशे कथा। तत्प्राधान्येन निर्ममेष्वित्यादिविशेषणम् ॥ ६५ ॥

---

[1] डिम्भकौ—ज. [2] त्यजास्त्राणि महोग्राणि—घ. ज. ट.

उग्रसेनविनिवेशितराज्यां
उन्नमय्य यदुवंशविभूतिम् ।
तस्य दिग्विजयकौतुकमाद्यः
सप्तलोकतिलको विततान ॥ ६६ ॥

**उग्रसेनेति**—सप्तलोकतिलकः सप्तानां लोकानां तिलकवदलङ्कारभूतः । आद्यः आदिभवः कृष्णः । उग्रसेने विनिवेशितराज्यां । यदुवंशस्य विभूतिं सम्पदं । उन्नमय्य उन्नतां कृत्वा । तस्य उग्रसेनस्य । दिग्विजयकौतुकमाततान दिग्विजयः कर्तव्य इत्यभिलाषमुत्पादितवान् ॥ ६६ ॥

तन्नियोगमथ शेखरयित्वा
स्वप्रशासनवशंवदविश्वः ।
यावदुक्तनियताखिलवृत्तीन्
यादवानुपनिनाय सुधर्माम् ॥ ६७ ॥

**तन्नियोगमिति**—अथ तदभिलाषोत्पादनानन्तरं । स्वप्रशासनस्य वशंवदं वशवर्ति विश्वं यस्य स कृष्णः । तस्योग्रसेनस्य नियोगं । शेखरयित्वा शेखरं कृत्वा, शिरसा गृहीत्वेति यावत् । अस्य तन्नियोगानुपालनस्य स्वेच्छायत्तत्वं [1] प्रथयितुं स्वप्रशासनेत्यादि विशेषणम् । यावदुक्तं स्वोक्तमात्रे नियता निश्चिता अखिला वृत्तिर्येषां तान् सर्वप्रकारवशंवदान् । यादवान् । सुधर्मां । उपनिनाय प्रापयामास । " प्रियवशे वदः " (पा. सू. ३–२–३८) इति खशि " खित्यनव्ययस्य " (पा. सू. ६–३–६६) इति मुमागमे च वशंवदशब्दः साधुः । ' यावदवधारणे ' (पा. सू. २–१–८) इत्यव्ययीभाव[2]समासान्तस्य

[1] प्रकाशयितुं–घ. [2] ' समासस्य ' इति पाठस्समीचीनः.

यावदुक्तशब्दस्य नियतशब्देन '[1] सुप्सुपा' इति समासः । [2] सुधर्माशब्दस्याकारान्तत्वं तत्र तत्र समर्थितम् ॥ ६७ ॥

आत्मकल्पितधृतेरथ राज्ञः
सन्निधौ सचिवपीठनिविष्टः ।
मन्त्रणाय महतो यदुमुख्यान्
सम्मुखान् प्रतिननन्द मुकुन्दः ॥ ६८ ॥

आत्मेति—अथ । मुकुन्दः । आत्मकल्पितधृतेः स्वकृतधारणस्य, स्वेनैव रक्ष्यमाणस्य । राज्ञः उग्रसेनस्य । सन्निधौ । सचिवपीठे निविष्टस्सन् । मन्त्रणाय सम्मुखान् मन्त्रणायाभिमुखीभूय स्थितान् । महतो यदुमुख्यान् अक्रूरसात्यकिप्रभृतीन् । प्रतिननन्द तत्तद्गुणवर्णनेन प्रत्येकं श्लाघितवान् ॥ ६८ ॥

अभजत नरपालमुग्रसेनं
बहुमनुते स्म यदूंस्तथाऽपि तुङ्गः ।
क्वचिदभिलपने विभक्तिशक्त्या
स्वगुणविभूतिगुणीभवन्निवैकः ॥ ६९ ॥

अभजेति—एकः सकललोकमुख्यः । उग्रसेनं । नरपालं । अभजत असेवत । अन्यान् यदून् । बहुमनुते स्म बहूकृतवान् । अथापि । तुङ्गः सर्वोन्नतः । [3]अत्रोपमानमाह—क्वचिदिति । क्वचिदभिलपने कस्मिंश्चिद्व्यवहारे । [4] स्वगुणस्य स्वोपसर्जनस्य स्वविभूतीनां स्वसम्पदां च गुणीभवन् उपसर्जनीभवन् । एकः मुख्यो राजेव । यथा स्वय मुख्यो राजा राज्ञः पुरुषः राज्ञो गृहमित्यादिव्यवहारे शेषत्ववाचि-

[1] 'सह सुपा' (पा. सू. २-१-४) इत्यत्र 'सुपा' इति योगविभागेन तस्येदृशार्थकत्वं बोध्यम्. [2] 'डाबुभाभ्यां' (प्रा. सू. ४-१-१३) इत्यनेन पाक्षिको डाप् [3] अत्रोपमामाह—घ. ज. [4] अत्र 'विभक्तिशक्त्या' इत्यनेन भाव्यमिति भाति.

षष्ठीविभक्त्या पुरुषादीन् प्रति गुणत्वेन प्रतीयमानोऽपि वस्तुतस्तुङ्ग एव तद्वदित्यर्थः ॥ ६९ ॥

अधिगुणहरिवंशवीरसङ्गात्
अपचितवासवसङ्गमाभिलाषा ।
अतिशयरुचिरां वहन्त्यभिख्यां
अचकमतेव सभा तदाधिराज्यम् ॥ ७० ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयनाम्नि
महाकाव्ये एकविंशस्सर्गः.

---

अधिगुणेति—अधिगुणस्य अधिकगुणाढ्यस्य हरिवंशवीरस्य [1]चन्द्रवंशश्रेष्ठस्य कृष्णस्य [2]सङ्गात्। अतिशयेन रुचिरां रम्यां। अभिख्यां शोभां। वहन्ती। सभा देवसभा। अपचितवासवसङ्गमाभिलाषा क्षीणशक्रसङ्गमेच्छा सती। तदाधिराज्यं कृष्णस्यैवमधिराजभावमवलम्ब्य अवस्थानं। अचकमतेव ऐच्छदिव। कमेर्लुङि [3]णेरभावपक्षे "कमेरुपसङ्ख्यानम्" (वा. १८३९) इति चङ्। सौभाग्यातिशयात्तस्या अप्येव कामना [4]संभाव्यत इत्युत्प्रेक्षा। "सदा तदाधिराज्यं" इति पाठे सभेति विशेष्याध्याहारः। तदा आधिराज्यमात्रस्य सिद्धत्वेन सदा तदनुवृत्तेरेव काम्यत्वात्। अर्धसमवृत्तेषु पुष्पिताग्रेति वृत्तमिदम् ॥ ७० ॥

इति श्रीमद्भरद्वाजकुलतिलक-विश्वजिद्याजि-श्रीरङ्गराजाध्वरिवरसूनुना
अप्पय्यदीक्षितेन विरचिते यादवाभ्युदयव्याख्याने
एकविंशस्सर्गः.

1 'यमानिलेन्द्रचन्द्रार्क' इति कोशाद्धरिशब्दस्य चन्द्रपरत्वमिति भावः. 2 सङ्गात् सङ्गादेव-घ. ज. ट. अयं वासवसंगमाभिलाषापचयेऽपि हेतुर्भवितुमर्हतीति भाति 3 णेरभावे कमे-घ. ट. 4 संपद्यत-घ. ट.

**अथ देवानिवाहूतान्नरदेवानभाषत।**
**देवदानवसामान्यदैवतं देवकीसुतः ॥ १ ॥**

**अथेति**—अथ यदूनामुपवेशानन्तरं। देवदानवसामान्य[1]दैवतं सर्वपूज्यत्वात् क्वचिदपि पक्षपातविरहाच्च सुरासुराणां [2] साधारणदैवं। देवकीसुतः कृष्णः। आहूतान्। देवानिव स्थितान्। नरदेवान् मनुष्याणां प्रभून् यादवान्। प्रत्यभाषत। [3] "देवस्सुरे घने राज्ञि" इति विश्वः ॥ १ ॥

**एष वः क्ष्मापतिश्शास्ति विधातेव प्रजापतीन्।**
**महेन्द्र इव धर्मेण सुधर्मामास्थितस्स्वयम् ॥ २ ॥**

**एष इति**—महेन्द्र इव। धर्मेण सुकृतेन न्यायेन वा। सुधर्मां। आस्थितः आरूढः। एष क्ष्मापतिः उग्रसेनः। प्रजापतीन् दक्षादीन्। विधाता चतुर्मुख इव। वः युष्मान्। शास्ति नियुङ्क्ते ॥ २ ॥

**शेखरीकृतभूभारश्शेषत्वेन विभोस्स्थितः।**
**वेदयत्ययमार्योऽपि मित्रभूतानमित्रजित् ॥ ३ ॥**

**शेखरीकृतेति**—शेखरीकृतः भूभारः येन स तथोक्तः; आपीडमिवानायासेन भूभारं वहन्नित्यर्थः। विभोः उग्रसेनस्य। शेषत्वेन उपसर्जनत्वेन। स्थितः। अमित्रजित् शत्रूणां जेता। अयमार्यः ममाग्रजोऽपि। मित्रभूतान् मित्रत्वं प्राप्तान्। भवतः। वेदयति वक्ष्यमाणमर्थं

---

[1] दैवतं देवपूज्यत्वात्—घ. ट. [2] सामान्यदैवं-घ. ट. [3] 'सुरे घने' इति मुद्रितकोशे पाठः.

ज्ञापयति। उग्रसेननियोगरूपं बलदेवस्यापि सम्मतमर्थमहं वदामीति श्लोकद्वयार्थः। अनन्तावतारतया शिरसा धारणात् [1] आभरणीकृतभूभारः विभोर्नारायणस्य शेषत्वेन स्थित इति च शेखरीकृतेत्यादिविशेषणद्वयस्य हृद्गतोऽर्थः ॥ ३ ॥

**वयं भवन्तो ये चान्ये महान्तस्सर्व एव ते।**
**विश्वगुप्तौ जगत्कर्त्रा विनियुक्ता विभूतयः ॥ ४ ॥**

**वयमिति**—वयं [2] भवन्तः, ये चान्ये महान्तः क्षत्रियाः, ते सर्व एव। जगत्कर्त्रा नारायणेन। विश्वगुप्तौ जगतो रक्षणे। विनियुक्ताः। विभूतयः तस्यैव शक्तेरंशाः। राज्ञां भगवद्विभूतित्वमुक्तं

"एते सर्वे प्रवृत्तस्य स्थितौ विष्णोर्महात्मनः।
विभूतिभूता राजानस्तथाऽन्ये मुनिसत्तम ॥"

इति। तेषां सृष्टिश्च जगद्रक्षणार्थेत्युक्तं [3] मानवीये धर्मशास्त्रे—

"स्वे स्वे धर्मे निविष्टानां सर्वेषामनुपूर्वशः।
वर्णनामाश्रमाणां च राजा सृष्टोऽभिरक्षिता" ॥(मनु–९–३५)

इति ॥ ४ ॥

**तदस्माभिरवस्थेयं धर्मवर्त्मनि शाश्वते।**
**बिभ्यद्भिरनघादेशाद्वज्रादिव समुद्यतात् ॥ ५ ॥**

**तदिति**—तत् तस्मात्। अस्माभिः। अनघस्य अपहतपाप्मनो विष्णोः आदेशात् राजभिः प्रजापालनं भयादिति नियोगात्। समुद्यतात्। वज्रादिव। बिभ्यद्भिस्सद्भिः। शाश्वते नित्यासिद्धे। धर्म[4]वर्त्मनि राजधर्ममार्गे। [5]अवस्थेयं स्थातव्यम् ॥ ५ ॥

---

[1] तदाभरणीकृत–च. छ. [2] भवन्तो महान्तो ये चान्ये क्षत्रियाः–च. छ.
[3] मानवे धर्म–छ. [4] वर्त्मनि धर्म–घ. छ. ट. [5] अवस्थेयं अवस्थातव्यम्–घ. ट.

द्विषन्तः ख्यातनामानो नामशेषास्तथाऽप्यसौ ।
समुद्रवसना विष्वक्तामसैरव[1]कुण्ठिता ॥ ६ ॥

द्विषन्त इति—ख्यातनामानो द्विषन्तः जरासन्धादयः । नामशेषाः नाममात्रावशेषा जाताः । तथाऽप्यसौ । समुद्रवसना भूमिः । विष्वक् समन्ततः । तामसैः तमो[2]गुणाविष्टैः क्षुद्रैः । अवकुण्ठिता सञ्छादिता । अतस्तेषामपि निग्रहं विना धर्मो न प्रतितिष्ठतीति भावः ॥ ६ ॥

अंसकस्तूरिका भूमिर्भवतां बाहुशालिनाम् ।
अजुगुप्सापदं न स्यादसद्वृत्तिमलीमसा ॥ ७ ॥

अंसेति—बाहुभिश्शालन्त इति बाहुशालिनस्तेषामतिशयित-भुजबलानां । भवतां । अंसकस्तूरिका अंसस्य कस्तूरिकेव अनायासवाह्या । भूमिः । असद्वृत्तिमलीमसा दुष्टचरितेन मलिना चेत् । अजुगुप्सापदं न स्यात्, न स्यादेवेत्यर्थः । कस्तूरिकाऽपि स्वेदादिमलिना जुगुप्सितेति भावः ॥ ७ ॥

शङ्कितप्रचयश्शेषश्शत्रूणां शुष्मणामिव ।
आयतौ सुखमिच्छद्भिर्न युक्तः क्षन्तुमीश्वरैः ॥ ८ ॥

शङ्कितेति—शत्रूणां । शुष्मणां अग्नीनामिव । शङ्कितप्रचयः सन्दिग्धोपचयः । शेषः । आयतौ आगामिकाले । सुखमिच्छद्भिः । ईश्वरैः शक्तैः । क्षन्तुं । न युक्तः । उपेक्षितश्शत्रुशेषो वह्निशेष इव प्रचयं लब्ध्वा बाधकस्स्यादिति भावः ॥ ८ ॥

अतस्त्राणाय साधूनां दुष्कृतां दमनं क्षमम् ।
कडङ्करीयरोधो हि कलमा[3]त्सेधकारणम् ॥ ९ ॥

अत इति—अतः उक्तहेतुभ्यः । साधूनां । त्राणाय ।

---

[1] गुण्ठिता—ग्र. मु. [2] गुणविशिष्टैः—घ. [3] त्सेकका—झ.

दुष्कृतां दुष्टकर्मकृतां। दमनं। क्षमं योग्यम्। "योग्यशक्तहिताः क्षमाः" इति यादवः। कडङ्करीयाणां सस्योप[1]घातुकानां वृषभादीनां रोधः। कलमानां शालिभेदानां उत्सेधे वृद्धौ कारणं हि। एवमेव दुष्टनिग्रहस्साधूनां वृद्धौ कारणमिति भावः। [2]'क्रीडमोधयति केडः कडंदने' इति धातुः। कडं करोतीति कडङ्करः बुसं, तच्च माषमुद्गादिकाष्ठं, तुच्छधान्यमित्यपरे, तदपि भक्षयन्ति ये ते कडङ्करीयाः। "कडङ्करदक्षिणाच्छ च" (पा. सू. ५-१-६९) इति अर्हार्थे छप्रत्ययः। केचित् 'कटे वर्षाप्रावरणयोः (भ्वादि २९४) इति धातोः व्युत्पाद्य कटङ्करीया इति वर्गादियुक्तमाहुः ॥९॥

पुष्यतां [3]पाण्डरं छत्त्रं पुण्डरीकमिव श्रियः।
धर्मोऽधर्मश्च नान्योऽस्ति [4]रक्षणोपेक्षणे भुवः ॥१०॥

पुष्यतामिति—श्रियः। पुण्डरीकं सिताम्भोजमिव स्थितं। पाण्डरं। छत्रं। पुष्यतां उपचिन्वतां, धारयतां राज्ञां। धर्मः, [5]अधर्मो वा। अन्यः। नास्ति! [6]कौ तर्हि तेषां धर्माधर्मौ? भुवो रक्षणोपेक्षणे। रक्षणं धर्मः, उपेक्षणं च अधर्म इत्यर्थः ॥१०॥

पूर्वपूर्वनरेन्द्राणामुच्छिष्टमपि मेदिनी।
सोमपीथिनयाद्ग्राह्या स्वधर्माध्वरमास्थितैः ॥११॥

ति—मेदिनी। पूर्व[7]पूर्वेषां नरेन्द्राणां। उच्छिष्टमपि, तैर्भुक्तोज्झितत्वादिति भावः। सोमपीथिनयात् सोमस्य पीथः पानं, औणा-

---

[1] घातक—च. [2] "कडति माद्यतीति कडः 'कड मदे' इति धातुः" इति शुद्धपाठेनात्र भाव्यमिति भाति। अमरसुधायां "गृणाति 'गृ शब्दे' (क्र्यादि) गिरति 'गॄ निगरणे' (तुदादि) वा अच्। कडस्य गरः। 'कडंगर' (प्रा. सू. ५-१-६९) इति निर्देशान्मुक्। यद्वा कडति 'कड मदे' (भ्वादि) क्विप्, कड् च तदङ्गं च कडङ्गं राति। 'रा दाने' (अदादि) कः" इति कडङ्करशब्दव्युत्पत्तिर्दर्शिता. [3] पाण्डुरं—झ. [4] रक्षणोपेक्षणाद्भुवः—ग्र. दे मु. [5] अधर्मश्च अन्यो—च. छ. [6] तौ हि तेषां धर्माधर्मौ यौ भुवो—घ. ट. [7] पूर्वेषामपि नरे—छ.

दिकस्थक् प्रत्ययः । 'घुमास्था' (पा. सू. ६-४-६६) इत्यादिना ईत्वम्, स एषामस्तीति सोमपीथिनः, तेषां न्यायात् । स्वधर्माध्वरमास्थितैः अध्वरतुल्यराजधर्मारूढैर्नृपैः । ग्राह्या । यथा एकस्मिन्नेव सोमरसे 'वषट्कर्तुः प्रथमभक्षः' इत्यादिश्रुत्युक्तक्रमेण वषट्कर्त्रादिभिरुच्छिष्टीकृत एव सोमः अध्वर्य्वादिभिः गृह्यते, "न सोमेनोच्छिष्टा भवन्ति" इति श्रुतेः, तथा राज्ञां स्वधर्मत्वात् पूर्वपूर्वराजभुक्ताऽपि ग्राह्येत्यर्थः । अनेन नृपतिसहस्रोच्छिष्टसेवित्वरूपभूपतित्वविडम्बनपरिहारः कृतः ॥ ११ ॥

एतावता राजधर्माणामवश्यानुपालनीयत्वमुक्तम् । इदानीं तदवगमोपायमाह—

अविवेकविभावर्यां धर्ममार्गमपङ्किलम् ।
द्रष्टुं दीप इव न्यस्तो नायकेन नयागमः ॥ १२ ॥

अविवेकेति—अविवेक एव विभावरी रात्रिः तस्याम् । अपङ्किलं पङ्कवद्भिन्नं, अधर्मासम्भिन्नम् । धर्ममार्गं राजधर्मसरणिम् । द्रष्टुम् । दीप इव । नायकेन नाथेन सर्वविद्याप्रवर्तकेन भगवता । नयागमो न्यस्तः नीतिशास्त्रं निहितम्[1] । तेन राजधर्मानवगच्छतीति भावः । [2]पिच्छादित्वादिलचि पङ्किलशब्दः ॥ १२ ॥

अवलम्ब्य जगद्धातुर्हस्तमागमविग्रहम् ।
स्वयमुद्धरतात्मानं स्वैरं पातालपातिनम् ॥ १३ ॥

अवलम्ब्येति—जगद्धातुर्जगतां पोषकस्य भगवतः । आगमविग्रहं नयागमरूपं । हस्तं अवलम्ब्य । स्वैरं पातालपातिनं अयन्त्रितं यथा तथा पाताले पतन्तम् । आत्मानं स्वयमेवोद्धरत । नीतिशास्त्रानालोचने राजान उन्मार्गवर्तनस्वाभाव्यात् अधः पतेयुरिति भावः ॥ १३ ॥

---

[1] विहितं—घ. [2] लोमादिपामादिपिच्छादिभ्यः शनेलचः (पा. सू. ५-२-१००) इति सूत्रेणेति भावः.

**व्यसनासारवेगानां वारणं न [1]प्रकल्पते ।**
**उपदेशैरनार्याणामुत्तानच्छत्रसन्निभैः ॥ १४ ॥**

**व्यसनेति**—व्यसनानि विपदः आसाराः धारासम्पाता इव, तद्वेगानां । उत्तानच्छत्रसन्निभैः । अनार्याणां असताम् । उपदेशैः । वारणं न प्रकल्पते निरोधो न भवति । अतस्सद्भ्य एव नीतिर्यथा-वदवगन्तव्येति भावः ॥ १४ ॥

**पण्डितप्रहतेनैव सत्पथेन सदोदिताः ।**
**विषमेषु स्खलन्तोऽपि न दुर्गतिमवाप्स्यथ ॥ १५ ॥**

**पण्डितेति**—पण्डितप्रहतेन प्राज्ञैः क्षुण्णेन । सत्पथेनैव । [2]सदोदिताः उद्भूतगमनाः, गच्छन्तः । विषमेषु सङ्कटेषु । स्खल-न्तोऽपि । दुर्गतिं दारिद्र्यं, नरकं वा । नावाप्स्यथ । "दुर्गति-र्नरके नैस्स्व्ये" [3]इति विश्वः । यथा प्रहतेन महापथेन अभिमतदेशं गच्छन्तो निम्नोन्नतेषु शैलादिप्रदेशेषु कदाचित् स्खलन्तोऽपि तदन्यं दुर्देशं न प्राप्नुवन्ति तद्वदिति भावः । उदिता इति इणो भावे निष्ठा । 'प्रादिभ्यो धातुजस्य' (वा. १३६०) इति बहुव्रीहिः ॥ १५ ॥

नीतिशास्त्रानुसारेण किमिदानीं कर्तव्यं तत्राह—

**[4]भूपरिक्रमणादन्या भवतामतिभास्वताम् ।**
**तमसामिव शत्रूणां निरासे कीदृशी क्रिया ॥ १६ ॥**

**भूपरिक्रमणादिति**—अतिभास्वतां अत्यर्थतेजस्विनाम् । भवताम् । तमसामिव । शत्रूणाम् । निरासे । भूपरिक्रमणादन्या ।

[1] प्रकल्प्यते—**ग्र. दे. मु.** [2] उत्कृष्टं इतं गमनं येषामिति विग्रह इति भावः. [3] इति यादवः—**घ.** मुद्रितयादवकोशे त्वेतस्यादर्शनाद्विश्वकोशे दर्शनाच्च विश्व इत्येवात्र साधुपाठ इति भाति. [4] भूपरिग्रहणादन्या—**ड्र.**

कदृशी । क्रिया । यथा तमसां निरासाय [1] सूर्योऽभ्रपरिक्रमणं करोति एवं शत्रूणां निरासाय तदेव [2] कर्तव्यमिति भवद्भिर्दिग्विजयार्थं प्रस्थातव्यमिति भावः ॥ १६ ॥

किं दिग्विजये अनुकूला अपि जेतव्याः ? नेत्याह—

**जिगीषूणां च युष्माकं न जेतव्यपदे स्थितम् ।**
**कौरवैरनुकूलानां विपाकैरिव कर्मणाम् ॥ १७ ॥**

**जिगीषूणामिति**—कौरवैः पाण्डवादिभिः । अनुकूलानां । कर्मणां विपाकैः फलोन्मुखावस्थाभिरिव । जिगीषूणां जेतुमिच्छूनाम् । युष्माकम् । जेतव्यपदे न स्थितम् । अनुकूलकर्मविपाकवदेव तेषां सहकारित्वादिति भावः । चकार उक्तार्थावधारणार्थः ॥ १७ ॥

प्रस्थाने च कालक्षेपो न कर्तव्य इति त्वरयति—

**अवरोध्यास्स्वयं दक्षैरक्षिपद्भिरनेहसम् ।**
**करिणां कर्णडोलाभिः कम्पिता इव सम्पदः ॥ १८ ॥**

**अवरोध्या इति**—दक्षैः चतुरैः कर्तृभिः । अनेहसं कालम् । अक्षिपद्भिस्साद्भिः । करिणाम् । कर्णा एव डोलास्ताभिः । कम्पिता इव स्थिताः । सम्पदः । [3] स्वयमेवावरोध्याः स्वप्रयत्नेनावरुध्य स्थापनीयाः । गजादिपरिष्कृतानां राजसम्पदां स्वतश्चाञ्चल्ये गजकर्णडोलाभिः [4] कम्पनहेतुरुत्प्रेक्ष्यते । अनेन भवतां काल[5]क्षेपे रिपवो बहवो मिलित्वा भवतः प्रथममभिभवेयुः । अतस्त्वरितव्यं भवद्भिरिति दर्शितम् ॥ १८ ॥

---

[1] सूर्यः परिक्रमणं—घ. [2] कर्तव्यमिति भावः—छ. [3] स्वयमवरोध्याः—छ. [4] कम्पहेतु—घ. ट. [5] क्षेपे परे वा बहवो—छ.

एवं प्रस्थाने[1] त्वरामुत्पाद्य प्रस्थितैरपि नीतिमार्गविहितै[2]र्भवितव्यमित्याह—

**नीतिपद्धतिरक्षोभ्या भवद्भिरधिगम्यताम् ।**
**नियता स्वर्गसौधस्य निश्श्रेणिरिव शाश्वती ॥ १९ ॥**

**नीतीति**—अक्षोभ्या परैः क्षोभयितुमशक्या । स्वर्गसौधस्य । नियता तत्प्राप्त्यवश्यम्भाववती । शाश्वती नित्यसिद्धा । निश्श्रेणिः आधिरोहिणीव स्थिता । नीतिपद्धतिः । भवद्भिः । आधिगम्यतां प्राप्यताम् ॥ १९ ॥

अथ नीतिशास्त्रसिद्धानि कर्तव्यान्युपदिशति—

**खलत्यागस्सुहृत्प्राप्तिरितीदं कवचद्वयम् ।**
**वहध्वं मन्त्रदेहस्य भेदं परिजिहीर्षवः ॥ २० ॥**

**खलेति**—खलत्यागः दुर्जनपरिहारः । सुहृत्प्राप्तिः मित्रलाभः । इतीदं । कवचद्वयं, कर्म । मन्त्रदेहस्य मन्त्रस्यैव शरीरस्य । भेदं । परिजिहीर्षवः परिहर्तुमिच्छवस्सन्तः । वहध्वम् । वहतेः स्वरितेत्त्वात्कर्त्रभिप्राये आत्मनेपदम् । मन्त्रस्य भेदो द्विविधः प्रकाशनं विपर्यासश्च । तत्र प्रकाशनपरिहाराय खलत्यागः । विपर्यासपरिहाराय सुहृल्लाभः, "नैकस्तु चिन्तयेदर्थं" इति मन्त्रविचारस्य सहृदयसापेक्षत्वस्मरणात् ॥ २० ॥

**धातूनामिव कोपेषु प्रकृतीनामचेतसाम् ।**
**पातुमर्हथ पर्याप्तं प्रसादनरसायनम् ॥ २१ ॥**

**धातूनामिति**—अचेतसां अविवेकानाम् । प्रकृतीनां पौरादिप्रजानाम् । धातूनां वातपित्तश्लेष्मणामिव । कोपेषु सत्सु । पर्याप्तं

---

[1] अतः प्रस्थाने—घ. ट.  [2] र्भाव्य—च. छ.

समग्रम् । प्रसादनं सान्त्वनमेव रसायनं औषधविशेषम् । पातुम् । अर्हथ । [1] यद्यप्यविवेकादस्थानेऽपि प्रजाः प्रकुप्येयुः, [2] तथाऽपि ताः प्रसाद्य वशीकुरुतेत्यर्थः ।

सदाऽनुरक्तप्रकृतिः प्रजापालनतत्परः ।
विनीतात्मा हि नृपतिर्भूयसीं श्रियमश्नुते ॥
(कामन्दकीयनीतौ १–२४)

इति प्रजानुरागस्य सम्पदभिवृद्धिहेतुत्वस्मरणादिति भावः । "पौरामात्यादिलिङ्गेषु स्वभावे प्रकृतिर्भगे" इति यादवः ॥ २१ ॥

अनीतिमदिरां त्यक्त्वा लोभादिविषदूषिताम् ।
अगदङ्कारमादद्ध्वं प्रज्ञामृतमनुत्तमम्[3] ॥ २२ ॥

अनीतीति—लोभादयः लोभक्रोधप्रभृतय एव विषाणि [4] अनुजीविविद्वेषसम्पादनेन विपत्तिहेतुत्वात्, तैर्दूषिताम् । अनीतिमदिरां क्षोभकारित्वात् ताम् । त्यक्त्वा । अगदः क्रियते अनेनेति अगदङ्कारम्, 'कारे सत्यागदस्य' (पा. सू. ६-३-७०) इति मुमागमः, लोभादिविषरोगापहारकं । उत्तमं नास्ति यस्मात्तदनुत्तमं । प्रज्ञां विवेकमेव अमृतं । आदद्ध्वं गृह्णीध्वम् ॥ २२ ॥

लुलिताशेषसन्मार्गं लोकवेदविरोधिनम् ।
परित्यजत दुर्मानं पाषण्डमतजीवितम् ॥ २३ ॥

लुलितेति—लुलिताशेषसन्मार्गं भिन्ननिखिल[5]साधुमार्गम् । लोकवेदविरोधिनं जनवैरस्यहेतुत्वात् शास्त्रविगीतत्वाच्च लोकवेदयो-

---

[1] यद्यप्यविवेकावस्थानेऽपि—घ. ट. यद्यविवेकादस्थाने—च. छ. [2] तदाऽपि—च. [3] ज्ञानामृतमनुत्तमम्—ग्र. दे. मु. [4] अनुजीविद्वेषसम्पादनेन तैर्दूषिताम्—घ. ट. [5] लुप्तनिखिल—छ.

विरुद्धम् । अत एव पाषण्डानां वेदबाह्यलिङ्गधारिणां बौद्धादीनां मतस्य क्षणिकत्वादिसिद्धान्तस्य जीवितं [1] लुलितेत्यादिविशेषणसाम्यात् जीवितसदृशम् । दुर्मानं दुरहङ्कारम् । परित्यजत पाषण्डमतवदेव परिहरत ॥ २३ ॥

**गुणशैलाग्रमारोप्य शनैरात्मानमात्मना ।**
**नित्यशङ्कितविभ्रंशं निध्यायत शुभंयवः ॥ २४ ॥**

**गुणेति**—हे शुभंयवः शुभान्विताः ! [2] आत्मानम् । गुणः आनृशंस्यादिः जनावर्जनहेतुः स एव शैलः, तस्याग्रं परां काष्ठां । आत्मना स्वयमेव । आरोप्य । नित्यशङ्कितविभ्रंशम् । निध्यायत पश्यत । स्वगुणगरिम्णा प्रतिष्ठितमपि राजानं राज्यश्रीमदादयो दोषाः पुनः [3] विपर्यासयन्तीति तान् [4] सर्वथा परिहरतेत्यर्थः ॥ २४ ॥

**त्रिविधानि विधेयानि सम्पत्सु च विपत्सु च ।**
**[6] करणानीव मित्राणि गोपायत गुणग्रहात् ॥ २५ ॥**

**त्रिविधानीति**—सम्पत्सु च । विपत्सु च । विधेयानि वशंवदानि । त्रिविधानि कृत्रिमसहजप्राकृतरूपेण त्रिप्रकाराणि । मित्राणि । करणानीव वाङ्मनःकायरूपेण त्रिविधानि करणानीव । गुणग्रहात्—

दूरादेवाभिगमनं [7] स्पष्टार्थं हृदयानुगौरवात् ।
सत्कृत्य प्रदानं च त्रिविधो मित्रसङ्ग्रहः ॥
(का. नी. ४–७१)

---

1 जीवितलुलितेत्यादिविशेषणसाम्यात्तत्सदृशं–छ. 2 आत्मगुणः–**घ. ट.** 3 विपर्यासयन्ति तान्–**च.** 4 सर्वदा–**च. छ.** 5 परिहरतेति भावः–**छ.** 6 कारणानि–**घ. झ. ट.** 7 ‘ स्पष्टार्थां हृदयानुगा । वाक्सत्कृत्य ’ इति शुद्धपाठेनात्र भाव्यम्.

इति वर्णितानां मित्रसङ्ग्राहकगुणानां ग्रहणात् । गोपायत यथा न श्लथीभवन्ति तथा संरक्षत । करणपक्षे करणविकारविरोधिनां दयादि-गुणानां ग्रहणादिति योज्यम् । समुच्चयोपमेयम् । तेन करणानि मित्राणि च गोपायतेत्यर्थः । विपन्निवारणादिनोपकृतः कृत्रिमस्सुहृत् । मातृ-ष्वसेयमातुलसुतादिस्सहजः । द्विविधोपायं [1]विना प्रकृत्या स्निग्धन् [2]प्राकृत इति भेदः ॥ २५ ॥

अप्रशान्तेषु विस्रम्भमतिशङ्कां सुहृत्सु च ।
नीतिसन्दंशिना ऋद्धेस्समुद्धरत कण्टकौ ॥ २६ ॥

अप्रशान्तेति—अप्रशान्तेषु व्युत्थितेषु । विस्रम्भं विश्वासम् । सुहृत्सु । अतिशङ्कां अत्यन्ताविश्वासं च, इतीमौ । ऋद्धेः ऐश्वर्यस्य । कण्टकौ परिपन्थिनौ, तावेव कण्टकौ तीक्ष्णवृक्षावयवौ । नीतिरेव सन्दंशी अन्तःप्रविष्टकण्टकाद्युद्धारक आयुधविशेषः, तेन । समुद्धरत अतो नीतिमालोच्य तदुभयं वर्जयतेत्यर्थः ॥

न विश्वसेदविश्वस्तं विश्वस्तं नातिविश्वसेत् ।
विश्वस्ताद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥

इति नीतिशास्त्रात् सुहृत्स्वपि प्रकृतिपरीक्षणार्थमीषदविश्वासो युक्तः । [3]अतोऽर्थमविश्वास एव तेषां व्युत्थानहेतुतया बाधक इत्याशयेन अति-शङ्कामित्युक्तम् ॥ २६ ॥

सपञ्चाङ्गेन मन्त्रेण नीतिमाहात्म्यनिर्विषाम् ।
नियच्छत निजाङ्गेषु भुजङ्गीमिव सम्पदम् ॥ २७ ॥

सपञ्चाङ्गेनेति—पञ्चानामङ्गानां समाहारः पञ्चाङ्गम् ।

---

[1] विनोपकृत्या—छ. [2] याज्ञवल्क्यस्मृतावाचाराध्याये ३४५ तमे 'अरिर्मित्रं' इति श्लोके तु विज्ञानेश्वरव्याख्यायां 'प्राकृतमित्रमेकान्तरितदेशाधिपतिः' इत्युक्तं दृश्यते ।
[3] अत्र 'अत्यर्थमविश्वास एव' इति पाठस्समीचीन इति भाति.

तच्च कामन्दकेन दर्शितम्—

सहायास्साधनोपाया विभागो देशकालयोः।

विपत्तेश्च [1] प्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते (का. नी. ११-५६)

इति, तत्सहितेन। मन्त्रेण सम्मन्त्रणेन। नीतिमाहात्म्यनिर्विषां विषशब्देन सम्पदां मदहेतुत्वादिदोषा लक्ष्यन्ते, अतश्च नीतिमार्गानुसरणमहिम्ना तादृशदोषराहितामित्यर्थः। सम्पदं विभूतिं। निजाङ्गेषु—

स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशबलं सुहृत्।

[2] परस्परोपसपंन्नं (संसक्तं) सप्ताङ्गं राज्यमुच्यते (का. नी. ४-१)

इत्युक्तरूपेषु स्वाङ्गेषु। भुजङ्गीमिव। नियच्छत निबध्नत। यथा पन्नगीं गरुडभावनादिमहिम्ना निर्विषीकृत्य पञ्चाङ्गन्याससहितेन मन्त्रेण स्वाङ्गेषु करचरणादिषु आहितुण्डिका बध्नन्ति तद्वदित्यर्थः। एतेन स्वाङ्गनिबद्ध-पन्नगीवत्सम्पदस्सदैवापायपर्यवसायित्वशङ्कया तत्प्रतीकारकयोर्नीति-मन्त्रयोः सन्ततमवहितैर्भाव्यमिति सूचितम्॥ २७॥

**अवधीरयताधर्म्यामर्थकामैकसाधिकाम्।**
**नृशंसप्रेयसीं नीतिं नारीहृदयदारुणाम्॥ २८॥**

**अवधीरयतेति**—अधर्म्यां धर्मादपेतां। अर्थकामैकसाधिकां अर्थकाममात्रोपपादिनीं। नारीहृदयवद्दारुणां भयङ्करीं। नृशंसप्रेयसीं क्रूराणां प्रियतमां। नीतिं। अवधीरयत तिरस्कुरुतेत्यर्थः॥ २८॥

**प्रमादसप्तकं त्यक्त्वा प्रबुध्योपायसप्तकम्।**
**अङ्गसप्तकसम्पत्त्या जयत द्वीपसप्तकम्॥ २९॥**

**प्रमादेति**—

मृगयाऽक्षास्स्त्रियः पानं वाक्पारुष्यार्थदूषणे।
दण्डपारुष्यमित्येतन्महाव्यसनसप्तकम्॥

[1] प्रतीकारो 'मन्त्रः पञ्चाङ्ग उच्यते' इति मुद्रितपाठः. [2] 'परस्परोपकारीदं सप्ताङ्ग' इति मुद्रिते पाठः.

[1]इत्येतानि महाव्यसनानि प्रमादाः, तेषां सप्तकं त्यक्त्वा,

सामदानं च भेदश्च दण्डश्चेति चतुष्टयम् ।
मायोपेक्षेन्द्रजालं च सप्तोपायाः प्रकीर्तिताः ॥

(का. नी. १७-३)

इत्युक्तानामुपायानां सप्तकं । प्रबुध्य । स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलरूपस्य अङ्गसप्तकस्य सम्पत्त्या । जम्बू[2]प्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्कराख्यद्वीपसप्तकं । जयत । एतावत्परिकरसम्पन्नस्सप्तापि द्वीपान् जेतुं शक्नोतीति भावः ॥ २९ ॥

**अरातिगणकूटस्थानादौ जयत दुर्जयान् ।**
**अपदक्रोधलोभादीनशेषार्थविरोधिनः ॥ ३० ॥**

अरातीति—अरातिगणकूटस्थान् शत्रुवर्गस्य मूल[3]कन्दान् बाह्यशत्रुवर्गस्य मूलकन्दान्, बाह्यशत्रूणामपि तन्मूलकत्वादिति भावः । अशेषार्थविरोधिनः सर्वपुरुषार्थोप[4]घातुकान् । दुर्जयान् कृच्छ्रेण जेतव्यान् । अपदक्रोधलोभादीन् अस्थाने विजृम्भमाणान् क्रोधलोभप्रभृतीन् । आदौ बाह्यशत्रुजयात्प्रागेव । जयत । आदिशब्देन—

कामः क्रोधस्तथा लोभो हर्षो मानो मदस्तथा ।
षड्वर्गमुत्सृजेदेनमस्मिंस्त्यक्ते [5]सुखी भवेत् ॥ (का नी. १-५५)

इति परिगणिता आन्तरशत्रवो गृह्यन्ते ॥ ३० ॥

**आन्तरेण बलेनैव द्विविधां वहत क्षमाम् ।**
**यस्य सत्त्वेऽप्यसत्त्वेऽपि गतार्थं षड्विधं बलम् ॥ ३१ ॥**

आन्तरेणेति—आन्तरेण बलेन प्रज्ञाबलेनैव । द्विविधां

---

[1] इत्युक्तानि–छ. [2] प्लक्षकुशक्रौञ्चशाल्मलिशाक–छ. [3] कन्दान् बाह्यशत्रूणामपि–घ. ट. [4] घातकान्–छ. [5] 'सुखी नृपः' इति मुद्रितपाठः.

वसुधा क्षान्तिरिति द्विप्रकारां । क्षमां । वहत । प्रज्ञया आलोच्य उचितविषयेषु क्षान्तेरवलम्बेन वसुधा स्वयमेव स्ववशे भवतीत्यर्थः । प्रज्ञाबलमेव स्तौति—यस्येति। यस्य आन्तरबलस्य। सत्त्वेऽपि। असत्त्वेऽपि। षड्विधं बलं [1]"मौलं भृतं श्रेणिसुहृद्द्विषदाटविकं बलम्" (का. नी. १६-६) इत्युक्तं षट्प्रकारं बाह्यं बलं । गतार्थं अपगत-प्रयोजनं, प्रज्ञाबलस्य सत्त्वे तेनैव कार्यसिद्धेः तदसत्त्वे अनेनापि कार्यासिद्धेरुभयथाऽपि निष्फलमित्यर्थः । गर्भदासादि स्थायिबलं मौलम्। वेतनाऽऽवर्जितं भृतम्। जनपदेभ्य आनीतं श्रेणिबलम् । सुहृत्प्रेषितं सुहृद्बलम् । केनचित् द्विषता सह युद्धे द्विषदन्तरेण प्रेषितं द्विषद्बलम् । आटविकं किरातादिबलमिति विवेकः ॥ ३१ ॥

**न शापो नाभिचरणं न वह्निर्न विषं तथा ।**
**नास्त्राणि न च शस्त्राणि यथा तीक्ष्णतमा क्षमा ॥३२॥**

**न शाप इति**—यथा। क्षमा । तीक्ष्णतमा अत्यन्तशीघ्र-कारिणी। तथा। शापः। न, तीक्ष्णतम इत्यनुषङ्गः। एवं तत्तल्लिङ्ग-वचनविपरिणामेन नाभिचरणमित्यादि[2]वाक्येष्वपि तदनुषङ्गः। शापः वाचा निग्रहः । अभिचरणं मारणकर्मानुष्ठानं । एवं क्षमा उचित-विषये । उचितविषये क्षमाप्रशंसायां श्लोकस्य तात्पर्यम् ॥ ३२ ॥

---

[1] 'मौलभुक्तं' इति मुद्रितपाठः। तत्र च रामनारायणविद्यारत्नजगन्मोहन-तर्कालङ्कारश्रीकामाख्यनाथतर्कवागीशैः प्रणीतायां टीकायां 'मौलभुक्तं' इत्येकं बलं प्रथमं गणयित्वा बलपञ्चकमिति विवृतं दृश्यते। तत्तु अत्रत्यमूलव्याख्यापरिशीलनेन मौल-भृतरूपप्रथमद्वितीयबलपरिगणनप्रतीत्या तर्कवागीशोपज्ञमेव तत्पाठकल्पनं तद्विवरणं च स्यादिति भाति. [2] वाक्येष्वेतदनुषङ्गः च—छ.

अथ क्षमोचितं विषयमाह—

**विपक्षजातिभाजोऽपि क्षुद्राननपकुर्वतः।**
**सुपर्ण इव भूनागानुपेक्षध्वं तरस्विनः॥ ३३॥**

**विपक्षेति**—हे तरस्विनः बलिनः! विपक्षजातिभाजोऽपि [1] शत्रुसामान्यक्रमभाजोऽपि। अनपकुर्वतः। क्षुद्रान्। उपेक्षध्वम्। सुपर्णः भूनागानिव। भूनागा अपि नागजातीयत्वात् विपक्षजातिभाजः विपक्षसामान्यभाजः। "जातिस्सामान्यजन्मनोः" इति यादवः, अथाप्यपकर्तुमशक्ताः क्षुद्रा इति यथा गरुडस्तानुपेक्षते तद्वदुपेक्षध्व-मित्यर्थः॥ ३३॥

तेष्वपि क्षमायामशक्तत्वप्रतीतिस्स्यादित्यत आह—

**कृपणान् क्षममाणोऽपि महासत्वो न दैन्यभाक्।**
**मृगेन्द्र इव भिन्नेभः [2] स्वदंष्ट्रालेहिनः खगान्॥ ३४॥**

**कृपणानिति**—कृपणान् क्षुद्रान्। क्षममाणः क्षाम्यन्नपि। महासत्वः महाबलः। न दैन्यभाक् दैन्यख्यातिभाक् न भवति। कथमिव? भिन्नेभः विदलितगजः। स्वदंष्ट्रालेहिनः गजकुम्भलग्नरक्त-मांसलोभात् स्व[3]दंष्ट्रां लिहतः। खगान् मशकमक्षिकादिपक्षिणः। क्षममाणो मृगेन्द्र इव॥ ३४॥

**देवानतिशयानानां दैत्यदानवरक्षसाम्।**
**विनिपातनिदानानि स्वय[4]मन्वीक्ष्य सुख्यत॥ ३५॥**

**देवानिति**—देवान्। बलसमृद्ध्या अतिशयानानां। दैत्य-दानवरक्षसां, दैत्या दानवाश्च दितिदनुभ्यामसुरमातृभ्यामुत्पन्ना असुर-

[1] शत्रुषु क्रमभाजोऽपि—**घ. ट.** [2] स्वदंष्ट्रां लिहतः खगान्—**ग्र. दे. मु.**
[3] दंष्ट्रामालिहतः—**च.** [4] निदानानि निपातस्य स्वय—**ग्र. दे. मु.**

विशेषाः, रक्षांसि राक्षसाः, तेषां। विनिपातस्य वधस्य निदानानि कारणानि। स्वयं। अन्वेक्ष्य विचार्य। सुख्यत। तेषां बलशालिनामपि दुर्नयेनैव विनिपात इति ज्ञात्वा धृतिमवलम्ब्य सुखिनो भवतेत्यर्थः। सुखशब्दस्य कण्ड्वादिपाठाद्यक्प्रत्यये सुख्यतेति साधुः ॥ ३५ ॥

**यशःप्राणहारान् घोरान् व्यामोहविषपादपान्।**
**समीक्षाशाणघृष्टेन द्यत शास्त्रेण शस्त्रिणः ॥ ३६ ॥**

[1]**यश इति**—हे शस्त्रिणः। यशःप्राणहारन् यशसामेव प्राणनामपहारकान्। अत एव घोरान् [2]भीषणान्। व्यामोहान् अनवबोधानेव विषपादपान्। समीक्षा बुद्धिरेव शाणः तस्मिन् घृष्टेन। शास्त्रेण नीतिशास्त्रेण। द्यत खण्डयत। 'दो अवखण्डने' (दिवादि-११४८) इति धातुर्दैवादिकः। अत्र यशःप्राणहारानित्यादिरूपकेण शास्त्राणां शस्त्रत्वरूपणं गम्यत इत्येकदेशविवर्तिरूपकालङ्कारः ॥

[3]**श्रुतशालिभिरुक्तानि दुरुत्सेकज्वरातुराः।**
**अप्रियाण्यपि पथ्यानि [4]मा जिहासत जातुचित् ॥ ३७॥**

**श्रुशालिभिरिति**—श्रुतानि शास्त्राणि शलन्ति गच्छन्तीति श्रुतशालिनः, "श्रुतं शास्त्रावधृतयोः" इत्यमरः, तैः। उक्तानि। अप्रियाणि तत्कालकटून्यपि। पथ्यानि पथोऽनपेतानि, परिणामहितानि च। जातुचित्। मा जिहासत मा त्युक्तुमिच्छत। माङ्समानार्थः केवलमाशब्दोऽयमिति लोट्। दुरुत्सेकज्वरातुरा इति श्रोतॄणां राजपदप्रयुक्ताहङ्कारापनयेनेन दिग्विजयप्रस्थानत्वरासम्पादनाय सम्बोधनम्, दुर्गर्व

---

1 यश इति। यशःप्राण—घ. ट. 2 भीषणान् संमोहान्—घ. ट. 3 श्रुतशीलिभिरुक्तानि—ग. दे. मु. 4 मा जिहास्त च जातुचित्—घ. ट.

एव ज्वरः तेन व्याधिता इत्यर्थः। "विकृतो व्याधितोऽपटुः। आतुरोऽभ्यमितोऽभ्यान्तः" इत्यमरः ॥ ३७ ॥

**कलिसन्धिसमाघ्रातं त्यजन्तः कर्म कर्बुरम्।**
**सदसत्प्रेक्षणे स्यात सर्वतो दत्तदृष्टयः ॥ ३८ ॥**

**कलीति**—कलिर्विग्रहः, सन्धिः सन्धानं, तदुभयसमाघ्रातं। अत एव कर्बुरं शबलं कर्म त्यजन्तः यत्र सन्धिः तत्रैव पुनर्विग्रहः पुनस्सन्धिरित्येवं रूपं सदा विश्वासयोग्यं कर्म त्यजन्तस्सन्तः। सदसत्प्रेक्षणे एते सन्तो विश्वसनीयाः एते त्वसन्त इति विचारे विषये। सर्वतो दत्तदृष्टयः, सर्वतः प्रणिहितचारचक्षुषः, अवहितचेतसो वा। स्यात भवतेत्यर्थः। अनेन इदानीं कलिद्वापरसन्धिना समाघ्रातं, अत एव पुण्यपापशबलं कर्म त्यजन्तः [1]कलिमोहाभावाय भजनीयसदसत्पुरुषविचारे सावधाना भवतेत्यर्थान्तरमपि ध्वन्यत[2] ॥ ३८ ॥

**पल्लवोपमकौमारे प्रसूनोपमयौवने।**
**स्थिरं फलमुपादद्ध्वं जङ्गमे जीवितद्रुमे ॥ ३९ ॥**

**पल्लवेति**—पल्लवोपमकौमारे प्रवालसदृशबाल्ये। प्रसूनोपमयौवने पुष्पसदृशतारुण्ये। जङ्गमे सञ्चारिणि। जीवित एव द्रुमे। स्थिरं फलं स्वधर्मपरि[3]पालनरूपं। उपादद्ध्वं गृह्णीध्वम्। जीवितद्रुम इत्यत्र विशेषणयोरुपमासत्त्वेऽपि प्रसिद्धद्रुमव्यतिरेकार्थजङ्गमविशेषणानुरोधाद्रूपकादरः[4] ॥ ३९ ॥

**मिषतां मीलतां वाऽपि द्रुतं धावति जीविते।**
**अनघं तनुत क्षेम्यमान्तरं धनमक्षयम् ॥ ४० ॥**

**मिषतामिति**—मिषतां मीलतां वाऽपि द्रुतं धावति जनानां

---

1 कलिदोषाभिभवाय—च. 2 प्रतीयते. 3 पालनसुकृतरूपं—घ. ट. 4 रूपकालंकारः—घ. ट.

निमीलनोन्मीलनक्षणमात्रमप्यनवस्थाय[1] धावति। जीविते, विद्यमान एवेति शेषः। अनघं रम्यं। अक्षयं स्थिरफलं। क्षेम्यं क्षेमप्रयोजनकं श्रेयस्करं। आन्तरं घनं स्वधर्मपरिपालनसुकृतं। तनुत आर्जयत। मिषतां मीलतामित्यनादरे [2]षष्ठी। क्षेम्यमिति तदस्य प्रयोजनमित्यर्थे "स्वर्गादिभ्यो यद्वक्तव्यः" इति (वा ३०७४) यत्प्रत्ययः॥ ४०॥

**अकालनियतोच्छ्रायमातिसूर्येन्दुपावकम्।**
**क्षात्त्रं क्षपितजाड्यं वः क्षमं तेजस्समेधितुम्॥ ४१॥**

**अकालेति**—कालनियतो न भवतीत्यकालनियतः सदैकरूप-उच्छ्रयो यस्य तत्तथोक्तं। अत एवातिसूर्येन्दुपावकं सूर्येन्दुपावकानतिक्रान्तं। [3]पावकतेजोऽप्यसमये अभिभूयत इति नियतकालमिति भावः। क्षपितं जाड्यं अरीणां स्तब्धत्वं येन तत् क्षपितजाड्यं [4]"जडो जाड्ये च निर्बुद्धौ स्तब्धेऽनालोच्यकारिणि" इति यादवः। क्षपितशैत्यमित्यपि तेजोन्तरसाधर्म्यं प्रतयिते, एवंभूतं। वः युष्माकं। क्षात्त्रं। तेजः। [5]समेधितुं क्षमं वर्धितुं शक्तम्। वर्धिष्णु भवतीति स्तवनेन तान् प्रोत्साहयति। यद्वा ण्यर्थान्तर्भावेण समेधयितुं योग्यमित्यर्थः। "[6]योग्यशक्ताहिताः क्षमाः" इति यादवः॥ ४१॥

**अ सम्प्लावितसप्ताब्धिर त्रिलोकीतमोपहा।**
**अ दिक्सूतसुधालिप्तिर्यस्य कीर्तिस्स किंप्रभुः॥ ४२॥**

**अ सम्प्लावितेति**—यस्य। [7]कीर्तिः। अ सम्प्लावितसप्ताब्धिः स्वधावल्येन सम्मेलितसप्तसागरसमाहारा न भवति। अ

[1] अनवस्थया–घ. ट. [2] 'षष्ठी चानादरे' (पा. सू. २-३-३८) इति सूत्रेणेति भावः. [3] पावकतेजोऽव्यापन्नसमये–घ. ट. [4] 'जडो जाल्मश्च' इति मुद्रितकोशे पाठः. [5] समेधितुं शक्तं–घ. ट. [6] 'योग्ययुक्ताहिताः' इति मुद्रितकोशे पाठः. [7] कीर्तिः संप्लावित–छ. ट.

त्रिलोकीतमोपहा त्रिलोक्यास्तमसोऽपहन्त्री च न भवति। अ दिक्सूत-सुधालिप्तिः दिक्षूत्पादितसुधालेपा च न भवति। सः। किंप्रभुः कुत्सितप्रभुः। अकारस्सर्वत्रासमस्त एव नञ्समानार्थो द्रष्टव्यः। समासे तु विधेयस्य न्यग्भावेनाविमृष्टविधेयांशदोषप्रसङ्गात्॥ ४२॥

**सुधां सुमनसो यस्य स्वादयन्ति यशोमयीम्।**
**स राजा वृद्धिमाप्नोति क्षीयते न च कालतः॥॥ ४३॥**

**सुधामिति**—यस्य। यशोमयीं कीर्तिरूपां। सुधां। सुमनसः पण्डिता देवाश्च। स्वादयन्ति लिहन्ति। स्वादनं कीर्तावुपचारात्सतृष्ण-माकर्णनम्। सः। राजा नृपतिश्चन्द्रश्च। वृद्धिमाप्नोति। कालतो न क्षीयते च। यावत्कीर्तिभावित्वात्[1] कीर्तिमदभ्युदयस्येति भावः। "क्षीयते न च कालतः" इति चन्द्रादाधिक्यरूपो व्यतिरेकः। क्षीयत इति कर्मकर्तरीत्युपपादितं प्राक्॥ ४३॥

**त्यक्तसान्त्वेन कठिनान्विद्रावयत तेजसा।**
**अयसस्तापसेकाभ्यामवस्था कीदृशी भवेत्॥ ४४॥**

**त्यक्तेति**—कठिनान् अवशंवदान्। रिपून्। त्यक्तसान्त्वेन त्यक्तसामवादेन। तेजसा पराक्रमेण। विद्रावयत [2]विद्रावितान् कुरुत, वशीकुरुतेति यावत्। अयसः स्वतः कठिनस्य। तापसेकाभ्यां। कीदृश्य-वस्था। भवेत्। यूयमेव विमृशतेति भावः। तस्य हि तापेन विद्रुतता, सेकेन काठिन्यतादवस्थ्यं च दृष्टम्। अयं न्याय इहापि योज्य इति तात्पर्यम्॥ ४४॥

---

[1] कीर्तिमदुदयस्येति—घ. ट.    [2] विद्रुतान्—घ.

दिग्विजयप्रस्थानाय प्रोत्साहयति—

**प्रसाधितदिशो युष्मान् विमुक्तान्यमहीभृतः ।**
**सम्पदः प्रतिपत्स्यन्ते सरितस्सागरानिव ॥ ४५ ॥**

**प्रसाधितेति**—प्रकर्षेण साधितदिशः विजितदिशः। युष्मान्। सम्पदः। विमुक्तान्यमहीभृतः त्यक्तेतरनृपतिकास्सत्यः। प्रतिपत्स्यन्ते प्राप्स्यन्ति। कथमिव? सरितस्सागरानिव, यथा परितो व्याप्तया परिष्कृतदिशः सागरान् विमुक्तपर्वतास्सरितः [1]प्रतिपत्स्यन्ते तद्वदित्यर्थः ॥ ४५ ॥

**स एष पुरतो याता प्राज्ञः परिमृशन् पथः।**
**सङ्कल्प इव युष्माकं सात्यकिस्सत्यविक्रमः ॥ ४६ ॥**

**स इति**—सः प्रसिद्धः। एषः परिदृश्यमानः। प्राज्ञः प्रबुद्धः। सत्यविक्रमः [2] परमार्थविक्रमः, अर्थाव्यभिचारि[3]प्रसिद्धिकपराक्रमः। सात्यकिः। पथः परिमृशन् मार्गान् सज्जीकुर्वन्। वः युष्माकं। सङ्कल्पः मनोरथ इव। पुरतः। याता गन्ता। यातेर्लुट्। मनोरथो ह्युद्देश्यं पुरतो गच्छेदिति तदौपम्येन युष्मदधीन एव पुरतो यातेति दर्शितम्। वस्तुतस्तस्य [4]प्राधान्यमिष्टम्, अतः तानङ्गीकारयितुमुक्तिभङ्गियम् ॥ ॥ ४६ ॥

**परिवारेण सम्पन्नस्त्यक्तकोशश्च कार्यतः।**
**नन्दकोऽयमनिस्त्रिंशस्सम्मतो मम शत्रुजित् ॥ ४७ ॥**

**परिवारेणेति**—परिवारेण परिजनेन। सम्पन्नः समृद्धः। कार्यतः कार्ये प्राप्ते। त्यक्तकोशः विश्राणितार्थजातः। अनिस्त्रिंशः अनुग्रः। नन्दकः सन्तोषकरः। अयं सात्यकिः। शत्रुजित् शत्रूणां जेता। मम

---

[1] प्रतिपद्यन्ते—**घ. ट च.** प्रपद्यन्ते—**छ.** [2] युद्धे सत्यविक्रमः—**घ.** [3] प्रसिद्धप—**घ. ट.** [4] प्राधान्यमिष्टमानामङ्गीं—**छ.** प्राधान्यमनिष्टमिति तानङ्गीकारयितुम्—**घ. ट.**

सम्मतः अहमेनं शत्रूणां जेतारं मन्य इत्यर्थः। "निस्त्रिंशो निर्दये खड्गे" इति विश्वः। अनिस्त्रिंशो नन्दक इत्यनेन अखड्गरूपं नन्दकायुधमित्यपि प्रतीयते। तत्र पक्षे परिवारेण उपरिपिधानेन सम्पन्न युद्धादिकार्ये त्यक्तकोशः त्यक्तपिधान इति च योज्यम्। "परिवारः परिजने खड्गकोशे परिच्छदे" [1] इत्यमरः। कोश इति तालव्यान्तः प्रसिद्धः। अमरसिंहादिभिस्तु षान्तेषु पठितः॥ ४७॥

[2] जैत्रं ध्वजमिवोदग्रमेनमाहितलक्षणम्।
अनुयात दिशो जेतुमस्त्रवेदमिवापरम्॥ ४८॥

जैत्रमिति—आहितान्युद्घोषितानि [3] लक्षणानि येन तं। "गुणैः प्रतीते तु कृतलक्षणाहितलक्षणौ" इत्यमरः। अपरं अस्त्रवेदमिव स्थितं, अस्त्रवेदे अत्यन्तनिष्णातमितियावत्। एनं सात्यकिं। उदग्रं। जैत्रं जयशीलं। ध्वजं केतुमिव। दिशः। जेतुं। अनुयात। सात्यकेः प्राधान्येन पुरस्सरत्वमङ्गीकारयितुं ध्वजोपमानम्॥ ॥ ४८॥

वनसिंहनयाद्गुप्तिर्मानतर्क......।
परस्परपुरस्काराद्भवित्री भवतामिह॥ ४९॥

वनेति—भवतां सात्यकेर्युष्माकं च। इह दिग्विजये। वनसिंहनयात् मानतर्कक्रमादपि [4] परस्परपुरस्काराद्गुप्तिर्भवित्री। यथा वनमाश्रितस्सिंहः किरातादिभिरभिभवितुं वनं च सिंहाधिष्ठितमन्यैराक्रमितुं न शक्यत इति, प्रमाणमनुकूलतर्कश्च प्रमाणानुकूलो भवन् परैर्दू-

---

[1] इति विश्वः—छ. [2] जैत्रध्वज—ट. ग्र. दे. मु. [3] लक्षणानि गुणा अस्येति वा, आहितं गुणितं गुणानुवादादसकृदुच्चरितं लक्षणं नामास्येति वा आहितलक्षणं—च. छ. [4] परस्परोपकारात्—घ. ज. ट.

षयितुं न शक्यत इति वनसिंहयोर्मानतर्कयोश्च परस्परसाहाय्यात् गुप्तिः, एवं भवतामपि परस्परसाहाय्याद्गुप्तिर्भविष्यतीत्यर्थः ॥ ॥ ४९ ॥

**अपि युष्माभिरेतावदहङ्कारग्रहोज्झितैः ।**
**अङ्गीकृतममुह्यद्भिरातुरैरिव भोजनम् ॥ ५० ॥**

**अपीति**—युष्माभिः । अहङ्कारो गर्व एव ग्रहः भूतविशेषः तेनोज्झितैः । अमुह्यद्भिः अविवेकरहितैश्च सद्भिः । एतावत् मयोक्तं । आतुरैः व्याधितैः । भोजनमिव । अङ्गीकृतमपि । अपिशब्दः [1] प्रश्नार्थकः । "गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि" इत्यमरः ॥ ५० ॥

**इति सूक्तिसुधां पीत्वा शौरिवक्त्रेन्दुनिस्सृताम् ।**
**सहसा नरदेवास्ते सौमनस्यं प्रपेदिरे ॥ ५१ ॥**

**इतीति**—ते । नरदेवाः नृपाः । इति उक्तप्रकारेण । शौरेर्वक्त्रमेवेन्दुस्ततो निस्सृतां । सूक्तिमेव सुधां । पीत्वा । सहसा शीघ्रं । [2] सौमनस्यं प्रसन्नमानसत्वं, तदेव सौमनस्यं देवत्वमिति श्लिष्टरूपकम्, ब्राह्मणादित्वात् ष्यञ्प्रत्ययः । प्रपेदिरे प्राप्तवन्तः । सुधापानेन देवत्वप्राप्तिर्युक्तेति भावः ॥ ५१ ॥

**तदुक्तिं शुकवत्सर्वे सल्लँपन्तः परस्परम् ।**
**प्रहर्षमदधुस्तस्य प्रविष्टा नीतिपञ्जरम् ॥ ५२ ॥**

**तदुक्तिमिति**—तस्य कृष्णस्योक्तिं । शुकवत्परस्परं सल्लँपन्तः शुकवदनुवादेन तदुक्तिं श्लाघमानाः । तस्य नीतिमेव पञ्जरं । प्रविष्टाः । सर्वे ते जनाः । प्रहर्षं । अदधुः दधति स्म । दधातेर्लङि

[1] प्रश्नार्थे—छ. [2] सौमननस्यं सन्मानसत्वं—छ.

[1]अभ्यस्तत्वात् झेर्जुसादेशः । शुकवदित्युपमोपक्रमेऽपि प्रवेशानुगुण्या[2]द्रूपकादरः ॥ ५२ ॥

**तृषितैरिव ते श्रोत्रैस्सम्भूतश्रुतिसौरभाम् ।**
**पपुः प्रियहितां तस्य परिशुद्धां सरस्वतीम् ॥ ५३ ॥**

**तृषितैरिति**—ते राजानः । सम्भूतश्रुतिसौरभां सञ्जातवेदपरिमलां, वेदार्थस्पर्शिनीम् । प्रियां तत्कालहृद्यां, हितां परिणामशुभां च । परिशुद्धां व्याकरणसंस्कारादिना अतिनिर्मलां[3] । तस्य कृष्णस्य । सरस्वतीं । तृषितैरिव स्थितैः । श्रोत्रैः । पपुः अत्यादरेणाकर्णयन्नित्यर्थः ॥ ५३ ॥

**असन्देहविपर्यासामसङ्कीर्णहिताहिताम् ।**
**त्रयीमिव गिरं तस्य मानयन्ति स्म ते नृपाः ॥ ५४ ॥**

**असन्देहेति**—ते । नृपाः । असन्देहविपर्यासां सन्देहविभ्रमरहितां । असङ्कीर्णे पृथग्विभक्ते हिताहिते यस्यां तां । तस्य कृष्णस्य । गिरं । त्रयीं त्रिवेदीमिव । मानयन्ति स्म पूजयामासुः । [4]श्रद्दधुरित्यर्थः ॥ ५४ ॥

**अथ यादवयूथेन सहितस्संयुगप्रियः ।**
**सात्यकिः प्रचितोत्तंसः प्रतस्थे भर्तुराज्ञया ॥ ५५ ॥**

**अथेति**—अथ । भर्तुः स्वामिनः । आज्ञया नियोगेन । प्रचितोत्तंसः उपचितशेखरः, शेखरवदाज्ञां शिरसा वहन् । संयुगप्रियः युद्धप्रियः । सात्यकिः । यादवानां यूथेन बृन्देन । सहितस्सन् । प्रतस्थे ॥ ५५ ॥

---

[1] अभ्यस्तत्वेन—घ. [2] द्रूपकालङ्कारः—घ. [3] दिना निर्मलां—च. छ.
[4] श्रद्दधिर इत्यर्थः—च. छ. ट.

धर्मगुप्तिकृतादेशस्स मेने मधुवैरिणा ।
अपृथक्त्वमिवापन्नमन्यदायुधपञ्चकम् ॥ ५६ ॥

धर्मेति—धर्मस्य गुप्तौ कृतादेशः नियुक्तः । सः सात्यकिः । मधुवैरिणा कृष्णेन । अपृथक्त्वमापन्नं एकत्वं प्राप्तं । अन्यत् प्रसिद्ध-भिन्नं । आयुधानां शङ्खचक्रगदाखड्गशार्ङ्गाणां पञ्चकमिव । मेने मानितः । तथा कार्यकरत्वादिति भावः ॥ ५६ ॥

स्वकेतुकल्पनापूर्वं नियुक्तं हरिणा स्वयम् ।
तमेव तादृशाकारं तममन्यन्त यादवाः ॥ ५७ ॥

स्वेति—यादवाः । हरिणा । स्वयं । अनुग्रहार्थं स्वहस्तेनैव स्वकेतोर्गरुडध्वजस्य कल्पना[1]पूर्वं तद्रथे संस्थापनापूर्वं । नियुक्तं दिग्विजयाय प्रेषितं । तं सात्यकिं । [2]तादृशकारं सात्यकिरूपधरं । तमेव हरिमेव । अमन्यन्त । तस्य भगवदनुग्रहलब्धतेजोविशेषं दृष्ट्वेति भावः ॥ ५७ ॥

स वीरश्शासनं भर्तुश्शिरस्त्राणमिवोद्वहन् ।
अमन्यत जितप्रायास्सह दिक्पतिभिर्दिशः ॥ ५८ ॥

स इति—[3]भर्तुः स्वामिनः । शासनं । शिरस्त्राणं उष्णीषमिव । उद्वहन् । [4]स वीरः सात्यकिः । दिशः । दिक्पतिभिस्सह । जितप्रायाः जिततुल्याः । अमन्यत । भगवन्नियोगस्यामोघत्वश्रद्धयेति भावः । "प्रायस्तु [5]मृतितुल्ययोः" इत्यमरशेषः ॥ ५८ ॥

[1] पूर्वं संस्थापना–घ. ट. [2] तादृशं सात्यकि–घ. ट. [3] भर्तुश्शासनं–घ. ट. [4] सः सात्यकि–घ. ट. [5] मृत–घ. ट.

पयोधिं तर्णकपदं पर्वतं सिकतामयम् ।
पातालं च स्थलीपृष्ठं प्रैक्षतामितविक्रमः ॥ ५९ ॥

पयोधिमिति—किञ्च । अमितविक्रमः सात्यकिः । पयोधिं । तर्णकपदं सद्योजातगोवत्सखुरश्वभ्रं । पर्वतं हिमवदादिकम् । सिकतामयं सैकतं । पातालं । स्थलीपृष्ठं स्थलोपरिभागं च । प्रैक्षत । समुद्रादिकं गोवत्सपदादिवदतिसुसाधमन्यतेत्यर्थः ॥ ५९ ॥

प्रयाणपटहस्तस्य प्रलयाम्बुदडम्बरः ।
नूनमानर्तयामास भुवं सह पयोधिभिः ॥ ६० ॥

प्रयाणेति—प्रलयाम्बुदडम्बरः प्रलयमेघसंरम्भः [1] "आडम्बरोऽस्त्री संरम्भे" इति यादवः । प्रलयाम्बरेति पाठेऽपि अम्बरशब्देन [2]तत्स्थो मेघो लक्ष्यते । तस्य सात्यकेः । प्रयाणपटहः । पयोधिभिस्सह । भुवं । [3]आनर्तयामास समन्तान्नर्तयति स्म । नूनमित्युत्प्रेक्षायाम् । पटहघोषाभिघातकृते भुवः पयोधीनां च कम्पे नृत्तत्वमुत्प्रेक्ष्यते । भूभारावतरणादिसन्तोषो गम्यमानं निमित्तम् ॥ ६० ॥

प्रयान्ती पृतना सद्यः प्रणादैर्द्योमपूरयत् ।
वैरिवासकसज्ञानां गणैरप्सरसामपि ॥ ६१ ॥

प्रयान्तीति—प्रयान्ती । पृतना तत्सेना । सद्यः तदैव । प्रणादैः कोलाहलैः । वैरिणां वासकसज्ज्ञानां—

"[4]प्रियागमनवेलायां मण्डयन्ती मुहुर्मुहुः ।
शय्यागृहं तथाऽऽत्मानं सा स्याद्वासकसज्जिका ॥ "

[1] अत्रोपसर्गो नार्थव्यत्यासकारीति भावः [2] तत्स्था मेघा लक्ष्यन्ते—**च. छ.**
[3] आनर्तयामास नर्तयति स्म—**घ. छ.** [4] कान्तागमन—**छ.**

इत्युक्तलक्षणनायिकारूपाणां। अप्सरसां। गणैश्च। द्यां। अपूरयत् पूरयति स्म। प्रयाणसमकालमेव तच्छत्रून् पतित्वेन [1]वरितुमप्सरसस्सज्जीभूता इत्यर्थः। ततश्च कार्यकारणसमकालत्व[2]लक्षणातिशयोक्त्या तस्यातिशीघ्रकारिप्रतापोष्मा लोकान्तरेष्वपि प्रसिद्ध इति व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ६१ ॥

**अधिरुह्य रथं जैत्रं स बभौ तार्क्ष्यसन्निभम्।**
**जिगीषितदिशाचक्रश्चक्रपाणिरिवापरः ॥ ६२ ॥**

**अधिरुह्येति**—सः सात्यकिः। जैत्रं जयशीलं। तार्क्ष्यसन्निभम्। रथं। अधिरुह्य। जिगीषितं दिशाचक्रं दिङ्मण्डलं येन तथा भूतः। अपरः। चक्रपाणिः कृष्ण इव। बभौ ॥ ६२ ॥

**दिव्यदुन्दुभिघोषेण पुष्पवर्षेण भूयसा।**
**अशरीरिजयोक्त्या च तेन जज्ञे जितं जगत् ॥ ६३ ॥**

**दिव्येति**—तेन सात्यकिना कर्त्रा। दिव्यदुन्दुभिघोषेण दिविभवेन भेरीशब्देन। भूयसा बहुतरेण। पुष्पवर्षेण। अशरीरिजयोक्त्या च करणेन। जगत्। जितं जितप्रायं। जज्ञे ज्ञातम्, अनुमितमित्यर्थः ॥ ६३ ॥

**स विष्णुरिव विक्रान्त्या बलिध्वंसोद्यतो बली।**
**सुषुवे त्रिषु लोकेषु कीर्तिं त्रिपथगामिव ॥ ६४ ॥**

**स इति**—विष्णुः उपेन्द्र इव। विक्रान्त्या पराक्रमेण बलिध्वंसोद्यतः बलवतामरीणां [3]ध्वंसने उद्यतः उद्युक्तः। बली बलवान्।

---

[1] वरितुं—च. छ. [2] लक्षणातिशयोक्तिरलङ्कारः। ततश्च तस्यातिशीघ्र—छ.
[3] ध्वंसने उद्युक्तः—छ.

सः सात्यकिः । त्रिषु । लोकेषु । कीर्तिं । त्रिपथगां गङ्गामिव । सुषुवे सूते स्म । यथोपेन्द्रः पदविक्षेपेण बलध्वंसने उद्युक्तः लोकत्रयेऽपि गङ्गां सुषुवे तद्वदित्यर्थः । अनेकवशब्दवाक्यार्थोपमय-मिति नेवकारद्वयवैयर्थ्यम् ॥ ६४ ॥

ततो बुद्बुदफेनाभैः प्रचितां छत्त्रचामरैः ।
निनाय पृतनां प्राचीं गङ्गामिव भगीरथः ॥ ६५ ॥

तत इति—ततः प्रस्थानानन्तरम् । बुद्बुदफेनाभैः छत्त्र-चामरैः बुद्बुदतुल्यैश्छत्त्रैः फेनतुल्यैश्चामरैः । प्रचितां समृद्धां । पृतनां सेनां । भगीरथः । गङ्गामिव । प्राचीं दिशं । निनाय । आदौ मध्यदेशविजिगीषयेति भावः ॥ ६५ ॥

पृतनासागरौघेन पालयन् सागराम्बराम् ।
वीरो वेतसवृत्तीनां न भङ्गमभिसन्दधे ॥ ६६ ॥

पृतनेति—पृतनासागरौघेन सेनासमुद्रप्रवाहेण । सागराम्बरां भूमिं । पालयन् दुष्टनिग्रहेण रक्षन् । वीरः सात्यकिः। वेतसस्य वानीरस्य वृत्तिरिव वृत्तिर्येषां तेषां—

समाक्रान्तो बलवता काङ्क्षन्नभ्रंशिनीं श्रियम् ।
[1]श्रयेत वैतसीं वृत्तिं न भङ्गी स्यात् कदाचन ॥

(का. नी. १०-३२)

इति नीतिमनुरुध्य प्रवाहागमे वेतसवदवनतानां भङ्गं । नाभिसन्दधे न चिन्तयामास ॥ ६६ ॥

---

[1]श्रयेत वैतसीं वृत्तिं न भोजङ्गीं कदाचन—घ. ट. 'आश्रयेद्वैतसीं वृत्तिं न भौजङ्गीं कथञ्चन' इति मुद्रितकामन्दकीयकोशे पाठः.

**महद्भिरपि तत्सैन्ये सम्पतद्भिस्सुहृद्बलैः ।**
**न वृद्धिरभवद्दृश्या वर्षतोयैरिवाम्बुधौ ॥ ६७ ॥**

**महद्भिरिति**—तस्य सैन्ये । सम्पताद्भिः । महद्भिरपि । सुहृदां राज्ञां बलैः । अम्बुधौ । सम्पताद्भिर्वर्षतोयैरिव । वृद्धिः । दृश्या । नाभवदिति सैन्यबाहुल्योक्तिः ॥ ६७ ॥

**अशोभत पताकाग्रैरग्रहस्तैरनीकिनी ।**
**निर्दिश्य गणयन्तीव जेतव्यविषयान्निजैः ॥ ६८ ॥**

**अशोभतेति**—अनीकिनी तत्सेना । निजैः । पताकाग्रैः [1] ध्वजाञ्चलैरेवाग्रहस्तैः । जेतव्यान् विषयान् देशान् । निर्दिश्य । इयन्त इति गणयन्तीव । अशोभत ॥ ६८ ॥

**तमीदिवसयोस्तत्र पृथिव्याकाशयोरपि ।**
**समपद्यत तादात्म्यं सैन्यरेणुसमुत्थितम् ॥ ६९ ॥**

**तमीति**—तत्र [2] सेनायां । तमीदिवसयोः निशादिनयोः । पृथिव्याकाशयोरपि । सैन्यरेणुसमुत्थितं सेनाधूलिकृतम् । तादात्म्यं ऐक्यम् । समपद्यत अजायत । भूमाविव गगनेऽपि रजोबाहुल्यात्तयोरैक्यं रजोऽवकुण्ठनेन रात्रिदिनयोरैक्यं च जातमित्यर्थः । "तमी तमिस्रा कथिता तमस्विनी" इति रात्रिपर्यायेषु हलायुधः ॥ ६९ ॥

**[3] असूचीमुखभेद्यं तदचन्द्रार्कप्रतिक्रियम् ।**
**रुरोध द्विषतां दृष्टिं रजसा जनितं तमः ॥ ७० ॥**

**असूचीति**—असूचीमुखभेद्यं सूच्यग्रेणाप्यवेध्यतया अतिनिबिडम् । चन्द्रार्काभ्यां प्रतिक्रिया निवर्तनं न विद्यते यस्य तदचन्द्रार्क-

---

1 ध्वजाम्बरैरेवाग्र—**घ. ट.** 2 सेनायां निशादिनयो—**घ. ट.** 3 असूचिमुख—**ग. दे. मु.**

प्रतिक्रियम्, तयोरपि रजोधूसरतया अप्रकाशत्वात्। रजसा पांसुना। जनितम्। तत् तमः। द्विषताम्। दृष्टिं लोचनम्। रुरोध। सात्यकिद्विषां रजोगुणोद्रेकजनितेन तमोगुणेन ज्ञाननिरोधोऽपि प्रतीयते ॥ ७० ॥

अप्रतीपमरुत्क्षिप्तः परागः प्रसरन् पुरः।
आसन्नविनिपातानां वैवर्ण्यमदिशद्द्विषाम् ॥ ७१ ॥

अप्रतीपेति—अप्रतीपेनानुलोमेन मरुता क्षिप्तः। अत एव पुरः सेनाया अग्रे। प्रसरन्। परागः। आसन्नविनिपातानाम्। द्विषाम्। वैवर्ण्यम्। अदिशत्। आकस्मिकं वैवर्ण्यमासन्नमरणचिह्नमाहुः। अनेनानुलोमवायोश्शुभनिमित्तत्वाद्भाविश्रेयोऽपि सूचितम् ॥ ७१॥

धूमकम्बलसान्द्रेण रेणुना गगनस्थली।
नमन्तीं सैन्यभारेण शनैरनुजगाम गाम् ॥ ७२ ॥

धूमेति—महानसादिगृहपटलेषु लग्नः कम्बलखण्डाकृतिः धूमपरिणामो धूमकम्बलः, तेनेव सान्द्रेण। रेणुना। गगनस्थली। सैन्यभारेण। नमन्तीम्। गां भूमिम्। शनैः। अनुजगाम। भूमौ सैन्यभारेण नमन्त्यां नभस्स्थलमुपरिभाग[1]मारभ्य सम्पूर्य सन्निकृष्यमाणे च रेणुनिचये नभस्स्थलमेव भुव[2]मन्वगच्छदिवासीदित्यर्थः ॥ ७२ ॥

पृथिवीं वर्धयन्तीव पृतना खण्डयन्त्यपि।
परागैः पूरयामास खातं सगरजन्मनाम् ॥ ७३ ॥

पृथिवीमिति—पृतना। पृथिवीं खण्डयन्ती [3]तुरगखुरादिभिरर्दयन्त्यपि। वर्धयन्तीव। सगराज्जन्म येषां तेषां सगरसुता-

[1] मारभ्यापूर्य सन्निकृष्यमाणे—च. छ. [2] मनुगच्छदिव—ञ. ट. [3] तुरगादिखनिभिर्गनयन्त्यपि—ग्र. ट.

नाम् । खातं समुद्रं । परागैः । पूरयामास । समुद्रस्य परागैः पूरणे पृथिवी वैपुल्येन संवर्धिता भवतीति भावः ॥ ७३ ॥

**ध्वजपल्लविता सेना शस्त्र[1]पुष्पा परागिणी ।**
**बभौ चञ्चूर्यमाणेव मृत्योरुपवनस्थली ॥ ७४ ॥**

**ध्वजेति**—ध्वजैः पल्लविता सञ्जातपल्लवा । शस्त्राण्येव [2]पुष्पाणि यस्या इति शस्त्रपुष्पा । परागिणी धूलिमती, पुष्परजोयुक्ता च, सेना । चञ्चूर्यमाणा प्राणिवधेन गर्हितं 'सञ्चरन्ती । मृत्योः । उपवनस्थलीव । बभौ । चञ्चूर्यमाणेति चरतेः' जपसदचर (पा. सू. ३-१-२४) इत्यादिना भावगर्हायां यङ् । 'चरफलोश्च' (पा. सू. ७-४-८७) इत्यभ्यासस्य नुगागमः । 'उत्परस्यातः' (पा. सू. ७-४-८८) इति परस्याकारस्योकारः । 'हलिच' (पा. सू. ८-२-७७) इति दीर्घः । "परागः कौसुमे रेणौ [3]धूलीस्नानीययोरपि" इति विश्वः ॥ ७४ ॥

**सा [4]नूनमनुकुर्वन्ती सिन्धुपत्न्यौ सितासिते ।**
**कुटिलप्रातिकूलाधिकूलङ्कषगतिर्ययौ ॥ ७५ ॥**

**सेति**—सिन्धुपत्न्यौ समुद्रमहिष्यौ । सितासिते गङ्गायमुने नद्यौ । नूनमनुकुर्वन्ती निश्चयमनुकरिष्यमाणा । वैपुल्या[5]गाधसत्वा-

---

[1] पुष्पपरागिणी—घ. ट. [2] पुष्पाण्यस्या. [3] धूलि—घ. [4] अत्र सर्वत्र लिखितकोशेषु अनुकुर्वन्तीति मूलव्याख्ययोरुपलम्भेऽपि नुमागमानुपपत्तेः व्याख्यायां 'निश्चयमनुकरिष्यमाणा' इति विवरणदर्शनात् 'नूनं साऽनुकरिष्यन्ती' इति मूले पाठः स्यात् । देवनागरमुद्रितमूलकोशे तु 'सा नूनमनुकुर्वाणा' इति संशोधितं च दृश्यते । दुर्घटवृत्तौ तु 'आरम्भसामर्थ्यान्नित्यत्वे लब्धे नित्यग्रहणं नित्यमत्रेत्यवधारणार्थम् । तेनान्यत्रानकारान्तात्क्वचिद्विकल्पः । तेन कुर्वती कुर्वन्तीत्यादिसिद्धम्' इति शप्श्यनोरिति सूत्रे कुर्वन्तीति प्रयोगसाधनदर्शनाद्यथाश्रुतमेव वा साधु स्यादित्यभ्युपगन्तव्यमिति भाति. [5] 'गाधत्वादिना' इति स्यात्.

दिना गङ्गायमुने अपि तिरस्कुर्वतीत्यर्थः। सा सात्यकिसेना। कुटिलप्रतिकूलर्धिकूलङ्कषगतिस्सती, कुटिलाः कपटिनः ये प्रतिकूला विरोधिनः तेषामृद्धेर्धनधान्यादिसमृद्धेः कूलङ्कषा मूलघातिनी गतिः सञ्चारो [1]यस्यास्सा सती, नदीपक्षे कुटिला वक्रा, प्रतिकूलं कूले कूले सञ्जातया ऋद्ध्या [2]कूलमाकर्षती तीरघातिनी च गतिर्यस्यास्सा सती। ययौ गच्छति स्म। यथा वर्षासु नद्यः [3]स्वप्रवाहप्रवृद्ध्या कूलघातिन्यो गच्छन्ति, तथा सात्यकिसेनासरिदपि स्वगमनादेव वञ्चकविरोधिसम्पदः समूलमादाय ययाविति भावः। श्लेषानुप्राणितोपमालङ्कारः॥ ॥ ७५ ॥

विश्वतःप्रसृतिस्तस्या बभूव बहुपद्धतेः।
वाहबन्धनकीलानाम[4]पर्याप्तवनद्रुमा ॥ ७६ ॥

विश्वतइति—बहुपद्धतेः बहुलमार्गायाः। तस्याः सेनायाः। वाहानां तुरगादीनां बन्धनस्य कीलाः शङ्कवः तेषाम्। अपर्याप्ताः वनद्रुमाः यस्यां तथाभूता विश्वतःप्रसृतिः सर्वत्र प्रसरणं बभूव ॥ ७६ ॥

अविच्छिन्नगुणांश्चक्रे निस्त्रासान्निजसेनया।
हारानिव भुवश्शुद्धानग्रहारान् परार्पितान् ॥ ७७ ॥

अविच्छिन्नेति—निजसेनया। निस्त्रासान् भयरहितान्, हारपक्षे निस्त्रासान् मणिदोषरहितान्। भुवः शुद्धान् निर्मलान्। हारानिव। परार्पितान् [5]राजान्तरदत्तान्। अग्रहारान्। अविच्छिन्नगुणान्। स्वसेनाप्रयुक्तभयनिवारणादविच्छिन्नयागाध्ययनादिधर्मान्। चक्रे। हारपक्षे—[6]गुणास्तन्तवः, यद्यपि "भीत्रार्थानां

[1] यस्यास्सती—घ. ट. [2] अत्र 'कूलङ्कषा' इति स्यात्. [3] स्वप्रवाहसमृद्ध्या—छ. [4] पर्याप्तबहुद्रुमा—ग्र. दे. मु. [5] राजान्तरकृतान्—च. छ. ज. ट. [6] गुणानां सूत्राणां विच्छेदरहितान्—च. छ.

भयहेतुः" (पा—स १-४-२५) इत्यपादानसंज्ञया ।निजसेनयेत्यत्र पञ्चम्या भाव्यम् । तथाऽपि करणत्वविवक्षया तृतीयोपपादनीया । तथाऽपि प्रयोगा दृश्यते—"न जातहार्देन न विद्विषा दरः" (किरातार्जुनीये १–३३) इति। त्रासनं त्रासः ण्यन्ताद्भावप्रत्ययः। तथा च सेनया स्वकृत त्रा . . . . . . . . . . . . . . सात्यकेरेव भयहेतुतया अपादानत्वात्तद्व्यापारकरणे सेनायां "कुञ्चिकयैनां भाययति" इतिवत्तृतीयोपपत्तिः । अथवा सेनया स्वकृतत्रासनरहितानविच्छिन्नगुणांश्चक्र इति योज्यम् ॥ ७७॥

**अनाश्रमपदासन्नामभीषितकृषीवलाम् ।**
**अनैषीन्महतीं सेनामविरुन्धान[1]गोपनीम् ॥ ७८ ॥**

**अनाश्रमेति**—अनाश्रमपदासन्नां ऋषिस्थानानां विप्रकृष्टाम् । अभीषितकृषीवलां अत्रासितकर्षकाम् । अविरुन्धानानां विरोधमकुर्वतां [1] गोपनीं संरक्षिकाम् । महतीम् । सेनाम् । अनैषीत् नयति स्म । मार्गे क्वचिदप्युपद्रवलेशं विनैव सेनां नीतवानित्यर्थः ॥

[2]"उपरुद्धारिसीमान्तं राष्ट्रं चास्योपपीडयेत्"

इत्यादिस्मरणं तु दुस्साधपरिपन्थिविषयामिति भावः । अस्य सर्वेऽपि परिपन्थिन[3]स्सुसाधा जाता इत्युत्तरश्लोके स्पष्टम् ॥ ७८॥

**स्वदेशादविशेषेण स्वीकृते शत्रुमण्डले ।**
**न योधा जगृहुस्तत्र किञ्चिदस्वामिसम्मतम् ॥ ७९ ॥**

**स्वदेशादिति**—स्वदेशादविशेषेण स्वदेशाद्भेदं विनैव। स्वीकृते अनायासेन गृहीते। शत्रुमण्डले परराष्ट्रे। अस्वामिसम्मतं तत्तत्सस्यादिस्वामिनाम[4]सम्मतं । किञ्चित् सस्यादिकं। योधाः । न जगृहुः ॥

[1] गोपिनीं—ग्र. द्. मु. [2] उपरुद्धारिमासीत—च. छ. [3] सुजाता—छ.
[4] संमतं योधा—घ. ट.

**विहारास्तस्य जन्येषु विमतानेव निघ्नतः ।**
**समं ददृशिरे दैवैस्तत्तज्जानपदैरपि ॥ ८० ॥**

विहारा इति—विमतानेव निघ्नतः, न तु तद्राज्यं दूषयतः । तस्य सात्यकेः । जन्येषु युद्धेषु । विहाराः । देवैः । तत्तज्जानपदैः तैस्तैर्जनपदभवैर्जनैरपि । समं निश्शङ्कं तुल्यं यथा तथा । ददृशिरे दृष्टाः ॥ ८० ॥

**अदीनसत्त्वश्शत्रूणां दीनसंरक्षणव्रती ।**
**अन्वकम्पत धात्रीभिरुपनीतान् स्तनन्धयान् ॥ ८१ ॥**

अदीनेति—अदीनसत्त्वः महाबलः । दीनसंरक्षणव्रती दीनानां संरक्षणमेव व्रतमस्यास्तीति तथोक्तः, सर्वधन्यादिवत् कर्मधारयान्मत्वर्थीयः । धात्रीभिः उपमातृभिः । उपनीतान् । शत्रूणां युधि हतानां । स्तनन्धयान् अर्भकान् । अन्वकम्पत । शरणागतान् वीक्ष्य कृपया तत्तद्राज्ये स्थापितवानित्यर्थः ॥ ८१ ॥

**अदृष्टसैन्यरजसामबाणस्पर्शवेदिनाम् ।**
**पश्यन् क्वचिदमित्राणां स जिह्राय पलायनम् ॥ ८२ ॥**

अदृष्टेति—क्वचित् देशविशेषे । अदृष्टसैन्यरजसां [1]अनीक्षितसैन्यधूलीनां । अबाणस्पर्शवेदिनां शरवेधमजानतां । अमित्राणां द्विषताम् । पलायनम् । पश्यन् । सः सात्यकिः । जिह्राय ह्रीणोऽभूत् । एवमतिकातरानभ्युद्दिश्य योद्धुं समागता वयमिति लज्जित इत्यर्थः ॥ ८२ ॥

---

[1] अनीक्षितसेना—च. छ.

स मिथश्शौर्यसङ्घर्षादरातीनभिनिघ्नतः ।
पुनरुद्दीपयामास सत्कारेण गरीयसा ॥ ८३ ॥

स इति—सः सात्यकिः । मिथः अन्योन्यं । [1]शौर्यसङ्घर्षात् शौर्यस्पर्धया । अरातीनभिनिघ्नतः । स्वयोधानिति शेषः । गरीयसा गुरुतरेण । सत्कारेण आदरेण 'आदरानादरयोस्सदसती' (पा सू. १-४-१३) इति सच्छब्दस्य गति[2]संज्ञायां समासः । पुनरुद्दीपयामास पुनरप्यधिकसङ्घर्षान् अकरोत् । विजित्यागतस्य कस्यचित्सत्कारे तत्सङ्घर्षादन्यस्ततोऽधिकमुत्सहत इति भावः ॥ ८३ ॥

क्रोधपावकदीप्तानां हेतीनां यदुपुङ्गवाः ।
विदधुस्तत्र वैरिस्त्रीबाष्पतोयेन सेचनम् ॥ ८४ ॥

क्रोधेति—यदुपुङ्गवाः यदुश्रेष्ठाः । तत्र दिग्विजये । क्रोध एव पावकः तेन दीप्तानां क्रोधाग्नौ निष्टप्तानाम् । [3]हेतीनां आयुधानाम् । वैरिस्त्रीबाष्पतोयेन । सेचनम् । विदधुः चक्रुः । वैरिस्त्रीणां हतभर्तृकाणां बाष्पोद्गमे सति क्रोधोद्धृतानामायुधानामुपशान्तेरेवं जलसेचनत्वोक्तिः ॥ ॥ ८४ ॥

निहतप्रतिमातङ्गदन्तत्सरुपरिष्कृतान् ।
द्विषतां मौलिशाणेषु खड्गान्मुहुरशातयन् ॥ ८५ ॥

निहतेति—निहतानां प्रतिमातङ्गानां प्रतिपक्षगजानां दन्तत्सरुभिः दन्तकृतैर्मुष्टिभिः परिष्कृतान् । खड्गान् । द्विषतां । मौलिशाणेषु किरीटेष्वेव [4]शाणोपलेषु । मुहुः पुनः पुनः । अशातयन् उदतेजयन् । "त्सरुः खड्गादिमुष्टौ स्यात्" इत्यमरः ॥ ८५ ॥

---

[1] शौर्य सं—च. छ. [2] संज्ञया—च. छ. [3] हेतीनां वैरिस्त्री [4] शाणफलकेषु पुनरशातयन्—घ. ट.

शस्त्रधाराधरैस्तत्र विक्रमारण्यबर्हिणीम् ।
विपुले भुजशैलाग्रे वीरश्रिय[1]मनर्तयन् ॥ ८६ ॥

शस्त्रेति—तत्र दिग्विजये । विक्रमारण्यबर्हिणीं पराक्रमस्यैवा-रण्यस्य बर्हिणीं मयूरीं । वीरश्रियं । न विपुले । भुजशैलस्याग्रे । शस्त्रैरेव धाराधरैर्मेघैः । [1]अनर्तयन् ॥ ८६ ॥

नियतं हेतयस्तेषां निपीते वह्निवारिणी ।
निदधुश्शत्रुनारीणां चित्तेषु नयनेषु च ॥ ८७ ॥

नियतमिति—तेषां यदूनां । हेतयः । निपीते निर्माण-समयपीते । वह्निवारिणी । शत्रुनारीणां । चित्तेषु । नयनेषु च । क्रमेण निदधुः । नियतमिति निश्चितवाचि । "नियतं निश्चितं मतम्" इति हलायुधः । इहोत्प्रेक्षायां पर्यवस्यति । शत्रुनारीणां हृदि तापस्य दृशि बाष्पस्य च दर्शनेन तन्निधानोत्प्रेक्षणस्यौचित्यात् ॥ ८७ ॥

अलभन्त क्षणात्तेषां पुरतः [2]परिपन्थिनः ।
धनुषा नमता स्वर्गं वपुषा तु वसुन्धराम् ॥ ८८ ॥

अलभन्तेति—परिपन्थिनः शत्रवः । तेषां यदूनां । पुरतः । नमता प्रह्वीभवता । धनुषा । क्षणात् सद्य एव । स्वर्गं । अलभन्त । नमता । वपुषा तु । वसुन्धरां । अलभन्त । ये प्रतिभटीभूयागतास्ते सर्वे तथैव [3]निपातिताः, अवनतास्तु यथापूर्वं प्रतिष्ठापिता इत्यर्थः ॥ ८८ ॥

---

[1] अनर्नयत्—छ. [2] परिबन्धिनः—ग्र. दे. मु. [3] निपतिताः—घ. ट.

**घूर्जरान् पारशीकांश्च प्रागेव भृतकीकृतान् ।**
**[1]अपश्चात्पदविन्यासानकरोदग्रयायिनः ॥ ८९ ॥**

**घूर्जरानिति**—प्रागेव भृतकीकृतान् प्रागेव दूतमुखेन कर्मकरवद्वशंवदीकृतान् । [1]अपश्चात्पदाविन्यासान् धीरत्वाद्युद्धेषु भयप्रयुक्तपश्चात्पदाविक्षेपरहितान् । [2]घूर्जरान् पारशीकांश्च देशविशेषगतान् राज्ञः । अग्रयायिनः स्वसेनायाः पुरस्सरान् । अकरोत् । घूर्जरादिशब्दा देशविशेषवाचिनः, तत्तद्देशक्षत्रियाणामपि वाचकाः । एतदग्रेऽप्यनुसन्धेयम् ॥ ८९ ॥

**मध्यदेशं वशीकृत्य योगीव प्रथमं मनः ।**
**प्रत्यन्तबहिरक्षाणि [3]त्याजितार्थान्यथाकरोत् ॥ ९० ॥**

**मध्यदेशमिति**—योगी । मन इव । प्रथमं । मध्यदेशं—

"[4]हिमवद्विन्ध्ययोरन्तर्यत्प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः' ॥

इत्युक्तलक्षणं । वशीकृत्य स्वाधीनीकृत्य । अथ । प्रत्यन्ताः पर्यन्तदेशाः बहिरक्षाणि बहिरिन्द्रियाणीव तानि त्याजितार्थानि त्याजितधनानि । अकरोत् । इन्द्रियपक्षे अर्थाः रूपादिविषयाः ॥ ९० ॥

**गृहीतचरमाम्भोधीन् गरुत्मानिव जग्रसे ।**
**धन्विनस्तुरगोपेतान् विमुखान् भुजगानिव ॥ ९१ ॥**

**गृहीतेति**—सः । गृहीतचरमाम्भोधीन् आश्रितपाश्चिमसमुद्रान् । विमुखान् भग्नान् । तुरगोपेतान् धन्विनः हयसादिनस्तुरुष्कान् ।

[1] अपश्चात्पाद—**च. छ.** [2] गुर्जरान्—**च.** [3] त्याजितार्थानि सोऽकरोत्—**ग्र. दे. मु.** [4] 'हिमवद्विन्ध्ययोर्मध्यं' इति मुद्रिते पाठः

गरुत्मान् गरुड इव । समुद्रं प्रविष्टान् विविधमुखान् भुजगान् सर्पानिव । जग्रसे ग्रस्तप्रायानकरोत् । उपमालङ्कारः ॥ ९१ ॥

यदवस्तत्र निस्त्रासा यवनैः स्तनयित्नुभिः ।
शैला इव दधुर्भीमां शरवृष्टिमुदीरिताम् ॥ ९२ ॥

यदवइति—तत्र । यदवः । स्तनयित्नुभिः मृत्युभिः. मृत्युवत् क्रूरैः । यवनैः यवनाख्यदेशस्य राजभिः । उदीरितां क्षिप्तां । भीमां शरवृष्टिं बाणवृष्टिं । निस्त्रासा निर्भयास्सन्तः । दधुः । शैला इव । यथा शैलाः स्तनयित्नुभिः मेघैरुदीरितां शरवृष्टिं जलवृष्टिं निस्त्रासा निश्चला दधति तद्वदित्यर्थः । "स्तनयित्नुर्वारिवाहे तत्स्वने मृत्युरोगयोः" इति विश्वः । त्रसिधातोश्चलनमप्यर्थः इति 'चारिष्णुजङ्गमचरं त्रसमिङ्गं चराचरम्' इत्यत्र त्रसशब्दं चरेऽपि[1] व्युदपादयत् ॥ ९२ ॥

रक्तचन्दनदिग्धास्ते यशोभिस्स्रग्विणस्तदा ।
जयश्रीपरिरम्भार्थं नैपथ्यमिव भेजिरे ॥ ९३ ॥

रक्तेति—तदा । रक्तमेव चन्दनं तेन दिग्धाः । यशोभिः । स्रग्विणः माल्यवन्तः । ते यादवाः । जयश्रीपरिरम्भः अर्थः प्रयोजनं यस्य तत् । नैपथ्यं प्रसाधनं । भेजिर इव ॥ ९३ ॥

कपिचूषिततालाभैः कृत्तैर्यवनमूर्धभिः ।
ददृशे कालभृत्यानां दत्तपिण्डेव मेदिनी ॥ ९४ ॥

कपीति—मेदिनी रणभूमिः । कृत्तैः छिन्नैः । अत एव कपिचूषिततालाभैः । कपिगृहीतरसतालफलसमाकृतिभिः । यवनानां मूर्धभिः । कालभृत्यानां यमभटानां । दत्ताः पिण्डाः उपहारपिण्डाः यस्यां तथाभूतेव । ददृशे दृष्टा ॥ ९४ ॥

[1] चरेऽप्युदपातयत्–घ. ट. च. छ.

पीते यवनसैन्याब्धौ तत्कोपबडबाग्निना ।
शकाद्याश्शरणं जग्मुश्शङ्कातङ्केन सात्यकिम् ॥ ९५ ॥

पीत इति—तस्य सात्यकेः कोप एव बडबाग्निरौर्वानलः तेन । यवनसैन्य एवाब्धौ । पीते सति शकाद्याः शकदेशराजप्रभृतयः । शङ्कया भाव्यनर्थ[1]वितर्केण य आतङ्को भयं तेन । सात्यकिं । शरणं । जग्मुः ॥ ९५ ॥

प्रवाळपल्लवास्तीर्णां रत्नपुष्पौघकर्बुराम् ।
विहारपदवीं मेने वेलामपरवारिधेः ॥ ९६ ॥

प्रवाळेति—प्रवाळान्येव पल्लवास्तैरास्तीर्णां । रत्नान्येव पुष्पाणि तेषामोघेन समूहेन कर्बुरां नानावर्णां । अपरवारिधेः पश्चिमसमुद्रस्य । वेलां । विहारपदवीं विहरणमार्गं । मेने । राज्ञां विहरणार्थो हि मार्गः पल्लवास्तीर्णः प्रकीर्णपुष्पश्च भवति ॥ ९६ ॥

प्रचेतसाऽपि दुष्प्रापैः प्रवालमणिमौक्तिकैः ।
तं पोतवणिजस्तत्र प्रभूतैः पर्यतोषयन् ॥ ९७ ॥

प्रचेतसेति—तत्र समुद्रवेलायां । पोतवणिजः पोतः यानपात्रं समुद्रयानसाधनविशेषः तत्प्रधाना वैश्याः । प्रचेतसा वरुणेनापि ; समुद्रमधितिष्ठताऽपीति भाव , दुष्प्रापैः कृच्छ्रेण प्राप्तव्यैः । प्रभूतैः प्रचुरैः । प्रवालमणिमौक्तिकैः विद्रुमैरिन्द्रनीलादिरत्नैः मुक्ताफलैश्च तं सात्यकिं । पर्यतोषयन् परितुष्टं चक्रुः ॥ ९७ ॥

---

[1] वितर्केणातङ्को—घ. ट.

निर्धूतनिगमांस्तत्र नैगमानपरान्तजान् ।
स वैद्य इव दुर्व्याधीन् दुर्जयान[1]जयद्विभुः ॥ ९८ ॥

निर्धूतेति—तत्र समुद्रवेलायां । [2]स विभुः सात्यकिः । अपरान्तजान् पाश्चात्यदेशभवान् । "अपरान्तास्तु पाश्चात्याः" इति यादवः । दुर्जयान् यवनप्रायतया कृच्छ्रेण जेतव्यान् निर्धूतनिगमान् स्वसैनिकैर्ध्वस्तवणिक्पथान् । "निगमो निश्चये वेदे पुरे पथि वणिक्पथे" इति यादवः । नैगमान् वणिजः । "वैदेहकस्सार्थवाहो नैगमो वणिजो वणिक्" इत्यमरः । वैद्यः । दुर्व्याधीन् कुष्ठादीनिव अजयत् ॥९८॥

विहरन्वारुणीभाजा स वीरो विजयश्रिया ।
बभूव [3]बर्बरस्त्रीणां परिदेवनदेशिकः ॥ ९९ ॥

विहरन्निति—वारुणीभाजा प्रतीचीभाजा । विजयश्रिया सह । विहरन् । स वीरः । [3]बर्बरस्त्रीणां [3]बर्बरदेशवनितानाम् । परिदेवनदेशिकः विलापस्याचार्यः । बभूव, तत्पतीनां हननेनेति भावः । यथा वारुणीपानमत्तया कयाचित् स्त्रिया रममाणः तदन्यासां शोकं जनयति तद्वदिति गम्यते ॥ ९९ ॥

उदनह्यन्त वार्ष्णेयाः कुन्तलान् समरश्लथान् ।
प्रवाळैरपराम्भोधेरान्त्रैरिव समुद्धृतैः ॥ १०० ॥

उदनह्यन्तेति—वार्ष्णेयाः वृष्णिवंश्याः । समरश्लथान् युद्धेन शिथिलान् । कुन्तलान् केशान् । [4]अपराम्भोधेः समुद्धृतैः । आन्त्रैः दीर्घमांसविशेषैरिव स्थितैः । प्रवाळैर्विद्रुमलताभिः । उदनह्यन्त ऊर्ध्वमबध्नन् । प्रवाळानामान्त्रत्वोत्प्रेक्षणात् अम्भोधेरात्तसारत्वं व्यज्यते ॥ ॥ १०० ॥

---

[1] जयत्प्रभुः—छ. [2] स प्रभुः—घ. ट. [3] बर्बर—ग्र. मु. बम्बर—घ. ट.
[4] अपराम्भोधेस्समुद्धृतैरान्त्रै—घ. ट.

**ततो विलुलितम्लेच्छः पश्चिमोदधिवेलया ।**
**अनिलप्रेयसीमाशाममनुष्यपदं ययौ ॥ १०१ ॥**

**तत इति**—ततः अनन्तरम् । विलुलिता उपमृदिता म्लेच्छाः किरातादयः येन स सात्यकिः । पश्चिमोदधेर्वेलया । अमनुष्यपदं मनुष्याणामविषयं, मानुषागम्यां अनिलस्य प्रेयसीमाशां पश्चिमोत्तरां दिशम् ययौ ॥ १०१ ॥

**हारीतहरितैस्तत्र महार्घैर्मणिराशिभिः ।**
**गृहीतैरन्वगृह्यन्त तेन पोतोपजीविनः ॥ १०२ ॥**

**हारीतेति**—तत्र वायुदिशि । तेन सात्यकिना । हारीताः पक्षिविशेषाः तैरिव हरितैः हरिद्वर्णैः । महार्घैः महामूल्यैः । गृहीतैः करत्वेनोपात्तैः । मणिराशिभिः गारुडरत्नकूटैः । पोतमुपाश्रित्य जीवन्तीति पोतोपजीविनः सांयात्रिका वणिजः, अन्वगृह्यन्त अनुगृहीताः ॥ १०२ ॥

**पश्चिमां दिशमाक्रम्य प्राङ्मुखं रथमास्थितम् ।**
**विपरीतगतिं सूर्यमुदीच्यास्तमजानत ॥ १०३ ॥**

**पश्चिमामिति**—पश्चिमां दिशम् । आक्रम्य जित्वा । प्राङ्मुखं रथमास्थितम् । तं सात्यकिम् । उदीच्या जनाः । विपरीतगतिम् । सूर्यं अजानत अमन्यन्त ॥ १०३ ॥

**स कृष्णवर्त्मविहृतिर्युगान्त इव संयुगे ।**
**अमित्रलोकमदहद्दीप्तहेतिगणोल्बणः ॥ १०४ ॥**

**स इति**—कृष्णवर्त्मनि [1]कृष्णोपदिष्टे मार्गे विहृतिर्यस्य स तथोक्तः । कृष्णवर्त्मनोऽग्नेर्विहृतिरिव विहृतिर्यस्येत्यपि प्रतीयते, दीप्त-

[1] कृष्णोपविष्टे—घ.

हेतिगणोल्बणः [1] उज्ज्वलैरायुधगणैरुत्कटः । पक्षे हेतयो ज्वालाः । सः सात्यकिः । युगान्त इव प्रळयकाल इव । संयुगे युद्धे । अमित्रलोकं शत्रुजनम् । अदहत् निपातितवानित्यर्थः । यथा युगान्ते विजृम्भितः कालाग्निर्लोकं दहति तद्वदिति भावः ॥ १०४ ॥

**अनभ्रविद्युत्प्रतिमास्सायकास्तस्य धन्विनः ।**
**अभवन् हूणनारीणामश्रुवर्षपुरस्सराः ॥ १०५ ॥**

**अनभ्रेति**—धन्विनः [2] धनुष्मतः । तस्य सात्यकेः । अनभ्रविद्युत्प्रतिमाः मेघस्थानीयस्य कस्यचिदाश्रयस्याभावान्मेघराहिततटित्सदृशाः । सायकाः । हूणनारीणां । अश्रु[3]वर्षपुरस्सराः । अभवन् । मेघराहितास्तटितः प्रादुर्भूय वृष्टिमुपपादयन्तीति चित्रमिति भावः । ॥ १०५ ॥

**द्विषतो देवदृश्येषु रणरङ्गेषु दीव्यतः ॥**
**ताण्डवं ग्राहयामास निपातितशिरोधरान् ॥ १०६ ॥**

**द्विषत इति**—देवैः [4] सामाजिकस्थानीयैः दृश्येषु । रणरङ्गेषु [5] रणखलेषु । रङ्गशब्देन नृत्यस्थानान्यपि प्रतीयन्ते । "रङ्गो [6]रणखले रागे नृत्यस्थाने त्रपुण्यपि" इति विश्वः । दीव्यतः युद्धेन क्रीडतः । निपातिताशिरोधरान् तदैव स्वेन निपातितकण्ठान् । द्विषतः । ताण्डवं । ग्राहयामास शिक्षितवानिति व्याख्येयम् । तथा च बुद्ध्यर्थत्वाद्द्विकर्मकत्वम् । ताण्डवप्रयोजकत्वमात्रेण [6]तच्छिक्षकत्वारोपः ॥ १०६ ॥

---

[1] उज्ज्वलायुध–घ. ट. [2] धन्विश्रेष्ठस्य तस्य–छ. [3] वर्षस्य पुर–छ.
[4] समाजस्थानीयैः–घ. ट. [5] रणबलेषु–घ. ट. [6] तच्छिक्षकत्वाविरोधः–छ.

अपरस्परसापेक्षानतूणीरप्रकाशकान् ।
अशंसत्प्रतियोधानप्यवधीरितजीवितान् ॥ १०७ ॥

अपरस्परेति—अपरस्परसापेक्षान् असहायशूरत्वादन्योन्यनिरपेक्षान् । अतूणीरप्रकाशकान् परावृत्त्यभावात्परेषु तूणीराणामप्रकाशकान् अवधीरितजीवितान् अनादृतप्राणान् । प्रतियोधानपि । अशंसत् अश्लाघत । गुणैकपक्षपातिनां स्वकीयपरकीयभेदो नास्तीत्यश्लाघतेति भावः ॥ १०७ ॥

महान्तो मण्डलं चेरुर्मध्येप्रतिबलं द्विपाः ।
प्रळयोदन्वदावर्ते भ्रमन्त इव पर्वताः ॥ १०८ ॥

महान इति—मध्येप्रतिबलं प्रतिपक्षबलस्य मध्ये । महान्तः उन्नताः । द्विपाः यदुसैन्यगजाः । प्रलयोदन्वदावर्ते प्रलयार्णवजलभ्रमे । भ्रमन्तः । पर्वता इव । तत्र मण्डलं यथा तथा । चेरुः चरन्ति स्म । प्रतिपक्षहननं कुर्वन्त इति भावः ॥ १०८ ॥

तत्र सैन्यरजश्चक्रे प्रतीचीरपि वाहिनीः ।
असमाहितबुद्धीनां चित्तवृत्तीरिवाविलाः ॥ १०९ ॥

तत्रेति—तत्र उदग्देशे । सैन्यरजः । प्रतीचीः प्रत्यङ्मुखीरपि । वाहिनीः नदी । असमाहिता अनेकाग्रीकृता बुद्धिर्यैस्तेषां । चित्तवृत्तीरिव । अविलाः । चक्रे । यथा रजोगुणः प्रत्यगात्माभिमुखीरप्यसमाहितमनस चित्तवृत्तीराविलाः करोति, तद्वदित्यर्थः ॥ १०९ ॥

त्रसमुक्तं पुनस्तत्र सिन्धुकाम्भोजयोषिताम् ।
अश्रुबिन्दुभिराबन्धि मौक्तिकस्तनमण्डनम् ॥ ११० ॥

त्रासेते—तत्र । सिन्धुकाम्भोजयोषितां सिन्धुदेशस्य काम्भोजदेशय च स्त्रीणां । अश्रुबिन्दुभिः । त्रासमुक्तं भयेन विसृष्टं,

मणिदोषरहितं च। मौक्तिकस्तनमण्डनं। पुनरपि। आबन्धि आबद्धम्। प्राक्तासां त्रासमुक्तं मौक्तिकस्तनमण्डनमासीत्, स्वपतीनां[1] हनने सति अश्रुबिन्दुमण्डनरूपं तथैवासीदिति पुनश्शब्दार्थः ॥ ११० ॥

अकृष्टपच्यघुसृणामच्छिन्नौघमहापगाम्।
अघर्मग्लापितारण्यामनघां भुवमन्वभूत् ॥ १११ ॥

अकृष्टेति—कृष्टदेशे पच्यानि, [2]'राजसूय' (पा. सू. ३-१-११४) इत्यादिना उक्तार्थे निपातः, अकृष्टपच्यानि कर्षणयत्नं विना स्वयमेवोत्पद्य पचेलिमानि, घुसृणानि कुङ्कुमानि यस्यां। अच्छिन्नौघाः अविच्छिन्नप्रवाहाः महापगाः चन्द्रभागादयो यस्यां। अत एवाघर्मग्लपितानि निदाघेनाशोषितान्यरण्यानि यस्यां तां। अनघां रम्यां। भुवं काश्मीरभूमिं। अन्वभूत् अन्वभुङ्क्त ॥ १११ ॥

अश्वीयखुरनिष्पिष्टभूधरक्षोदभूयसा।
राजवीथीसमां चक्रे रजसा वालुकां नदीम् ॥ ११२ ॥

अश्वीयेति—अश्वानां समूहो अश्वीयं "केशाश्वाभ्यां यञ्छावन्यतरस्याम्" (पा. सू. ४-२-४८) इति समूहार्थे छप्रत्ययः, तस्य खुरैः निष्पिष्टानां क्षुण्णानां भूधराणां क्षोदैश्चूर्णैः [3]भूयसा बहुलेन। रजसा सेनापरागेण। वालुकां वालुकाख्यां। नदीं। राजवीथीसमां चक्रे राजवीथीवत्समीचकार ॥ ११२ ॥

---

[1] ततः स्वपतीनाम्—घ. ट. [2] 'राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः' (पा. सू. ३.१-११४) इति सूत्रेणेति भावः. [3] भूयसा रजसा—घ. ट

ग्रामणेरिव तैस्तस्य सैनिकैरवरोधिताः ।
स्त्रियः पुरुषधर्माणस्त्रीत्वमेवोपलम्भिताः ॥ ११३ ॥

ग्रामणेरिति—पुरुषधर्माणः पुरुषाणां धर्मा इव धर्मा युद्धकरणादयो [1]आसां ताः । स्त्रियः स्त्रीदेशे विद्यमानाः स्त्रियः । ग्रामणेरिव पत्युरिव। "ग्रामणिः पतिमुख्ययोः" इति रत्नमाला । तस्य सात्यकेः । तैः शूरतया प्रसिद्धैः । सैनिकैः सेनाभटैः । अवरोधिताः [2]अवरोधमन्तःपुरं प्रापितास्सत्यः । स्त्रीत्वमेव स्त्रीभावमेव । उपलम्भिताः प्राप्ताः ॥ ११३ ॥

बलेन महताऽऽस्कन्द्य मैनाकपितरं गिरिम् ।
प्रलयोदन्वदारोहमाकालिकमलम्भयत् ॥ ११४ ॥

बलेति—महता । बलेन सैन्येन । मैनाकस्य पितरं गिरिं हिमवन्तं । आस्कन्द्य आक्रम्य । आकालिकं अकालभवं । प्रलयोदन्वदारोहं प्रलयार्णवस्यारोहणं । अलम्भयत् अगमयत् ॥ ११४ ॥

समाजमिव शैलानां विश्वरूपमिव प्रभुम् ।
उत्तम्भनमिव व्योम्नः स निदध्यौ सकौतुकम् ॥११५॥

समाजमिति—सः सात्यकिः । शैलानां समाजमिव सर्वशैलसमाहारमिव । विश्वरूपं [4]धृतवैराजरूपं । प्रभुं विष्णुमिव । व्योम्नः । उत्तम्भनं धारस्तम्भ[5]मिव च स्थितं । तं हिमवन्तम् । सकौतुकम् । निदध्यौ ध्यायति स्म । वैपुल्यतुङ्गत्वाभ्यामित्थमुत्प्रेक्षा । उत्प्रेक्षाद्वयसन्दंशात्स्कान्मध्यम इवशब्दोऽपि सम्भावनापर इति तत्राप्युत्प्रेक्षैव ॥ ११५

---

[1] य तथोक्ताः–छ. [2] 'अवरोधं निरोधं' इत्यर्थान्तरमप्यत्र प्रतीयते. [3] सम्राजमि. दे. मु. [4] धृतविराड्रूपं–छ. [5] मिव स्थितं–छ.

श्वशुरं भूतनाथस्य स्कन्दमातामहं गिरिम् ।
प्रसूतिं सर्वरत्नानां पृथिवीधेनुतर्णकम् ॥ ११६॥

श्वशुरमिति—भूतनाथस्य पशुपतेः । श्वशुरम् । स्कन्दमातामहं । सर्वरत्नानां प्रसूतिं उत्पत्तिस्थानं । पृथिव्येव धेनुः तस्याः तर्णकं वत्सम् । गिरिं हिमवन्तं, सकौतुकं निदध्याविति पूर्वेणान्वयः । श्वशुरं भूतनाथस्येत्यनेनैव सिद्धस्य स्कन्दमा[1]तामहत्वस्य कण्ठोक्तिः तेनापि रूपेण गिरेर्गौरवं प्रकाशयितुम् । पुरा गोरूपायां पृथिव्यां हिमवन्तं वत्सं कृत्वा धातुरत्नादीनि गिरयो दुदुहुरिति पृथुचरितकथाऽत्रानुसन्धेया ॥ ११६ ॥

गृहीतास्त्याजितत्रासा मेनापतिवनौकसः ।
मार्गमादिदिशुस्तस्य वह्नेरिव समीरणाः ॥ ११७ ॥

गृहीता इति--सैनिकैरारोहणमार्गप्रदर्शनाय गृहीताः । त्याजितत्रासाः त्याजितवधादिभयाः । मेनायाः पत्युर्हिमवतो वनमोको येषां ते किरातादयः । तस्य सात्यकेः । समीरणाः । वह्नेरिव । मार्गमादिदिशुः हिमवदधित्यकारोहणमार्गं प्रदर्शयामासुः ॥ ११७ ॥

तमारुह्य निरैक्षन्त जिघृक्षन्त इवान्धकाः ।
विकल्पितरवीन्द्वग्नीन्मेरुकैलासमन्दरान् ॥ ११८॥

तमारुह्येति—अन्धकाः अन्धकवंश्या यादवाः । तं हिमवन्तम् । आरुह्य, विकल्पिताः सञ्जातविकल्पा रवीन्द्वग्नयो यैस्तान्, तेजस्त्रयसदृशान् । मेरुकैलासमन्दरान् जिघृक्षन्तः ग्रहीतुमिच्छन्त इव । निरैक्षन्त सतृष्णातिरेकमपश्यन्नित्यर्थः ॥ ११८॥

[1] मातामहस्योक्तिः—घ.

[1]ददर्श गगनं तत्र दिवाऽपि व्यक्ततारकम् ।
गौरीहारमणिप्रख्यैर्गङ्गानिर्झरशीकरैः ॥ ११९ ॥

ददर्शेति—तत्र हिमवति । गौरीहारमणिप्रख्यैः पार्वत्या हारमणीनां सदृशैः । गङ्गानिर्झरशीकरैः गङ्गाप्रपातोत्थितैरम्बुकणैः । दिवाऽपि । स्पष्टतारकं व्यक्तनक्षत्रं, नक्षत्रैरिव शीकरैर्व्याप्तम् । गगनम् । ददर्श । सात्यकिरिति शेषः, ददर्शेत्येकवचनात् । अनन्तरत्नप्रभवस्य पर्वतराजस्य दुहितुरत्यन्तमभिजाता हारमणयः सम्भवन्तीति गौरीहारमणिप्रख्यैरित्युक्तम् ॥ ११९ ॥

सुभगां किन्नरीणां च स्वगुणामोदमेदुराम् ।
गीतिं [2]निशामयामास गजशार्दूलकर्षणीम् ॥ १२० ॥

सुभगामिति—स्वगुणानां विक्रमादीनामामोदः [3]सौरभं तेन मेदुरां सान्द्रस्निग्धाम् । सुभगां मनोज्ञां । अत एव गजानां शार्दूलानां च गीतिरसानभिज्ञानां तिरश्चामपि कर्षणीं । किन्नरीणाम् । गीतिं । निशामया[4]मास आकर्णयामास । चकारः [5]पूर्वश्लोकक्रियासमुच्चये ॥ १२० ॥

गुहासु [6]यमिनां मेने सैन्यघोषमशृण्वताम् ।
शृण्वतामपि सिंहानां समं सामि[7]निमीलनम् ॥ १२१ ॥

गुहास्विति—गुहासु कन्दरासु । सैन्यघोषमशृण्वतां योगिनां । तं शृण्वतां सिंहानां च । समं एक[8]रूपम् । सामिनि[9]मीलनं । मेने ।

---

[1] ददृशे–ग्र. दे. मु. [2] निशामयामासुः–ग्र. दे. मु. [3] सौरभवत्तया कथनं तेन मेदुरां सान्द्रां सैन्यस्निग्धां–छ. [4] मास शुश्राव–च. [5] पूर्वश्लोकसमुच्चयाय–घ. ट. [6] [illegible] नेत्रे–दे. मु. [7] सामि नमीलितं–ग्र. दे. मु. [8] एककालं–घ. [9] निमीलितं–ग्र. दे. मु.

चित्तस्य ध्येयैकपरतया महान्तमपि सैन्यघोषमशृण्वतां योगिनां श्रुत्वाऽप्यलक्षीकुर्वतां सिंहानां च नेत्रमीलनमेकरूपमिति विचारितवानित्यर्थः ॥ १२१ ॥

[1] अपश्यत्तत्र दूरस्थमन्तिकस्थमिवोन्मुखः [2] ।
कैलासं किन्नरेन्द्रस्य कीर्तिकन्दमिवोत्थितम् ॥ १२२ ॥

अपश्यदिति—तत्र हिमवच्छिखरे । धवलत्वात्किन्नरेन्द्रस्योत्थितं, कीर्तेः कन्दमिव स्थितम् । कैलासं । दूरस्थमपि अतिदूरे तिष्ठन्तमपि । अत्युन्नतत्वात् अन्तिकस्थमिव । उन्मुखः उन्नामितमुखस्सन् । अपश्यत् ॥ १२२ ॥

चमरान् सिंहशावांश्च गन्धनाभिमृगानपि ।
जगृहुस्तत्र वार्ष्णेयाः प्रियासम्प्रीणनार्थिनः ॥ १२३ ॥

चमरानिति—तत्र । वार्ष्णेयाः वृष्णि[3]वंश्या राजानः । प्रियासम्प्रीणना[4]र्थिनः स्वप्रेयसीनां सन्तोषमर्थयमानास्सन्तः । चमरान् वालमृगान् । सिंहशावान् सिंहशिशून् । गन्धनाभिमृगान् कस्तूरीमृगानपि । जगृहुः, तासां क्रीडनार्थमिति भावः ॥ १२३ ॥

गुञ्जाहारभृतः श्यामा [5] बर्होल्लासितकुन्तलाः ।
प्रवालवसनाः प्रेक्ष्य जहसुश्शबराङ्गनाः ॥ १२४ ॥

गुञ्जेति—गुञ्जाहारभृतः गुञ्जाबीजकृतान् हारान् बिभ्रतीः, श्यामाः श्यामलवर्णाः । बर्होल्लासितकुन्तलाः मयूरपिञ्छशेखरैर्द्योतितालकाः, प्रवालवसनाः पल्लवाम्बराः । शबराङ्गनाः । प्रेक्ष्य । जहसुः । वार्ष्णेयाः कर्तारः । वेषविकारादिति भावः ॥ १२४ ॥

---

1 अपश्यंस्तत्र-ग्र. मु. 2 मिवोन्मुखाः–ग्र. मु. 3 वंशराजानः–छ.
4 र्थिनः प्रेयसीनां–ट. 5 बर्होत्तंसित–घ. ट.

**शिखरांसपरिष्कारैस्सैन्यद्विपमदैर्बभौ ।**
**कल्कितः क्ष्माभृतां नाथः कस्तूरीस्थासकैरिव ॥ १२५ ॥**

**शिखरेति**—शिखराण्यंसाः स्कन्धा इव तेषां परिष्कारैः । सैन्यद्विपानां मदैः मदजलैः । कल्कितः [1]मलिनितः, श्यामलितः । क्ष्माभृतां नाथः पर्वतेन्द्र एव राजेन्द्रः । कस्तूरीरूपैः स्थासकैः अङ्गलिप्तगन्धद्रव्यै राजोचितैः । कल्कित इव बभौ ॥ १२५ ॥

**श्रुत्वा गिरिगुहानूक्तं तत्सैन्यगजगर्जितम् ।**
**अपि [2]सिंहाः पलायन्त वन्यद्विरदभेदिनः ॥ १२६ ॥**

**श्रुत्वेति**—गिरिगुहानूक्तं प्रतिध्वनिना अनूदितं । तस्य सात्यकेः सैन्यगजानां गर्जितं बृंहितम् । श्रुत्वा । वन्यद्विरदभेदिनः वन्यगजभेदनशीलाः । सिंहा अपि । पलायन्त । [3]किमुतान्ये सत्त्वा इति भावः ॥ १२६ ॥

**प्रदीप्तरत्नशिरसं प्रालेयपरिपाण्डुरम् ।**
**प्रदक्षिणं व्यतीयाय शेषयित्वा महीधरम् ॥ १२७ ॥**

**प्रदीप्तेति**—प्रदीप्तरत्नानि शिरांसि शृङ्गाणि यस्य तं । प्रालेयैः परितः पाण्डुरम् । महीधरं भुवो धारकं हिमवन्तम् । शेषयित्वा, अवशेष्य, बहिर्भाव्य । प्रदक्षिणं व्यतीयाय भुवं प्रदक्षिणं यथा तथा व्यतिक्रान्तवान् । अथवा उभयतस्समुद्रं प्रविष्टस्य हिमवतः कार्त्स्न्येन

---

[1] मलिनितः क्ष्माभृतां–घ. ट. [2] अत्रत्यसिंहपदस्य गुहाबहिर्गतसिंहपरत्वात्, बलवत्प्रतिस्पर्धिगजबृंहणं प्रतिध्वनिबहूकृतं गुहाबहिर्गतानां सिंहानामपि भयानकमिति गुहासु यमिनां इति श्लोके तु गुहान्तर्गतसिंहपरत्वमिति तत्र सैन्यपदेन गजानामविवक्षणमिति वाऽभ्युपेत्य कथंचित्प्रतीयमानो विरोधः परिहार्यः । अनयोः श्लोकयोरन्यतरः प्रक्षिप्तो वा स्यात्. [3] किमुतान्य इति–घ. ट.

प्रदक्षिणीकर्तुमशक्यत्वात्, पूर्वापरभागयोः किञ्चिदवशेष्य [1]तमेव व्यतीयायेति योजना। शेषयित्वेत्यनेन शेषं नागराजं कृत्वेत्यपि प्रतीयते। विशेषणानि तत्रापि योज्यानि ॥ १२७॥

**अथ कस्तूरिकामोदैरधिवासितभूधरान्।**
**यशसाऽऽवास्य नेपालान् यदुवीरः [2]स्वदेशयत् ॥ १२८॥**

**अथेति**—अथ उत्तरादिग्विजयानन्तरम्। यदुवीरः सात्यकिः। कस्तूरिकानां कस्तूरीमृगाणां आमोदैः परिमलैः। अधिवासितभूधरान् भृशं परिमलीकृताः पर्वता येषु तान्। नेपालान् देशविशेषान्। [3]यशसा आवास्य कीर्त्या परिमलीकृत्य। [4]स्वदेशयत् स्वदेशवत्स्वाधीनानकरोत्॥ ॥ १२८॥

**पर्वतेन्द्रप्रतिनिधीन् प्रागुत्तरमहीधरान्।**
**सुप्रतीकविषाणाग्रैरवैक्षत गवाक्षितान् ॥ १२९॥**

**पर्वतेन्द्रेति**—पर्वतेन्द्रप्रतिनिधीन् हिमवत्सदृशान्। सुप्रतीकस्य ईशानदिग्गजस्य विषाणाग्रैः। गवाक्षितान् गवाक्षवतः कृतान्, वप्रक्रीडया छिद्रितान्। प्रागुत्तरान् प्राक्सहचरितान् उत्तरान् ईशानदिग्भवान्महीधरान्। अवैक्षत॥ १२९॥

**द्वीपपर्वतदुर्गेषु द्विपसिंहनिभान् द्विपः।**
**सङ्ग्राममृगयास्थायी जग्राह च जघान च॥ १३०॥**

**द्वीपेति**—सङ्ग्राममृगयास्थायी सङ्ग्रामो मृगयेव तत्र साधुस्थितिमान्। [5]साधुकारिणि णिनिप्रत्ययान्तो निपातः। द्वीपपर्वतदुर्गेषु दुराक्रम-

---

[1] तमेव प्रदक्षिणं व्यती—च. [2] स्वदेशयन्—दे. मु. [3] यशसा तस्य कीर्त्या—घ. ट. [4] 'अस्वदेशयत्' इति शुद्धः पाठः स्यात्. [5] 'साधुकारिणि णिनि प्रत्ययः' इति पाठेनात्र भाव्यम्। 'साधुकारिण्युपसंख्यानम्' (वा. २०३८) इति वार्तिकेन णिनिप्रत्यय इति तदाशयः.

पुरेषु । द्विपान्सिंहनिभान् । द्विषः जग्राह च जघान च द्विपानिव कांश्चि- ज्जग्राह सिंहानिव कांश्चिज्जघान च । युद्धादन्यत्र राज्ञां गजा न वध्या इति शास्त्रमर्यादा ॥ १३० ॥

प्रभञ्जन इवाम्भोदान् पक्षीन्द्र इव पन्नगान् ।
प्राच्यान् प्रच्यावयामास पञ्चवक्त्र इव द्विपान् ॥ १३१ ॥

प्रभञ्जन इति—वायुरम्भोदानिव । पक्षीन्द्रः पन्नगानिव । पञ्चवक्त्रः सिंहो द्विपानिव । प्राच्यान् । प्रच्यावयामास । केषाञ्चिदुत्सारणेन अन्येषां ग्रहणेनापरेषां हननेन च सर्वानपि स्थान[1]च्युतानकरोदित्युप- मात्रयतात्पर्यम् ॥ १३१ ॥

शोषितप्राच्यजलधिश्शौर्यबाडववह्निना ।
ससर्ज तद्वधूचित्तेष्वशोष्यं शोकवारिधिम् ॥ १३२ ॥

शोषितेति—शौर्यमेव बाडववह्निस्तेन । शोषिताः प्राच्या एव जलधयो येन स सात्यकिः । तद्वधूनां प्राच्यस्त्रीणां । चित्तेषु । अशोष्यं । शोकमेव वारिधिम् । ससर्ज ॥ १३२ ॥

यदूनां हेतयस्तत्र शत्रुशोणितपाटलाः ।
प्रतापज्वलनज्वालासम्पदं प्रतिपेदिरे ॥ १३३ ॥

यदूनामिति—तत्र प्राग्देशे । शत्रूणां शोणितैः पाटला अरुण- वर्णाः । यदूनाम् । हेतयः शस्त्राणि । प्रतापज्वलनस्य ज्वालायास्सम्पदं श्रियम् । प्रतिपेदिरे प्रापुः । प्रतापाग्निज्वाला इव बभुरित्यर्थः ॥ ॥ १३३ ॥

---

[1] च्युतानकरोदिति त्रिधा तात्पर्यम्—घ. ट.

कृपाणिकाभिः कुकुराः कम्पिताभिरकम्पयन् ।
द्विषतां तद्वधूनां च चित्तदक्षिणलोचने ॥ १३४ ॥

कृपाणिकाभिरिति—कुकुराः कुकुरवंश्याः । कम्पिताभिः । कृपाणिकाभिः खड्गैः द्विषतां तद्वधूनां च चित्तदक्षिणलोचने । अकम्पयन् । यथाक्रममन्वयः । चित्तस्य कम्पो भयं, लोचनस्य स्फुरणम् ॥ १३४ ॥

विजह्रुर्यादवास्तत्र विबुधस्त्रीवरप्रदाः ।
शराणां [1]लक्षदातारश्शत्रुसम्मतविक्रमाः ॥ १३५ ॥

विजह्रुरिति—तत्र प्राग्देशे । यादवाः । विबुधस्त्रीवरप्रदाः अप्सरसामभिमतपतिप्रदाः । शराणाम् । लक्षदातारः विषयदातारः । शत्रुसम्मतविक्रमाः शत्रूणामपि बहुमानविषयपराक्रमाश्च सन्तः । विजह्रुः युद्धकेलिषु विहरन्ति स्म ॥ १३५ ॥

यादवास्तत्र शत्रूणां [2]कृत्तेषु नूनमप्रतीन् ।
[3]आशातधन्वा दृश्येषु शिरोजालेषु सायकान् ॥

(घकोशेऽधिकमेकं व्याख्यारहितं दृश्यते)

विक्रमप्रभवे तेषां विजयश्रीस्वयंवरे ।
[4] वन्दिकृत्यं [5]द्विषश्चक्रुरप्सरोभिः स्वयंवृताः ॥ १३६ ॥

[6]विक्रमेति—अप्सरोभिः स्वर्गयोषिद्भिः । स्वयंवरतया वृताः । द्विषः सात्यकेश्शत्रवः । विक्रमप्रभवे पराक्रमेण सम्भाविते । विजयश्रियः जयलक्ष्म्याः । स्वयंवरे । वन्दिकृत्यं स्तुतिपाठकानां कार्यम् । चक्रुः कृतवन्तः । वन्दिवदस्तुवन्नित्यर्थः ॥ १३६ ॥

---

[1] लक्ष्य–घ. [2] कृत्तेषून्नमप्रतीन्. [3] अधिज्यधन्वा व्यकिरत् शिरोजातेषु सायकान् –ग्र. दे. मु. [4] बन्दीकृत्य द्विष–ग्र. दे. मु. [5] द्विषश्चक्रुः स्वर्गयोषित्स्वयंवृताः–ट.
[6] विक्रमेति ॥ स्वर्गयोषिद्भिः अप्सरोभिः स्वयंवरतया–घ. ट.

**रमापतिपदोत्पन्नां रत्नाकरपतिंवराम् ।**
**पुण्यां सरितमासीदत्पुरभिन्मौलिमालिकाम् ॥ १३७ ॥**

**रमापतीति**—रमापतेः पदादुत्पन्नाम् । रत्नाकरस्य समुद्रस्य पतिंवरां, स्वयंवरप्रवृत्ता पतिंवरोच्यते । 'संज्ञायां भृतॄवृजि' (पा. सू. ३-२-४६) इत्यादिना खश्, मुमागमश्च । पुरभिदो मौलेः किरीटस्य मालिकाम् । पुण्यां पावनीम् । सरितं गङ्गां आसीदत् प्राप्तवान् ॥ १३७ ॥

**स मेने जाह्नवीं यान्तीमर्थमेकमिवार्णवम् ।**
**प्रवाहैर्बहुधा भिन्नैर्भाषाभिरिव भारतीम् ॥ १३८ ॥**

**स इति**—सः सात्यकिः एकमर्थं प्रतिपाद्यमिव । एकमर्णवम् । भाषाभिः संस्कृतादिभिरिव । बहुधा । भिन्नैः । प्रवाहैः । यान्तीम् । जाह्नवीं गङ्गाम् । भारतीं सरस्वतीम् । मेने । उक्तरूपसाम्यादिति भावः । यद्यप्युपमानोपमेयभाषा[1]प्रवाहलिङ्गभेदो दोषः, तथाऽपि नात्यन्तममुं दोषमाद्रियन्ते कवयः । तथा कुमारसम्भवेऽपि दृश्यते —

तस्मिन्नुपायास्सर्वे नः क्रूरे प्रतिहतक्रियाः ।
वीर्यवन्त्यौषधानीव विकारे सान्निपातिके ॥

इति ॥ १३८ ॥ (कुमारसम्भवे २-४८)

**कृपाणधारातीर्थेन शोधयित्वा कृतागसः ।**
**त्रिदिवं प्रापयामास वङ्गांस्त्रिपथगान्तरे ॥ १३९ ॥**

**कृपाणेति**—कृतमागः अपराध एव पापं यैस्तान् —

" आगः किल्बिषमेनश्च त्रयं पाप्माऽपराधयोः "

इति यादवः । वङ्गान् वङ्गदेशस्य राज्ञः । त्रिपथगान्तरे गङ्गाया मध्ये, तत्स्रोतसां मध्यदेशे[2] । कृपाणधारैव तीर्थं तेन । शोधयित्वा । त्रिदिवं

[1] प्रवाहलिङ्गे दोषः–घ. ट. [2] देशीयान्–छ.

स्वर्गम् । प्रापयामास । पापिनः पुण्य[1]क्षेत्रे शोधनीया इति भावः ॥ १३९ ॥

**विक्षिपन् भुवि निस्त्रिंशो वक्त्रपुष्पाणि वैरिणाम् ।**
**रणरङ्गनटस्यास्य सूत्रधार इवाभवत् ॥ १४० ॥**

**विक्षिपन्निति**—वैरिणां शत्रूणाम् । वक्त्राण्येव पुष्पाणि । भुवि विक्षिपन् विकिरन् । निस्त्रिंशः खड्गविशेषः । रणरङ्गः रणखल एव रङ्गः नृत्यस्थानं, तस्मिन् नटस्य । अस्य सात्यकेः । सूत्रधारः—

आसूत्रयन् गुणान्नेतुः कवेरपि च वस्तुनः ।
रङ्गप्रसाधनप्रौढस्सूत्रधार इहोदितः ॥

इत्युक्तलक्षणः पात्रविशेष इव । अभवत् । स हि पुष्पाञ्जलिं विकीर्य प्रवर्तते ॥ १४० ॥

**सैन्यदन्तिमदोपेतैश्शत्रुस्त्रीबाष्पकज्जलैः ।**
**गङ्गां रविसुतां चक्रे यशसा तां च तन्मयीम् ॥ १४१ ॥**

**सैन्येति**—सैन्यदन्तिमदोपेतैः सेनागजमदजलसहितैः । शत्रुस्त्रीणां बाष्पकज्जलैः अश्रुसहचरितैरञ्जनैः । गङ्गाम् । रविसुतां नैल्येन यमुनां । चक्रे । तां यमुनां च । यशसा । तन्मयीं धावल्येन गङ्गारूपाम् । चक्रे ॥ १४१ ॥

**आत्तसारा द्विषस्तत्र मुक्तास्तेन महीयसा ।**
**अदृश्यन्त यथापूर्वं दन्तिभुक्तकपित्थवत् ॥ १४२ ॥**

**आत्तसारा इति**—तत्र [2]वङ्गदेशे । महीयसा महत्तरेण । तेन सात्यकिना । आत्तसाराः गृहीत[3]निखिलोत्तमधनाः । मुक्ताः [4]विसृष्टाः ।

---

[1] क्षेत्रेषु–घ. ट. क्षेत्रशोधनीया–छ. [2] वङ्कदेशे–छ. [3] निखिलधनाः–घ. ट.
[4] विसृष्टद्विषः–घ. ट.

द्विषः । दन्तिभुक्तकपित्थवत् । यथापूर्वमदृश्यन्त । दन्तिना भुक्तं कपित्थफलं अन्तस्सर्वात्मना आत्तसारमपि उपरि यथापूर्वं [1] दृश्यत इति प्रसिद्धिः ॥ १४२ ॥

पृथुवीचिगणां तीर्त्वा पृथिवीसहजां नदीम् ।
बाधिताशेषगौडेन बलेनार्णवमाद्रवत् ॥ १४३ ॥

पृथुवीचीति—पृथुवीचिगणां पृथुरुतरङ्गनिकराम् । [2] पृथिवीसहजां भगवत्पदोत्पन्नत्वात् । "पद्भ्यां भूमिः" इति श्रुतिः । नदीं गङ्गाम् । तीर्त्वा । बाधिताशेषगौडेन अतिमहत्त्वात्पीडितनिखिलगौडदेशेन । बलेन सैन्येन । अर्णवं । आद्रवत् अगच्छत् ॥ १४३ ॥

[3] अलभन्त महीपालाः पुरतस्तस्य निर्भयाः ।
नतेन धनुषा नाकं वपुषा च वसुन्धराम् ॥ १४४ ॥

अलभन्तेति—तस्य सात्यकेः । पुरतः । ये निर्भयाः धनुरारोप्य योद्धुमागताः ते वीराः । नाकमलभन्त स्वर्गं [4] प्राप्ताः । ये तु शरणागतान् रक्षिष्यतीति विश्वासेन निर्भयाः [5] तं शरणमागत्य प्रणेमुः ते यथापूर्वं प्रतिष्ठापिता इति श्लोकार्थः । 'अलभन्त क्षणाचेषाम्' (२२ सर्गे–८८ श्लो.) इति श्लोकेन गतार्थोऽयम् । प्रायोऽन्यतरः प्रक्षिप्त[6] इति भाति ॥ १४४ ॥

विशन्तो वाहिनीं तस्य त्रिस्रोतसमिवापराम् ।
त्रिदिवं प्रत्यपद्यन्त प्रतियोधा निरागसः ॥ १४५ ॥

विशन्त इति—अपराम् । त्रिस्रोतसं गङ्गामिव स्थिताम् । तस्य । वाहिनीं सेनाम् । विशन्तः । प्रतियोधाः । निरागसः

---

[1] दृश्यमिति–च. [2] पृथिवीसदृशां–घ. ट. [3] अयं श्लोको देवनागरग्रन्थाक्षरमुद्रितमूलकोशयोर्न दृश्यते. [4] प्रापिताः–च. [5] अत्र 'नतेन वपुषा उपलक्षिताः वसुन्धरां भूमिं प्राप्ताः । ये' इत्यर्थकग्रन्थेन स्फुटतरेण भाव्यमिति भाति. [6] 'इति भाति' इति च–छ–कोशयोर्न दृश्यते.

[1] अवधदण्डादपेतापराधाः, गङ्गास्नानादपेतपापाश्च । त्रिदिवं प्रत्यपद्यन्त स्वर्गं प्रापुः । 'आगः किल्बिषमेनश्च त्रयं पाप्मापराधयोः' इति [2] यादवः ॥ १४५ ॥

कुटिलान् प्रगुणीकृत्य स्वनामाक्षरभूषितान् ।
जङ्गमान् दर्शयामास जयस्तम्भान् महीतले ॥ १४६ ॥

कुटिलानिति—कुटिलान् प्रगुणीकृत्य शरानरातींस्तत्तदुचितदण्डेन ऋजूकृत्य । स्वनामाक्षरभूषितान् स्वनामधारणेन तद्वर्णैर्भूषितान्। कृत्वेति शेषः । महीतले । जङ्गमान् चरिष्णून् । जयस्तम्भान् । दर्शयामास। यथा वक्रान्तान् दारुभेदान् तक्षणादिना ऋजूकृत्य स्वनामचिह्नान् जयस्तम्भान् कुर्वन्ति तद्वदित्यर्थः ॥ १४६ ॥

शालीनिव सतस्त्रातुं तत्र तत्र प्ररोहतः।
यवसौघनिभान्याप्यानुज्जहार यदूद्वहः ॥ १४७ ॥

शालीनिति—यदूद्वहः यदुश्रेष्ठः । सतः साधून् । शालीनिव । त्रातुं । तत्र तत्र देशे । प्ररोहतः । यवसौघनिभान् [3] तृणसङ्घतुल्यान् । याप्यान् निकृष्टान् म्लेच्छादीन् । उज्जहार उद्धृतवान् । "यवसं तृणमर्जुनं" "निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः" इत्यमरः ॥ ॥ १४७ ॥

प्रतापाग्निं पुरस्कृत्य भूयस्सागरवाससः ।
वेलावलयसम्पन्नं करं जग्राह तत्र सः ॥ १४८ ॥

प्रतापाग्निमिति—प्रतापमेवाग्निं । पुरस्कृत्य । सागरवाससः समुद्रवसनाया [4] भुवः । वेलावलयसम्पन्नम् । करं बलिम् । जग्राह ।

---

1 अवयवदण्डा–छ. 2 इति विश्वः–घ. अयं मुद्रिते विश्वकोशे तु नोपलभ्यते. 3 घासयवसयोः तृणार्जुनयोश्च पर्यायता सुधायाममिमता दृश्यते । 4 अनेन मूले 'भुवः-सागर इत्यत्र 'भुवस्सागर' इति पाठ इति भाति.

विवाहाग्नेः पुरतस्सद्यः पारिणीतायाः कन्यकायाः कङ्कणयुक्तं पाणिमि-
वेति भावः ॥ १४८ ॥

**पुरन्दरसमः पूर्वे जित्वा पौरन्दरीं दिशम्।**
**दीक्षितस्सत्परित्राणे दक्षिणाभिमुखोऽभवत् ॥ १४९ ॥**

पुरन्दरेति—पुरन्दरसमः इन्द्रतुल्यः स सात्यकिः। पूर्वम्। पौरन्दरीं ऐन्द्रीं। दिशम्। जित्वा। सतां परित्राणे। दीक्षितः कृतव्रतस्सन्। दक्षिणाभिमुखः दक्षिणाशाभिमुखः। अभवत्। दीक्षितस्य दक्षिणायामृत्विजां भृतिदाने आभिमुख्यमुचितमिति भावः॥ १४९ ॥

**उपदीकृत्य सर्वस्वमुपसन्नयदूद्वहाः।**
**प्राचीमविकलामृद्धिमुत्कलाः प्रतिपेदिरे ॥ १५० ॥**

उपदीकृत्येति—सर्वस्वं सर्वमात्मीयं धनम्। उपदीकृत्य उपायनीकृत्य। उपसन्नयदूद्वहाः शरणीकृतयदुश्रेष्ठाः। उत्कलाः उत्कलदेशस्य राजानः। प्राचीं प्राक्तनीम्। अविकलां अन्यूनाम्। ऋद्धिम्। प्रतिपेदिरे। शरणागतत्राणधुर्येण तेन सर्वं प्रत्यर्पयता यथा[1]पूर्वमवस्थापिता इत्यर्थः॥ १५० ॥

**प्रहितानथ कालिङ्गैः पन्थानमुपरुन्धतः।**
**रुरोध सिंहनादेन यदुसिंहस्स सिन्धुरान् ॥ १५१ ॥**

प्रहितानिति—अथ। सः। यदुसिंहः यदुश्रेष्ठः। कलिङ्गदेशभवैः। प्रहितान्। पन्थानम्। उपरुन्धतः। सिन्धुरान् सिंहनादेन क्ष्वेलितेन। रुरोध रुद्धवान्, भग्नोद्यमान् चकारेत्यर्थः। सिंहनादेन गजानां निरोधो भवतीति भावः॥ १५१ ॥

---

[1] पूर्वं स्थापिताः—घ. ङ.

स तान् गैरिकरक्ताङ्गान् सप्तधा स्रुतनिर्झरान् ।
जङ्गमानिव विन्ध्यादीन् जगृहे गन्धहस्तिनः ॥ १५२ ॥

स इति—सः सात्यकिः । गैरिकेण गैरिकधातुमण्डनेन रक्ताङ्गान् । सप्तधा कटादिस्थानसप्तकप्रभवतया सप्तभिः प्रकारैः । स्रुतनिर्झरान् स्रुतमदप्रवाहान् । अत एव जङ्गमान् । विन्ध्यादीनिव स्थितान् । गन्धहस्तिनः चन्दनहरितालादिगन्धयुक्तहस्तिनः क्षत्रियजातीयगजान् । जगृहे स्वार्थे गृहीतवान् ।

"करात्कटाभ्यां मेढ्राच्च नेत्राभ्यां च मदस्रुतिः"

इति गजशास्त्रम् । करात्कररन्ध्राभ्यामित्यर्थः । गजेषु क्षत्रियजातीयलक्षणमपि तत्रैवोक्तम्—

भद्रः श्रीहरितालगुग्गुलशिलागन्धोऽतिशूरो रणे
नानाशस्त्रनिपातवेगसहनः स्तम्बेरमः क्षत्रियः ॥

इति ॥ १५२ ॥

प्रतियुध्य परिश्रान्तान् गृहीत्वा गजयोधिनः ।
चक्रलिङ्गधरांश्चक्रे कालिङ्गान् किङ्करीकृतान् ॥ १५३ ॥

प्रतियुध्येति—प्रतियुध्य प्रतीपं युद्धं कृत्वा । परिश्रान्तान् । गृहीत्वा । किङ्करीकृतान् । कालिङ्गान् कलिङ्गराजसम्बन्धिनः । गजयोधिनः आधोरणान् । चक्रलिङ्गस्य निजपरिचारकत्वचिह्नस्य धरान् । चक्रे ॥ १५३ ॥

स तेषामपि सामन्तानाहूतान्विन्ध्यदुर्गतः ।
दक्षान् द्विरदशिक्षायां चक्रे निजनिषादिसात् ॥ १५४ ॥

स इति—सः सात्यकिः । द्विरदशिक्षायां गजशिक्षणे । दक्षान् । विन्ध्य एव दुर्गं ततः । आहूतान् गृहीतकालिङ्गमुखेनानीतान् ।

तेषां कालिङ्गानाम्। सामन्तान् राज्यसन्धिस्थितानपि गजशिक्षकान्। निजनिषादिसात् [1] निजहास्तिपकाधीनान्। चक्रे। [2] "तदधीनवचने च" (पा. सू. ५-४-५३) इति सातिप्रत्ययान्तमव्ययम्॥ १५४॥

वैरिवारणमूर्धन्यैर्मौक्तिकैर्लाजतां गतैः।
रणाग्निर्दर्शयामास व्यूढां तेन जयश्रियम्॥ १५५॥

वैरीति—रणाग्निः रणे अग्निरिव ज्वलन् सात्यकेः प्रतापः। वैरिवारणमूर्धन्यैः शत्रुगजमूर्धभवैः। लाजतां गतैः लाजत्वं प्राप्तैः, विवाहाग्नौ लाजवत्पतितैः। मौक्तिकैः। तेन सात्यकिना। जयश्रियम्। व्यूढां परिणीताम्। दर्शयामास प्रकटयामास॥ १५५॥

दारितद्विरदांस्तत्र सिंहानिव महाजवान्।
ननन्द स्वभटान् दृष्ट्वा नखराश्रितमौक्तिकान्॥ १५६॥

दारितेति—तत्र कलिङ्गदेशे। सिंहानिव। दारितद्विरदान्। नखराश्रितमौक्तिकान् कुम्भविदारणसमये नखलग्नमुक्ताफलान्। महाजवान्। स्वान् भटान्। दृष्ट्वा। ननन्द॥ १५६॥

विपक्षान् भूभृतस्तत्र कुर्वता निर्विचेष्टितान्।
देवो हरिहयस्तेन द्विरूपत्वमिवान्वभूत्॥ १५७॥

विपक्षानिति—तत्र देशे। विपक्षान् भूभृतः शत्रुपार्थिवान्। निर्विचेष्टितान् निर्गतयुद्धादिचेष्टितान्। कुर्वता। तेन सात्यकिना। हरिहयः देवः इन्द्रः। द्विरूपत्वमन्वभूदिव। इन्द्रोऽपि भूभृतः पर्वतान् विपक्षान् पतत्ररहितान्, अत एवोत्पतनादिचेष्टारहितान् कृतवान्। तेन सामान्येन सात्यकिरपीन्द्रस्य [3]रूपान्तरमिवाभवदित्यर्थः॥ १५७॥

---

[1] निजहस्तिपकाधीनान्—घ. ट. [2] अत्र सूत्रे चकाररहितस्सूत्रपाठे ऽष्टाध्याय्यादौ दृश्यते. [3] रूपान्तर इव—घ. ट.

अपर्युषितपानीयामनघस्रोतसं शुभाम् ।
गङ्गामिव विभक्ताङ्गीं प्राप गोदावरीं ततः ॥ १५८ ॥

अपर्युषितेति—ततः अनन्तरं । अपर्युषितपानीयां चिरकालादिषु गृहीत्वा स्थापनेऽपि पर्युषितधर्मदौर्गन्ध्यादिदोषरहितजलाम् । अनघमघविरोधि निखिलपापहारि स्रोतो यस्यास्तां । शुभां श्रेयस्करीं स्वर्गापवर्गप्रदां । अत एव विभक्ताङ्गीं विभक्तैकदेशां । गङ्गामिव स्थितां । गोदावरीं । प्राप ॥ १५८ ॥

[1]अशालीनमनस्त्वेऽपि स्वाश्रितत्राणमिच्छताम् ।
आन्ध्राणामात्मदातॄणां ददावभयदक्षिणाम् ॥ १५९ ॥

अशालीनेति—अशालीनमनस्त्वेऽपि धृष्टचित्तत्वेऽपि । स्वाश्रितानां त्राणमिच्छतां । अत एवात्मदातॄणां प्रपन्नानां । आन्ध्राणां आन्ध्रदेशस्य राज्ञां । अभयमेव दक्षिणां तेषामात्मदानस्य प्रत्युपकाररूपां दक्षिणां । ददौ । आन्ध्राणामिति [2] सम्बन्धसामान्ये षष्ठी ॥ ॥ १५९ ॥

पतिरक्षणतुष्टानां स्वगुणग्रथिताक्षरैः ।
आन्ध्रेश्वरपुरन्ध्रीणां सङ्गीतैः प्रत्यनन्दत ॥ १६० ॥

पतीति—पतीनां रक्षणेन तुष्टानां । आन्ध्रेश्वरपुरन्ध्रीणां आन्ध्रराजकुटुम्बिनीनां । स्वस्य गुणैः पराक्रमादिभिः ग्रथितान्यक्षराणि येषां तैः । सङ्गीतैः गानैः । प्रत्यनन्दत ॥ १६० ॥

1 अयं श्लोको ग्रन्थाक्षरदेवनागराक्षरमुद्रितमूलकोशयोर्न दृश्यते. 2 संप्रदानत्वविवक्षणे चतुर्थी स्यादिति भावः.

आद्यं द्रमिडदेशानां तुण्डीरमथ मण्डलम् ।
विवेश भूषितं यूपैर्वेधसो वाजिमेधिकैः ॥ १६१ ॥

आद्यमिति—अथ । द्रमिडदेशानां । आद्यं आदिभवं, श्रेष्ठं वा । वेधसः चतुर्मुखस्य । वाजिमेधिकैः अश्वमेधप्रयोजनकैः । यूपैः । भूषितं । तुण्डीरं तुण्डीराख्यं मण्डलं । विवेश ॥ १६१ ॥

क्षिप्तदोषस्स तं देशं क्षीरसिन्धुगुणाधिकम् ।
शुद्धधर्मपरिष्कारं श्वेतद्वीपममन्यत ॥ १६२ ॥

क्षिप्तेति—[1]क्षिप्तदोषः निरस्तपापः । सः सात्यकिः । क्षीरसिन्धुः क्षीरनदी, या सत्यव्रतक्षेत्रोपकण्ठे प्रवहति तया गुणाधिकं गुणाढ्यं, सम्पन्नसस्यादिगुणं । शुद्धः फलाभिसन्धिरहितो धर्मः परिष्कारो भूषणं यस्य तं, मुमुक्षुसेवितं । तं देशं तुण्डीरमण्डलं । श्वेतद्वीपं । अमन्यत । श्वेतद्वीपो नाम क्षीरोदमध्ये अवान्तरद्वीपः । यत्र [2]क्षीरोदशायी देवतैः स्तूयमानो वसति । तस्य महिमा कूर्मपुराणे प्रपञ्चितः—

शाकद्वीपं [3]समाश्रित्य क्षीरोदस्सागरस्स्थितः ।
श्वेत[4]द्वीपश्च तन्मध्ये नारायणपरायणाः ॥ (कू. पु. ४९-४०)
श्वेतास्तत्र नरा नित्यं जायन्ते विष्णुतत्पराः ॥ (कू.पु. ४९-४१)
केचिज्जपन्ति तप्यन्ति [5]केचिज्जानन्ति नो परे ॥ (कू.पु. ४९-४४)
एकान्तिनो निरालम्बा महाभागवताः परे ॥ (कू.पु. ४९-४६)

इत्यादिना । [6]एतत्पक्षे क्षीरसिन्धुः क्षीरोदः ॥ १६२ ॥

---

[1] क्षिप्तदोष पुण्यदेशप्रवेशान्निरस्त—च. [2] क्षीरोदशायी देवोऽस्ति—घ ट.
[3] समावृत्त—मु. [4] द्वीपं च—मु. [5] केचिद्विज्ञानिनोऽपरे—मु. [6] तत्पक्षे—छ. ट.

परित्यक्तपथांस्तत्र स काञ्चीकटकत्यजः ।
आहूय स्थापयामास धर्म्यान् धर्मधुरन्धरः ॥ १६३ ॥

परित्यक्तेति—तत्र देशे । धर्मस्य धुरन्धरः धर्मसंस्थापनप्रवृत्तः । सः सात्यकिः । परित्यक्तः पन्था यैस्तान् । अत एव काञ्चयां काञ्चीपुरे यत्कटकं [1]राजधानीत्यर्थः । धर्म्यान् धर्मादनपेतान् राज्ञः । आहूय । स्थापयामास पूर्ववत्प्रतिष्ठापितवान् ॥ १६३ ॥

प्रलोभयन्तीं ललितैस्ततः प्रथमलक्षितैः ।
दर्शनीयेषु चोलेषु दिदृक्षामन्ववर्तत ॥ १६४ ॥

प्रलोभयन्तीमिति—ततः अनन्तरं । दर्शनीयेषु रमणीयेषु । चोलेषु चोलाख्यदेशेषु । प्रथमलक्षितैः [2]इदंपूर्वतया दृष्टैः । ललितैः सुन्दरवस्तुभिः । प्रलोभयन्तीं तत्र तत्रार्थे कर्षयन्तीं । दिदृक्षां द्रष्टुमिच्छां । अन्ववर्तत अन्वसरत्, तामनुसृत्य तत्र पर्यटितवानित्यर्थः । अनेन नायिकावशंवदत्वमपि प्रतीयते । तत्र पक्षे ललितैः शृङ्गारचेष्टाभिः प्रलोभयन्तीं रञ्जयन्तीमिति योज्यम् । प्रथमलक्षितत्वमुभयत्राप्यादरातिशयहेतुः ॥ १६४ ॥

अथ कन्यां कवेरस्य ददर्श कनकाश्रिताम् ।
अपदिष्टनदीरूपाममृतस्येव देवताम् ॥ १६५ ॥

अथेति—अथ चोलदेशदर्शनानन्तरं । अपदिष्टं व्याजीकृतं नदीरूपं यया तां, नदीव्याजेन भूमौ प्रादुर्भूतां । अमृतस्य देवतां सुधाधिदेवतामिव स्थितां । माधुर्याति[3]शयात्तथोत्प्रेक्ष्यते । [4]कनकाश्रितां [5]कवेरस्य शैलविशेषस्य । कन्यां, कावेरीं । ददर्श ॥ १६५ ॥

---

1 'राजधानी तत्त्यजः' इति पाठस्स्यात्. 2 इदंप्रथमतया—च. 3 शयात्तथोत्प्रेक्षा—घ. ट. 4 कनकाश्रितां सह्यस्य शैलविशेषस्य—घ. ट. 5 अत्र 'कवेरस्य राजर्षिविशेषस्य' इति वा स्यात्.

उदारलहरीलास्यां ललितावर्तरासिकाम् ।
रसिकः प्रैक्षत नदीं रङ्गपर्यन्तनर्तकीम् ॥ १६६ ॥

उदारेति—उदारा महत्यः लहर्य ऊर्मय एव लास्यानि नर्तनानि यस्यास्तां । [1]ललिताः शोभना आवर्ता जलभ्रमा एव रासाः मण्डलनृत्तानि यस्यास्तां । शैषिकः कप्प्रत्ययः । रङ्गपर्यन्तनर्तकीं श्रीरङ्गस्थानस्य समीपे नृत्यं कुर्वतीं । नदीं कावेरीं । रसिकः कौतुकी सन् । प्रैक्षत ॥ १६६ ॥

रथसेतुनिरुद्धा सा रत्नाकरमनोरथात् ।
अवरुह्य जगामेव सह्यस्य पितुरान्तिकम् ॥ १६७ ॥

रथेति—रथा एव सेतुस्तेन निरुद्धा । सा कावेरी । रत्नाकरमनोरथात् समुद्राभिलाषात् अवरुह्य समुद्राभिमुख्यान्निवृत्य । पितुः स्वजनकस्य । सह्यस्य पर्वतविशेषस्य । आन्तिकं समीपं । जगामेव । कावेरीं तरता स्यन्दनसहस्रेण सेतुनेव निरुद्धायास्तस्याः प्रतीपगमनं भर्तृकुलं प्रति प्रस्थितायाः [2]केनचिदपि शकुनेन निरुद्धाया वध्वा रथादवरुह्य पुनः पितृदेशगमनतयोत्प्रेक्ष्यते ॥ १६७ ॥

दक्षिणापथगङ्गायास्स तस्या दिव्यसम्पदः ।
ददौ रविसुताश्लेषं दानवर्षेण दन्तिनाम् ॥ १६८ ॥

दक्षिणापथेति—सः सात्यकिः । दक्षिणापथस्य विन्ध्यदक्षिणभागस्य गङ्गावन्महितायाः । "विन्ध्यात्तु दक्षिणो देशः दक्षिणापथसंज्ञितः" इति यादवः । "अस्मद्राष्ट्रे यथा गङ्गा [3]कावेरीह

[1] ललिता आवर्ताः–घ. ट. [2] केनचिच्छकुनादिना–छ. [3] 'कावेरी च तथा' इति मुद्रितमहाभारतकोशे दृश्यते.

तथा शुभा" (महाभारते सभापर्वणि ३२–१२) इति महाभारते [1]सहदेववचनम् । दिव्या मनोज्ञास्सम्पदः [2]तटवृक्षादिसमृद्धयः यस्याः । गङ्गापक्षे—दिव्याः दिवि भवाः समृद्धयो यस्या इति योज्यम् । "दिव्यं दिवि भवे योग्ये" इति विश्वः । तस्याः कावेर्याः । रविसुताश्लेषं यमुनासङ्गमम् । दन्तिनां गजानां । दान-वर्षेण मदजलवर्षेण । ददौ दत्तवान् । दक्षिणगङ्गायाः कावेर्या यमुना-सङ्गमप्यघटयदित्यर्थः ॥ १६८ ॥

जननीमिव तां लक्ष्म्याः पाथोनिधिपतिव्रताम् ।
नियमैरुचितैर्भेजे निगमख्यातवैभवाम् ॥ १६९ ॥

जननीमिति—स सात्यकिः । पाथोनिधिपतिव्रतां समुद्रपति-व्रतां, पातिव्रत्यनियमवतीमित्यर्थः । लक्ष्म्याः श्रीदेव्याः । जननीं मातरं, समुद्रपत्नीत्वादिति भावः । इवशब्दो वाक्यालङ्कारे । निगम-ख्यातवैभवां "असिक्निया मरुद्वृधे" इत्यादिश्रुतिप्रसिद्धप्रभावां । तां कावेरीं । उचितैः क्षत्रिययोग्यैः । नियमैः । भेजे भजति स्म । प्रेयोलङ्कारः । लक्ष्मीजननीत्वान्निगमप्रसिद्धप्रभावायाः कावेर्यास्सर्वा-भीष्टदातृत्वं निश्चित्य तामभजदित्यर्थः ॥ १६९ ॥

यशोभिस्सह चोलानामिक्षुनिष्यन्दसंनिभम् ।
पयस्सह्यपयस्विन्याः पपुर्यादवयूथपाः ॥ १७० ॥

यशोभिरिति—यादवयूथपाः यादवसेनापतयः । चोलानां चोलभूपतीनां । यशोभिस्सह । इक्षुनिष्यन्दस्य इक्षुरसस्य [3]संनिभ

---

[1]'बलदेववचनं' इति घ. ट.-कोशयोः पाठो दृश्यते । महाभारते सहदेववचन-तयैव दर्शनात्स पाठोऽसाधुरिति भाति । [2]तटवृक्षादि–ख. [3]संमितं सदृशं–घ.

सदृशं, तद्वन्मधुरमित्यर्थः । [1] सह्यपयस्विनी कावेरी [2] । . . . . . . . . . विश्वः । तस्याः कावेर्याः । पयः जलं । पपुः । सहोक्त्या एतद्दशराजविजयस्य जलपानवदनायाससिद्धत्वं सूच्यते ॥ १७० ॥

जहसुर्जागरूकास्ते जङ्घालगुणशालिनाम् ।
दृष्ट्वा द्रमिडयोधानामवस्कन्दमनोरथम् ॥ १७१ ॥

जहसुरिति—जागरूकाः जागरणशीलाः । ते यादवाः । प्रशस्ता जङ्घा अस्येति जङ्घालः अतिजवनः [3] प्रशंसायां मत्वर्थीयो [4] लच्प्रत्ययः । तस्य गुणः त्वरितगमनं तं शलन्ति गच्छन्तीति तच्छालिनां । द्रमिडयोधानां । अवस्कन्दे सौप्तिके रात्रौ छलादाक्रमणे [5] मनोरथं । दृष्टा । जहसुः, कथमत्यन्ताशक्येऽपि पापफलमेषामित्युपाये हसन्ति स्म । "अवस्कन्दः प्रपातश्च सौप्तिकश्च निगद्यते" इति हलायुधः ॥ १७१ ॥

त्रिविष्टपनिभांस्तत्र दृष्ट्वा जनपदान् बहून् ।
अचमत्कारमन्येषु भूमिभागेष्वधत्त सः ॥ १७२ ॥

त्रिविष्टपेति—सः सात्यकिः । तत्र चोलदेशे । त्रिविष्टपनिभान् स्वर्गसदृशान् । बहून् । जनपदान् अवान्तरदेशान् । दृष्ट्वा । अन्येषु भूमिभागेषु काश्मीरादिषु । अचमत्कारं अविस्मयं । अधत्त ॥ १७२ ॥

---

[1] सह्यपयस्विन्याः कावेर्या.–च. छ. [2] अत्र "कावेरी स्यात्सरिद्भेदे इति" इति ग्रन्थो गलित इति भाति. [3] 'भूमनिन्दाप्रशंसासु' (वा. ३१८३) इति वार्तिकेन प्रशंसायां मत्वर्थीय इति भावः. [4] 'प्राणिस्थादातो लजन्यतरस्याम्' (पा. सू. ५-२-९६) इति सूत्रेणेति भावः. [5] मनोरथं जहसुः–घ. ट.

तत्र दर्पममित्राणां मित्राणामपि साध्वसम् ।
अखण्डयदपर्यायादत्याखण्डलविक्रमः ॥ १७३ ॥

तत्रेति—तत्र देशे । अत्याखण्डलः आखण्डलमतिक्रान्तो विक्रमो यस्य स सात्यकिः । अमित्राणां प्रतियोद्धृणां । दर्पं । मित्राणां [1]स्वयं वत्यो मित्रभूतानां । साध्वसं स्वस्माद्भयमपि । अपर्यायादखण्डयत् युगपदपनीतवान् । अपर्यायादिति देशस्य त्वरितवशीकरणोक्तिः ॥ १७३ ॥

रङ्गमात्मभुवस्तत्र रम्यनिर्माणमातृकाम् ।
अनन्तपीठिकारूढमभ्यर्च्य मुदितो ययौ ॥ १७४ ॥

रङ्गमिति—तत्र । सात्यकिः । आत्मभुवः चतुर्मुखस्य । रम्यनिर्माणमातृकां रमणीयवस्तुसृष्टिमातृकारूपमिति यावत्, सर्वोत्कृष्टसौन्दर्यमिति भावः । अनन्तपीठिकारूढं शेषपर्यङ्कसंश्रितं, शेषभोगे शयानमिति यावत् । रङ्गं रङ्गविमानस्थं श्रीरङ्गनाथं, विशेषणसामर्थ्याल्लक्षणया श्रीरङ्गनाथ एव रङ्गशब्दार्थः, रङ्गविमानं वा । अभ्यर्च्य सम्पूज्य । मुदितस्सन् । ययौ याति स्म ॥ १७४ ॥

दिवाऽपि दीपसापेक्षं गहनं संश्रितान् गजैः ।
स चोरांश्चूर्णयामास चोलपाण्ड्योपघातिनः ॥ १७५ ॥

दिवेति—स सात्यकिः । दिवाऽपि । दीपसापेक्षं दीपापेक्षासहितं, अतिनिबिडम् । गहनं वनं । संश्रितान् । चोलपाण्ड्योपघातिनः चोलान् पाण्ड्यांश्चाभीक्ष्णं [2]उपघ्नतः । चोरान् । गजैः चूर्णयामास [3]वनभञ्जनचणान् गजांस्तत्र प्रवेश्य निपातितवानित्यर्थः ॥ १७५ ॥

---

[1] 'स्वयं कृत्या' इति पाठः स्यात्. [2] अभिघ्नतः–घ. ट. [3] वनभञ्जनचञ्चान्–घ. ट.

रम्यपत्तन[1]सम्बाधां रत्नसैकतशोभिनीम् ।
व्यलोकयत सम्प्रीतो वेलाविपिनपद्धतिम्॥ १७६ ॥

रम्येति—रम्यः पत्तनानां नगराणां सम्मर्दो यस्यां तां । रत्नसैकतशोभिनीं तरङ्गप्रेरित[2]रत्नकूटरूपैस्सैकतैः शोभमानां । वेलाविपिनपद्धतिं समुद्रतरिवनपङ्क्तिं । सम्प्रीतस्सन् । व्यलोकयत । " पङ्क्तौ पथि च पद्धतिः " इति यादवः ॥ १७६ ॥

मैनाकमहसा दीप्तं सेतुसीमन्तितोदकम् ।
दमितं रघुवीरेण ददर्शाब्धिं स दक्षिणम् ॥ १७७ ॥

मैनाकेति—सः सात्यकिः । मैनाकस्य पर्वतस्य महसा रत्नतेजसा । दीप्तं । सेतुना रघुवीरकृतेन सीमन्तितोदकं सञ्जातमध्यरेखसलिलं । रघुवीरेण । दमितं आग्नेयास्त्रसन्धानेन दण्डितं । दक्षिणम् । अब्धिम् । ददर्श ॥ १७७ ॥

[3] परिखां प्रेक्ष्य लङ्कायाः पयोधिं प्रजहर्ष सः ।
ताराभूषितदेहस्य त्रिदिवस्येव दर्पणम् ॥ १७८ ॥

परिखामिति—सः सात्यकिः । लङ्कायाः परिखां खेयं । ताराभूषितदेहस्य नक्षत्रैः परिष्कृतशरीरस्य । त्रिदिवस्य आकाशस्य । दर्पणमिव स्थितम् । पयोधिम् । प्रेक्ष्य । प्रजहर्ष प्रहृष्यति स्म । लङ्कां परितास्स्थितत्वात्तत्खेयत्वारोपः । सनक्षत्रगणस्य गगनमण्डलस्य प्रतिबिम्बनात् तद्दर्पणत्वोत्प्रेक्षा । भूषितपुरुषः स्वभावदर्शनाय दर्पणं पश्यतीति भावः । " त्रिदिवो व्योम्नि दिव्यपि " इति यादवः॥ १७८ ॥

---

1 ' सम्मर्दो ' इति व्याख्यानुमतः पाठः. 2 रत्नकूटसैकतैः—घ. 3 परिघां—अ. मु.

सहसोत्पततां तत्र धन्विनो लघुविक्रमाः ।
उदधिं दन्तिनक्राणां [1] कुम्भरत्नैरपूरयन् ॥ १७९ ॥

सहसेति—लघु क्षिप्रं शीघ्रकारी विक्रमः पराक्रमो येषां ते तथोक्ताः । धन्विनः धनुष्मन्तः । तत्र सेतुदेशे । सहसोत्पततां अतर्कितमुन्मज्जतां, क्षणमात्रमुन्मज्ज्य स्थितानामिति भावः । दन्तिनक्राणां गजाकारनक्राणां । [2]कुम्भरत्नैः । उदधिं । अपूरयन् ॥ १७९ ॥

गगनं च [3] निरालम्बमगाधं च महोदधिम् ।
वीक्ष्य ते बह्वमन्यन्त हनूमन्तं गतागतम् ॥ १८० ॥

गगनमिति—ते यादवाः । गगनं च । निरालम्बं आधाररहितम् । महोदधिं च । अगाधं अशक्यपुनरुत्थानं । वीक्ष्य । गतागतं लङ्कां गत्वा प्रत्यागतं हनूमन्तम् । बहु यथा तथा अमन्यन्त ॥ १८०॥

स भेजे सरितां पत्युः पुलिनं वृष्णिपुङ्गवः ।
आसीदविधवा गङ्गा प्रसन्ने यत्र राघवे ॥ १८१ ॥

स इति—सः । वृष्णिपुङ्गवः वृष्णिश्रेष्ठस्सात्यकिः । सरितां पत्युः समुद्रस्य । पुलिनं सैकतं । भेजे सिषेवे । यत्र पुलिने राघवे प्रसन्ने सति गङ्गा अविधवा आसीत् समुद्रेण पन्था न दत्त इति क्षुभितो राघवस्तस्य शोषणार्थमस्त्रं सन्धाय तस्मिन् शरणागते यत्राभयं ददौ, [4] तत् पुलिनं भेज इत्यर्थः ॥ १८१ ॥

---

[1] 'कुम्भरक्तैरपूरयन्' इति सरस्वतीभाण्डागारीयमूलकोशे पाठदर्शनात् तत्पाठे क्षणमात्रमुन्मज्ज्य स्थितानामपि शीघ्रकारिधानुष्कनिक्षिप्तबाणभिन्नगजाकारनक्रकुम्भप्रदेशेभ्यस्समुद्भूतै रुधिरैः । समुद्रमापूरयन्नित्यर्थः प्रतिभाति ।

[2] जीमूतकरिमत्स्याहिशङ्खवंशवराहजाः ।
शुक्त्युद्भवाश्च विज्ञेया अष्टौ मौक्तिकयोनयः ॥

इति रत्नशास्त्रोक्तरीत्या गजाकृतिनक्रेष्वपि गजाकृतिसद्भावात्तत्कुम्भेष्वपि रत्नानि सन्वीत्याश्रयनेमसुक्तिरित्याशयः स्यात्. [3] निरालम्बं गम्भीरं—च. घ. [4] तं पुलिनं—घ. ट.

व्यलोकत च विस्मेरो लङ्कागोपुरमुत्तरम्।
रघुवीरशरव्रातपरिकल्पितजालकम्॥ १८२ ॥

व्यलोकतेति—रघुवीरस्य शरव्रातेन बाणनिकरेण परिकल्पितजालकं निर्मितगवाक्षं, सर्वत्र सरन्ध्रीकृतं। उत्तरं लङ्कागोपुरं लङ्कागोपुरस्योत्तरादिग्द्वारं। विस्मेरस्सन्। व्यलोकत। चकारः पूर्वक्रियासमुच्चयार्थः। "पुरद्वारं तु गोपुरम्" इत्यमरः॥ १८२ ॥

परिभूतरवस्तस्य सैन्यघोषेण सागरः।
अधिकं क्षोभमापन्नस्त्रासभिन्न इवाभवत् ॥ १८३ ॥

परिभूत इति—तस्य सात्यकेः। सैन्यघोषेण। परिभूतरवः। अधिकं क्षोभमापन्नः समाजदर्शनादतिशयितमुत्तरलीभावं प्राप्तः। सागरः त्रासभिन्नः भयसम्पन्न इव। अभवत। त्रस्तो हि निश्शब्दः क्षुभितस्सम्भ्रान्तो भवति॥ १८३ ॥

[1]तमालान् प्रतिमातङ्गत्रासादालानमण्डलान्।
ममृदुर्नूनमावार्य मदान्धा गन्धसिन्धुराः॥ १८४ ॥

तमालानिति—मदान्धाः मदोन्मूढाः। गन्धसिन्धुराः चन्दनादिगन्धप्रधानाः क्षत्रियजातीयगजाः। नूनं। तमालान् तापिञ्छान् वृक्षान्। प्रतिमातङ्गत्रासात्। [2]तृणजानालानमण्डलान् गजस्तम्भसमूहांश्च।आवार्य। ममृदुः मृद्नन्ति स्म। "त्रिलिङ्गम्मण्डलं वृन्दे" इति यादवः॥ १८४ ॥

---

1 अत्र श्लोके व्याख्यायां गजबन्धनस्तम्भापेक्षया तमालवृक्षा भिन्ना इत्युभयमर्दनमभिमतं दृश्यते। मूले तु चकारादर्शनात्तमालानामेव गजबन्धनस्तम्भत्वप्रतीत्या गजाः स्वबन्धनस्तम्भभूततमालानेव मदान्धतया प्रतिगजबुद्ध्या ममृदुरित्याशयः प्रतीयते.

2 तृणजाणनालान—ग. ट.

नलसेतुं ततो नीत्वा दृष्टमुक्तानदीमुखः।
वीरो विश्रमयामास दुर्निवारां वरूथिनीम् ॥ १८५ ॥

नलसेतुमिति—ततः। नलेन कृतं सेतुं। नीत्वा दृष्टं मुक्तानद्याः ताम्रपर्ण्याः मुखं अग्रं समुद्रसङ्गमो येन सः। वीरः सात्यकिः। दुर्निवारां जयकौतुकेन गत्वरतया कृच्छ्रेण निवार्यां। वरूथिनीं सेनां। विश्रमयामास, विश्रान्त्यै कचिन्निवेशयामासेत्यर्थः। [1]“अमन्ताश्च” इति मित्संज्ञायां ह्रस्वः ॥ १८५ ॥

कृतव्यावर्तनास्तत्र केतकीरेणुरूषिताः।
द्विषस्स्कन्धांश्च दुधुवुर्हयास्तुमुलहेषिताः॥ १८६ ॥

कृतेति—तत्र सेनानिवेशे। कृतव्यावर्तना. पल्ययनविमोचनानन्तरं भूमौ कृताङ्ग[2]परावर्तनाः। अत एव केतकीरेणुरूषिताः। तुमुलहेषिताः [3]सङ्कुलहेषारवाः। हयाः। द्विषः शत्रून्। स्कन्धांश्च। दुधुवुः धून्वन्ति स्म। स्वस्कन्धकम्पनसम्भ्रमेण शत्रूनकम्पयन् ॥ १८६ ॥

धनुषा शार्ङ्गभीमेन सामिविष्फारितेन सः।
लज्जितोदधिघोषेण लङ्काद्वीपमकम्पयत् ॥ १८७ ॥

धनुषेति—सः सात्यकिः। शार्ङ्गवद्भीमेन भयङ्करेण। सामिविष्फारितेन अर्धं यथा तथा टङ्कारवत्कृतेन। लज्जितोदधिघोषेण त्रपावत्कृतसमुद्रकलकलेन, तिरस्कृतसमुद्रध्वनिनेति यावत्। धनुषा चापेन। लङ्कामकम्पयत् लङ्कास्थानमप्यकम्पयदित्यर्थः ॥ १८७ ॥

---

1 ‘जनीजृष्क्नसुरञ्जोऽमन्ताश्च’ (ग. सू. १८८) इति गणसूत्रेण मित्संज्ञायां ‘मितां ह्रस्वः’ (पा. सू. ६-४-९२) इति सूत्रेणोपधाया ह्रस्व इति भावः.

2 परिवर्तनाः—च. 3

**प्रतापदूतवशगाः प्राज्यरत्नोपहारिणः ।**
**अजीवन् यदुसिंहस्य पादमाश्रित्य सिंहलाः ॥ १८८ ॥**

**प्रतापेति**—सात्यकेः प्रताप एव दूतः तस्य वशगाः तदायत्ततां गताः । अत एव प्राज्यरत्नोपहारिणः बहुलरत्नोपायनवन्तः । सिंहलाः । यदुसिंहस्य । पादं । आश्रित्य । अजीवन् जीवन्ति स्म ॥ ॥ १८८ ॥

**महतीमुपदां तेषां द्विपरत्नादिशालिनीम् ।**
**स सङ्गृह्य पुनश्चक्रे न मनस्सेतुबन्धने ॥ १८९ ॥**

**महतीमिति**—स सात्यकिः । तेषां सिंहलानाम् । द्विपरत्नादिशालिनीम् । महतीम् । उपदाम् । सङ्गृह्य । पुनस्सेतुबन्धने । मनः । न चक्रे । तेषामुपायनस्यानागमने तज्जयाय रघुवीरवत् स्वयमपि सेतुं कुर्यादिति भावः ॥ १८९ ॥

**द्विरदान् सिंहलेन्द्रस्य द्विचतुर्दन्तशोभिनः ।**
**पोतभूतांस्त्रिकूटस्य पोतानीतानमन्यत ॥ १९० ॥**

**द्विरदानिति**—द्वौ च चत्वारश्च दन्ताः द्विचतुर्दन्ताः [1] तच्छालिनः । पोतानीतान् यानपात्रैरानीतान् । सिंहलेन्द्रस्य । द्विरदान् उपायनगजान् । त्रिकूटस्य तत्रत्यपर्वतविशेषस्य । पोतभूतान् । अमन्यत । अत्युन्नतत्वादिति भावः । चतुर्दन्तेष्वपि द्विरदशब्दो रूढत्वात् स्थलकमलेषु सरसीरुहशब्दवदुपपन्नः ॥ १९० ॥

**यशोरत्नाकरस्तस्य बभौ पाण्ड्यसमर्पितैः ।**
**सैन्यकञ्चुकपर्याप्तैर्मुक्तापुलिनमण्डलैः ॥ १९१ ॥**

**यश इति**—तस्य सात्यकेः । यशोरत्नाकरः कीर्तिसागरः । पाण्ड्यसमर्पितैः पाण्ड्यराजेनोपदीकृतैः । सैन्यकञ्चुकपर्याप्तैः सर्वेषामपि

[1] इदं तु मूले 'शोभिनः' इत्यस्य स्थाने 'शालिनः' इति पाठाभिप्रायेण.

सैनिकानां मौक्तिककञ्चुकं निर्मातुं पर्याप्तैः । मुक्तापुलिनमण्डलैः मौक्तिकसैकतसमूहैः। बभौ । मौक्तिकानां राशयः पुलिनत्वेनाध्यवसिताः, रत्नाकरौचित्यात् ॥ १९१ ॥

**सोमवंशभुवां तत्र भूभृतां यदुपुङ्गवः ।**
**[1] सयूथ्यभावमुद्भाव्य शङ्काज्वरमपानुदत् ॥ १९२ ॥**

सोमेति—यदुपुङ्गवः सात्यकिः । तत्र पाण्ड्यदेशे । सोमवंशभुवां चन्द्रवंशप्रभवानाम् । भूभृताम् । सयूथ्यभावं एककुलोत्पन्नत्वरूपं समानयूथभवत्वम् । उद्भाव्य प्रकाश्य । शङ्काज्वरम् । अपानुदत् अपनीतवान् । ॥ १९२ ॥

**स मारुति[2]पदन्यासादञ्चिताग्रामधित्यकाम् ।**
**प्रभुः प्रदक्षिणीचक्रे महेन्द्रस्य महीभृतः ॥ १९३ ॥**

स इति—स प्रभुः सात्यकिः । मारुतेर्हनूमतः पदन्यासात् । अञ्चिताग्राम् । महेन्द्रस्य । महीभृतः । अधित्यकां ऊर्ध्वभूमिम् । प्रदक्षिणीचक्रे । महेन्द्रशैलशिखरे स्थित्वा मारुतिरब्धिमलङ्घयदिति रामायणकथा ॥ १९३ ॥

**उपभुक्ता बभौ तेन मलयस्य वनस्थली ।**
**सैन्यसम्मर्दसम्भूतैरेलाचन्दनसौरभैः ॥ १९४ ॥**

उपभुक्तेति—तेन सात्यकिना । उपभुक्ता । मलयस्य । वनस्थली । सैन्यसम्मर्दसम्भूतैः सैनिकाक्रमणोद्भूतैः । एलानां चन्दनानां च सौरभैः । बभौ । यथा नायकोपभुक्ता वनिता आश्लेषादिविमर्दोत्थैरङ्गरागपरिमलैर्भाति तद्वदित्यर्थः ॥ १९४ ॥

---

1 स सूर्य ?   2 पदन्यासैरञ्चिताग्रा.

पतगेन्द्रध्वजत्रासाक्लिष्टकुण्डलितात्मनाम् ।
जगृहुर्यादवास्तत्र फणारत्नानि भोगिनाम् ॥ १९५ ॥

पतगेन्द्रध्वजेति—तत्र मलये । यादवाः । पतगेन्द्ररूपात् ध्वजात् यस्त्रासस्तस्मात् । श्रष्टाः चन्दनतरुभ्यो निर्याताः कुण्डलिता वेष्टिता आत्मानो देहा येषां तेषां । भोगिनां । फणारत्नानि । जगृहुः ॥ १९५ ॥

पृतनां तस्य संप्रेक्ष्य पृषद्भावितसागराम् ।
मानमात्मनि तत्याज मलयाश्रमतापसः ॥ १९६ ॥

पृतनामिति—मलय आश्रमो यस्य स तापसस्तपस्वी अगस्त्यः । पृषद्भावितसागरां बिन्दूकृतसमुद्रां समुद्रादतिमहतीं । तस्य । पृतनां सेनां । सम्प्रेक्ष्य । आत्मनि । मानं समुद्रः पीत इत्यहङ्कारम् । तत्याज ॥ १९६ ॥

मरुतस्तत्र नागानां मृदितैलासुगन्धयः ।
चन्दनद्रुमसक्तानां प्रीतिकोपकृतोऽभवन् ॥ १९७ ॥

मरुत इति—तत्र मलये । मृदिताभिस्सैन्यचूर्णिताभिरेलाभिः सुगन्धयश्शोभनगन्धाः । मरुतः । चन्दनद्रुमेषु सक्तानां । गजानां । प्रीतिकोपकृतः । अभवन् शीतोपचारकृतत्त्वात्प्रीतिकृतः, प्रतिगजमदगन्धशङ्कावहत्वात् कोपकृतश्चाभवन्नित्यर्थः । एलागन्धसमानो मदगन्ध इति प्रसिद्धिः । सुगन्धय इत्यत्र "गन्धस्येदुत्पूतिसुसुरभिभ्यः" (पा. सू. ५-४-१३५) इति समासान्तः । यद्यपि तत्र 'एकान्तग्रहणं कर्तव्यम्' (वा. ३३६८) इत्युक्तेः, आगन्तुकगन्धे नास्ति समासान्तः । तथापि

महाकविप्रयोगादिहैकान्तिकत्वारोपेण साधुत्वमास्थेयम्[1]। नैषधेऽप्येवमेव प्रयोगो दृश्यते—

"अपां हि तृप्ताय न वारिधारा स्वादुस्सुगन्धिस्स्वदते तुषारा"

(नैषधीयचरिते ३-९४)

इति ॥ १९७॥

**पटीरस्कन्धविषयास्तत्र तेषां भुजङ्गमाः।**
**अभजन्त फणारत्नैरवातक्षोभदीपताम्[2] ॥ १९८ ॥**

पटीरेति—तत्र मलये। पटीरस्कन्धविषयाः चन्दनतरुस्कन्धाश्रयाः। भुजङ्गमाः। फणारत्नैः। तेषां सैनिकानां। अवातक्षोभदीपतां वातप्रयुक्तकम्परहित[3]दीपभासत्वं। अभजन्त। चन्दनतरुस्कन्धानां दीपभाजनत्वं सर्पभोगानां दीपपङ्क्तित्वं तत्फणारत्नानां दीपज्वलनत्वं चाभिसन्धायैवमुक्तिः॥ १९८॥

**मुक्ताभरणभूयिष्ठा रक्तचन्दनरञ्जिता।**
**[4]चकाशे यादवी सेना सतारेव पितृप्रसूः॥ १९९॥**

मुक्तेति—मुक्ताभरणभूयिष्ठा मौक्तिकाभरणसमृद्धा। रक्तचन्दनेन रञ्जिता अरुणीकृता। यादवी। सेना। सतारा नक्षत्रसहिता। पितृप्रसूः सन्ध्येव। चकाशे। "सायं सन्ध्या पितृप्रसूः" इत्यमरः॥१९९॥

**निदाघमिव पर्जन्यो निरासे सात्यकिः परम्।**
**प्रयुक्तैरग्रतो नागैः प्रावृषेण्यैरिवाम्बुदैः॥ २०० ॥**

निदाघमिति—सात्यकिः। पर्जन्यः इन्द्रः। निदाघमिव। परं तत्रत्यं शत्रुवर्गम्। प्रावृषेण्यैः प्रावृषि भवैः। अम्बुदैः मेघैरिव स्थितैः।

---

1 एकान्तत्वमविभागेन लक्ष्यमाणत्वमित्यभ्युपगमादारोपमन्तराऽप्युपपत्तिरिति कौमुदीकृदादयः. 2 क्षेपदीपताम्—ग्र. दे. मु. 3 दीपभाजनत्वम्—छ. 4 चकासे (चकास)—ग्र. दे. मु.

अग्रतः प्रयुक्तैः पुरतः प्रेरितैः। नागैः गजैः। निरासे निरस्यते स्म। 'उपसर्गादस्यत्यूह्योर्वावचनम्' (वा. ९२०) इति सोपसर्गादस्यतेरात्मनेपदम्। 'प्रावृष एण्यः' (पा. सू. ४-३-१७) इति शैषिक एण्यप्रत्यये प्रावृषेण्यशब्दः ॥ २०० ॥

**युगपत्प्रत्यविध्यन्त युद्धे तस्य शरैर्द्विषः।**
**अपाङ्गैश्च सुरस्त्रीणामसितोत्पलमेचकैः ॥ २०१ ॥**

**युगपदिति**—द्विषः शत्रवः। तस्य सात्यकेः। शरैः। सुरस्त्रीणाम्। अपाङ्गैश्च। युगपत्। प्रत्यविध्यन्त प्रतिविद्धा अभूवन्। असितोत्पलमेचकैः नीलोत्पलश्यामलैरित्युभयेषामपि विशेषणम्। सात्यकि[1]शरनिपातविषयाणां निपातं निश्चित्य सुरस्त्रियः कटाक्षैस्तान् पतित्वेन जगृहुरित्यर्थः ॥ २०१ ॥

**शस्त्रकेलिं परित्यज्य स्वकान्ताकेश[2]भङ्गुराम्।**
**जगृहुः केरलास्तत्र जैत्रमस्त्रमिवाञ्जलिम् ॥ २०२ ॥**

**शस्त्रेति**—तत्र। केरलाः केरलदेशस्य राजानः। स्वकान्ताकेशभङ्गुरां केरलकान्तानां केशा यथा [3]भङ्गुराः भङ्गशीलाः, कुटिला इति यावत्, तथा भङ्गुरां विनश्वरीम्। शस्त्रकेलिं युद्धम्। परित्यज्य। जैत्रं जयशीलम्। अस्त्रमिव। अञ्जलिम्। जगृहुः। सात्यकेः प्रसादनार्थमिति भावः ॥ २०२ ॥

---

[1] शरपात—च. [2] भङ्गुरम्—अ. दे. मु. [3] 'भङ्गुरौ वक्रनश्वरौ' इति यादवकोशोऽत्र बोध्यः। 'भञ्जभासमिदो घुरच्' (पा. सू. ३-२-१६१) इति सूत्रेण भञ्जधातोर्घुरचि घत्वात् "चजोः कुघिण्ण्यतोः" (७-३-५२) इति जस्य कुत्वेन भङ्गुरशब्दो निष्पन्नः.

अदूरावस्थितो रामस्तत्र वृष्णिवरूथिनीम्।
शशङ्के विस्मयाविद्धस्सप्तार्णवसमाहृतिम्॥ २०३ ॥

अदूरेति—तत्र। अदूरावस्थितः सन्निकृष्टनिवासः। रामः जामदग्न्यः। वृष्णीनां वरूथिनीं सेनाम्। विस्मयेनाविद्धः आक्रान्तस्सन्। सप्तानामर्णवानां समाहृतिं मेलनम्। शशङ्के॥ २०३॥

भुग्नभागस्ततस्सह्यस्तदाक्रमणयन्त्रितः।
प्रणिनंसुरिवाबोधि पर्यस्तशकटोपमः॥ २०४ ॥

भुग्नेति—ततः। तस्या वृष्णिसेनाया आक्रमणेन यन्त्रितो निपीडितः। भुग्नभागः तद्भारासहिष्णुतया अवनतैकदेशः। अत एव पर्यस्तशकटोपमः उत्क्षिप्तदण्डशकटसदृशः। सह्यः। प्रणिनंसुरिव भारापनयनाय सात्यकिं प्रणन्तुमिच्छुरिव। अबोधि बुद्धः। बुधेः कर्मणि लुङ्॥ २०४॥

अग्रस्कन्धेन गोकर्णं महेन्द्रमपि मूलतः।
अवस्कन्द्य यदुश्रेष्ठस्स्कन्धावारं न्यवीविशत्॥ २०५ ॥

अग्रेति—यदुश्रेष्ठः सात्यकिः। अग्रस्कन्धेन सेनाया अग्रव्यूहेन। गोकर्णं गोकर्णाख्यं स्थानम्। मूलतः सेनामूलभागेन। महेन्द्रपर्वतमपि। अवस्कन्द्य। स्कन्धावारं शिबिरम्। न्यवीविशत् निवेशयति स्म॥ २०५॥

जित्वा सह्याश्रितं वीरो जामदग्न्य इवापरः।
दूरमुत्सारयामास द्विषद्बलमहार्णवम्॥ २०६ ॥

जित्वेति—अपरः। जामदग्न्य इव स्थितः। वीरः सात्यकिः। सह्याश्रितम्। द्विषद्बलमहार्णवं महार्णववद्द्विषद्बलम्। जित्वा। दूरम्।

उत्सारयामास । यथा जामदग्न्यस्तपोवनार्थं सह्यसान्निकृष्टं महार्णवमभिभूय दूरमुत्सारितवान्-तद्वदिति भावः ॥ २०६ ॥

**चारुचन्दन[1]सम्पन्नशैलस्तनमनोहराम् ।**
**बुभुजे दक्षिणामाशां मौक्तिकाकरमेखलाम् ॥ २०७ ॥**

**चारुचन्दनेति**—चारुभिश्चन्दनतरुभिस्सम्पन्नौ समृद्धौ शैलौ सह्यमलयौ स्तनाविव ताभ्यां मनोहराम् । मौक्तिकानां आकरो मेखला शैलनितम्ब एव काञ्ची यस्यास्ताम् । दक्षिणाम् । आशाम् । समासोक्त्या नायिकामिति च गम्यते । बुभुजे भुङ्क्ते स्म ॥ २०७ ॥

**तत्र [2]वेलानिलोद्भूतराजतालरवान्वितम् ।**
**[3]स्वर्गीतं [4]स्वादु शुश्राव भुजङ्गस्त्रीमुखोदितम् ॥ २०८ ॥**

**तत्रेति**—तत्र देशे । वेलानिलोद्धूतराजतालरवान्वितं समुद्रतीरानिलकम्पिततालविशेषशब्दान्वितम् । भुजङ्गस्त्रीणां मुखादुद्गतम् । स्वादु मनोज्ञम् । स्वर्गीतं दिव्यगीतम् । शुश्राव ॥ २०८ ॥

**चोलकेरलपाण्ड्यानां पश्यन्ननुगतिं प्रभुः ।**
**चकार पुनराधानं धर्म्यं [5]हुतभुजामिव ॥ २०९ ॥**

**चोलेति**—चोलकेरलपाण्ड्यानां चोलादिदेशत्रयस्य राज्ञाम् । अनुगतिं अनुव्रजनम् । पश्यन् । प्रभुः । धर्म्यं आश्रितसंरक्षणरूपत्वात् धर्मादनपेतम् । पुनराधानं तेषां तत्तद्देशे पुनर्निधानम् । चकार, हुतभुजामिव । यथा आहितानां गार्हपत्यादीनां त्रयाणामग्नी-

---

1 संपन्नां शैल–घ. ग्र. दे. मु. 2 वेलानिलोद्भूत–घ. 3 संगीतं–ग्र. दे. मु. 4 साधु शु–घ. 5 हुतभुजामपि–ग्र. दे. मु.

नामनुगतिं अविनाशिनीं? पश्यन् यजमानः प्रायश्चित्तरूपत्वाद्धर्म्यं पुनराधानं करोति तद्वदित्यर्थः। "यस्योभावग्नी अनुगतावभिनिम्रोचेदभ्युदीयाद्वा पुनराधेयं तस्य प्रायश्चित्तिः" (आ-श्रौतसूत्रं ५-२९-१३) इति सूर्योदयास्तमययोरग्निद्वयानुगतप्रायश्चित्ततया विहितं पुनराधानं दक्षिणाग्निना सह अग्नित्रयानुगतावपि भवति। तदाऽप्यग्निद्वयानुगमरूपनिमित्तसत्त्वादिति भावः ॥ २०९ ॥

कालदष्टिकरालाभिरुल्काभिरिव हेतिभिः।
दुर्मदद्विरदोदग्रान् त्रासयामास तौलुवान् ॥ २१० ॥

कालेति—दुर्मदद्विरदोदग्रान् मत्तगजानिवोद्धुरान्। तौलुवान् तुलुवदेशभवान् राज्ञः। कालदष्टिकरालाभिः कृतान्तकटाक्षोग्राभिः। हेतिभिः आयुधैः। उल्काभिः उन्मुखज्वालाभिरिव। त्रासयामास। मत्ता अपि गजा उल्कादर्शनेन त्रस्यन्ति ॥ २१० ॥

खेटकर्परगूढाङ्गान् कीलयित्वा शरैर्द्विषः।
स्थलकूर्मैरिवाकीर्णं चकार रणभूतलम् ॥ २११ ॥

खेटेति—खेटानि तुलुवफलकानि कर्परा अस्थिखण्डा इव तैर्गूढाङ्गान्। द्विषः। शरैः। कीलयित्वा कीलवतः कृत्वा। रणभूतलम्। स्थलकूर्मैः स्थलसञ्चारिभिः कमठैः। आकीर्णमिव। चकार। कूर्मकर्पराकारैः फलकैस्सह वक्षसि कीलयित्वा निपातितानां तुलुवानां शरवेदनय इतस्ततस्सर्पणेन स्थलकूर्माकीर्णमिव रणाङ्गणं [1] चकारेत्यर्थः ॥ २११ ॥

शरैरभ्यर्चितास्तेन कोङ्कणास्समराङ्गणे।
पुष्पवृष्टिभिरानर्चुस्तमेव त्रिदशीकृताः ॥ २१२ ॥

शरैरिति—तेन सात्यकिना। समराङ्गणे। शरैरभ्यर्चिताः। कोङ्कणाः कोङ्कणदेशस्य राजानः। त्रिदशीकृतास्सन्तः। तमेव।

---

[1] चक्र इत्यर्थः—च.

पुष्पवृष्टिभिः शौर्यदर्शनसन्तोषविमुक्ताभिः । आनर्चुः अर्चन्ति स्म ॥ २१२ ॥

**कुपिताः कोङ्कणस्त्रीणां गण्डूषमधुगर्भितान् ।**
**बभञ्जुरमितामोदान् वकुलान् वृष्णिकुञ्जराः ॥ २१३ ॥**

कुपिता इति—वृष्णिकुञ्जराः वृष्णिवंश्यश्रेष्ठाः । कोङ्कणस्त्रीणाम् । गण्डूषमधुभिर्गर्भितान् सञ्जातगर्भान्, कुसुमोद्गमयुक्तानिति यावत् । अङ्गनावदन[1]मदिरागण्डूषो वकुलानां दोहदमिति प्रसिद्धिः । अत एव अमितामोदान् अपरिमितसौरभान् । वकुलान् केसरवृक्षान् । कुपितास्सन्तः । बभञ्जुः मोटयामासुः । कुञ्जरा अपि वकुलामोदमुपलभ्य प्रतिगजमदभ्रमेण तान् मोटयन्तीति भावः ॥ २१३ ॥

**प्रमादानिव तान् सप्त देशानतिपतन् प्रभुः ।**
**स ममर्द महाराष्ट्रं सैन्यदक्षिणभागतः ॥ २१४ ॥**

प्रमादानिति—प्रभुः सात्यकिः । तान् तुळुवादीन् । सप्त देशान् ।

" मृगयाऽक्षाः स्त्रियः पानं वाक्पारुष्यार्थदूषणे ।
दण्डपारुष्यमित्येतन्महाव्यसनसप्तकम् ॥ "

इत्युक्तसप्तप्रमादानिव अतिपतन् अतिक्रामन् सन् । सैन्यदक्षिणभागतः । महाराष्ट्राख्यं देशम् । ममर्द मर्दितवान् ॥ २१४ ।

**अपश्यदृश्यमूकान्ते शेषमौलिमणिप्रभाम् ।**
**रामसायकरन्ध्रेण निस्सरन्तीं नभस्स्पृशम् ॥ २१५ ॥**

अपश्यदिति—ऋश्यमूकान्ते ऋश्यमूकपर्वतस्यान्ते । रामसायकरन्ध्रेण सप्तसालभेदनसमये रामबाणकृतेन पातालरन्ध्रेण ।

---

[1] मदगण्डूषो—च.

निस्सरन्तीं, नभस्स्पृशं अभ्रंलिहां। शेषमौलिमणिप्रभाम्। अपश्यत्। रामचन्द्रवीर्यातिशयद्योतनार्थेयमतिशयोक्तिः ॥ २१५ ॥

**कामक्रोधाविवास्कन्द्य सह्यविन्ध्यौ समाहितः।**
**विजिग्ये विषमांस्तत्र विषयान् सत्वमास्थितः॥ २१६॥**

**कामक्रोधाविति**—समाहितः समाहितचित्तः। सत्वं बलम्, आस्थितः सत्वगुण[1]समृद्धः। सह्यविन्ध्यौ। कामक्रोधाविव। आस्कन्द्य आक्रम्य। तत्र सह्यविन्ध्ययोर्मध्ये। विषमान् अवशंवदान्। विषयान् जनपदान्। विजग्ये विजयते स्म। यथा समाहितचित्तः सत्वगुणसमृद्धो योगी प्रथमं कामक्रोधौ जित्वा ततो विषयानिन्द्रियार्थान् जयति तद्वदिति भावः ॥ २१६ ॥

**चापघोषेण निर्भिन्नचक्रवालाद्रिसन्धिना।**
**कुञ्जलीनान् द्विषस्तत्र दिवा[2]भीतानभेषयत्॥ २१७॥**

**चापेति**—निर्भिन्ना विदारिताः चक्रवालाद्रेर्लोकालोकपर्वतस्य सन्धयो येन तेन, अतिमहता। चापघोषेण। कुञ्जेषु गह्वरेषु लीनान्। द्विष एव। दिवाभीतान् उलूकान्। अभेषयत् हेषयति स्म[3]। 'भेषृ भये' (भ्वादि ८८३) इति धातोर्णिच्। अभीषयदिति पाठस्तु लेखकप्रमादकृत इति प्रतिभाति। भियो हेतुभये [4] षुगागमविधानात्, इह तु चापघोषेणेति भयनिमित्तोपादानात्। [5] कथञ्चिद्धेतुभय इत्यात्मनेपदापत्तेश्च। यद्वा चापघोषेणेत्युपलक्षणतृतीयाङ्गीकारेण हेतुभयमुपपाद्य भीष्यत इति भीषेति कर्मणि प्रत्ययान्तात् तत्करोतिणिचा परस्मैपदं समर्थनीयम् ॥ २१७ ॥

---

[1] समृद्धेः–घ. च. छ. ट. [2] भीतानभीषयत्–घ. [3] 'भेषयति स्म' इति पाठश्चेत्सुगमः. [4] 'भियो हेतुभये षुक्' (पा. सू. ७–३–४०) इति सूत्रसत्त्वादिति भावः. [5] कथं चिद्धेतुभये 'भीस्म्योर्हेतुभये' (पा. सू. १-३-६८) इत्यात्मनेपदापत्तेश्च' इति पाठेनात्र भाव्यमिति भाति.

अवन्ध्यतपसा विन्ध्यः स्तम्भितः कुम्भजन्मना ।
यदुपुङ्गवमातङ्गैर्वर्धमान इवाभवत् ॥ २१८ ॥

अवन्ध्येति—अवन्ध्यतपसा अमोघतपसा । कुम्भजन्मना अगस्त्येन । स्तम्भितः । विन्ध्यः । यदुपुङ्गवस्य मातङ्गैः उपर्यारूढैः । वर्धमान इवाभवत् ॥ २१८ ॥

सूर्यरोधितरुच्छन्नामसूर्यपश्यवीचिकाम् ।
सोमवंश्यास्सुधां तत्र पपुस्सोमसमुद्भवाम् ॥ २१९ ॥

सूर्येति—तत्र विन्ध्ये । सोमवंश्याः सोमवंशभवा राजानः । सूर्यरोधिभिस्तटवृक्षैश्छन्नाम् । अत एव न सूर्यं पश्यन्तीत्यसूर्यपश्या वीचयो यस्यास्ताम् । सोमवंश्येन पुरूरवसा अवतारितत्वात् सोमसमुद्भवां रेवामेव । सुधाम् । पपुः पिबन्ति स्म । सुधाऽपि सोमप्रभवेति भावः । "असूर्यललाटयोर्दृशितपोः" (पा. सू. ३-२-३६) इति खशि [1]मुमागमे च सत्यसूर्यपश्यशब्दस्साधुः ॥ २१९ ॥

तेषां विहरतां तत्र शिञ्जिनीबद्धरावणाम् ।
कार्तवीर्यजलक्रीडां कथयन्ति स्म तापसाः ॥ २२० ॥

तेषामिति— तत्र नर्मदायाम् । विहरताम् । तेषां यादवानाम् । शिञ्जिन्या मौर्व्या बद्धो रावणो यस्यां ताम् । कार्तवीर्यस्य जलक्रीडाम् । तापसाः तत्रत्याः। कथयन्ति स्म । पुरा कार्तवीर्ये बाहुसहस्रेण सेतुनेव नर्मदां बद्ध्वा जलक्रीडां कुर्वति, प्रवाहनिरोधात्प्रतिगामिन्या नर्मदया क्वचित्सैकते देवं पूजयतो रावणस्योपहारपुष्पादीनि जलबृंहणात् भ्रष्टानि[2] । तदसहिष्णुतया रावणः कार्तवीर्येण युध्यमानस्तेन मौर्व्या बद्ध्वा कारागारे निवेशित इति पौराणिकी कथा ॥ २२० ॥

---

[1] 'अरुर्द्विषदजन्तस्य मुम्' (पा. सू. ६-३-६७) इति सूत्रेणेति भावः.

[2] ग्रस्तानि—च. ध्वस्तानि—ट.

**नगरीं हैहयेन्द्रस्य कारार्पितदशाननाम्।**
**नलादीनां च शिथिलां सनिर्वेदमदर्शयन्॥ २२१ ॥**

**नगरीमिति**—कारागृहार्पितदशाननां। कालवशाच्छिथिलाम्। हैहयेन्द्रस्य हैहयवंश्यश्रेष्ठस्य कार्तवीर्यस्य। नगरीं माहिष्मतीम्। नलादीनां च राज्ञां शिथिलां नगरीं। [1] सनिर्वेदभावनां विनश्वरत्वदर्शनजनितवैराग्यसहितं यथा तथा। अदर्शयन्। प्रकृतास्तापसा इहापि कर्तारः॥ २२१॥

**रथवाजिपदक्षुण्णविन्ध्यमस्तकरेणुभिः।**
**रेवामाचामयामास रिपुस्त्रीबाष्पवर्धिताम्॥ २२२॥**

**रथेति**—रथपदैः रथाङ्गैः, वाजिपदैरश्वखुरैश्च क्षुण्णस्य चूर्णीकृतस्य विन्ध्यमस्तकस्य विन्ध्योपरिभागस्य रेणुभिः। रिपुस्त्रीणां बाष्पैर्वर्धिताम्। रेवां आचामयामास शोषयामास। 'न कम्यमिचमाम्' (ग. सू. १९१) इति मित्त्वनिषेधान्न ह्रस्वः॥ २२२॥

**ववृधे समरस्तत्र [2] सुभगस्वर्गसङ्क्रमः।**
**सिद्धगन्धर्वयूथानां चित्तताण्डवदेशिकः॥ २२३॥**

**ववृध इति**—तत्र विन्ध्ये। सुभगस्वर्गसङ्क्रमः वीराणां स्वर्गमार्गः, दुर्गमार्गस्य सङ्क्रम इति नाम। "सङ्क्रमो दुर्गसञ्चारः' इत्यमरः। सिद्धाश्च गन्धर्वाश्च देवयोनिविशेषाः, [3] तद्वधूनां। चित्तताण्डवदेशिकः मनोनर्तनस्याचार्यः मनउल्लासहेतुः। समरः सङ्ग्रामः' ववृधे वर्धते स्म॥ २२३॥

---

1 'सनिर्वेदं भावानां' इति पाठेनात्र भाव्यमिति भाति. 2 व्याख्यायां 'वीराणां स्वर्गमार्गः' इति विवरणदर्शनात् मूलव्याख्ययोरुभयत्रापि सुभटस्वर्गसंक्रमः' इति पाठः स्यादिति भाति. 3 'तद्यूथानां' इति पाठः स्यात्.

**स्फुलिङ्गैः खड्गनिष्पिष्टदन्तदम्भोलिसम्भवैः ।**
**आसीद्द्विरदमेघानामचिरद्युतिकल्पना ॥ २२४ ॥**

**स्फुलिङ्गैरिति**—खड्गैर्निष्पिष्टाः खण्डिता दन्ता दम्भोलयो वज्रा इव तत्सम्भवैः । स्फुलिङ्गैः अग्निकणैः । द्विरदा एव मेघास्तेषां । अचिरद्युतिकल्पना तटित्सृष्टिः । आसीत् ॥ २२४ ॥

**सव्यालमृगसङ्कीर्णा रम्यतुङ्गरथद्रुमा ।**
**विससर्प चमूस्तत्र विन्ध्यवन्येव जङ्गमा ॥ २२५ ॥**

**सव्यालेति**—तत्र विन्ध्ये । सव्यालैर्दुष्टगजसहितैर्मृगैर्यदूनां क्रीडामृगैस्सङ्कीर्णा । रम्यास्तुङ्गाश्च रथा एव द्रुमा यस्यास्सा । चमूः । जङ्गमा सञ्चारिणी । विन्ध्यवन्या विन्ध्यवनराजिरिव । विससर्प प्रसृताऽभूत् । "व्यालो दुष्टगजः प्रोक्तः" इति हलायुधः ॥ २२५ ॥

**तालद्वयसजङ्घाग्र्याः कुम्भैरुत्तम्भिताम्बराः ।**
**गर्जितैस्त्रासयामासुर्गजा वनमतङ्गजान् ॥ २२६ ॥**

**तालेति**—तालद्वयसजङ्घाग्र्याः तालप्रमाणाभिर्जङ्घाभिः श्रेष्ठाः । "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" (पा. सू. ५-२-३७) इति प्रमाणे द्वयसच्प्रत्ययः । कुम्भैः मस्तकैः । उत्ताम्भिताम्बराः कृतोत्तम्भनगगनाः, गगनस्पृशः । गजाः सेनागजाः । गर्जितैः बृंहितैः । वनमतङ्गजान् । त्रासयामासुः ॥ २२६ ॥

**बलयन्त्रणया तत्र गृहीतैर्विपिनद्विपैः ।**
**व्यवर्धयत तां सेनां विन्ध्यपादैरिवोन्नतैः ॥ २२७ ॥**

**बलेति**—तत्र विन्ध्ये । बलेन यन्त्रणया बन्धनेन । गृहीतैः । विन्ध्यस्य पादैः प्रत्यन्तपर्वतैरिव । उन्नतैः । विपिनद्विपैः । ताम् । सेनाम् । व्यवर्धयत वर्धयते स्म ॥ २२७ ॥

**यूथैर्द्विरदशैलानां कनत्कदलिकावनैः ।**
**अन्तरं पूरयामास विन्ध्यनीहारभूभृतोः ॥ २२८ ॥**

**यूथैरिति**—कनन्ति दीप्यमानानि कदलिकावनानि पताकापङ्क्तय एव रम्भावृक्षवनानि येषु [1] तेषाम् । द्विरदानामेव शैलानाम् । यूथैः । विन्ध्यनीहारभूभृतोः विन्ध्याहिमाचलयोः । अन्तरं मध्यम् । पूरयामास । "कदली वैजयन्त्यां च रम्भायां हरिणान्तरे" इति [2] यादवः ॥ २२८ ॥

**अरातिवनितानेत्रैरश्रुधाराधरैरिमाम् ।**
**वीरो वसुमतीमित्थं विदधे देवमातृकाम् ॥ २२९ ॥**

**अरातीति**—वीरः सात्यकिः । इत्थम् । इमाम् । वसुमतीम् । अश्रुधाराधरैः बाष्पधाराणां धारकैः, धाराधरैर्मेघैरित्यपि गम्यते । अरातिवनितानेत्रैः शत्रुस्त्रीणां लोचनैः । देवमातृकां वृष्टिसमृद्धाम् । विदधे चक्रे ॥

देशो नद्यम्बुवृष्ट्यम्बुसम्पन्नव्रीहिपालितः ।
स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥

इत्यमरः ॥ २२९ ॥

**धर्मयूपनिभैस्तस्य जयस्तम्भैस्समन्ततः ।**
**प्ररूढाङ्कुरतरोमाञ्चा प्रत्यभासत मेदिनी ॥ २३० ॥**

**धर्मेति**—धर्मः दुष्टनिग्रहादिरूपः तस्य क्रतुकल्पस्य यूपनिभैः । तस्य सात्यकेः । जयस्तम्भैः । मेदिनी । समन्ततः सर्वत्र । प्ररूढा-

---

[1] तेषामित्यस्य स्थाने तैः इति पाठेन भाव्यमिति भाति. [2] मुद्रितयादवकोशेऽस्यानुपलम्भात् विश्वकोशे दर्शनाच्च लेखकप्रमादात् विश्वपदस्थाने 'यादवः' इति पतितं स्यादिति भाति.

द्भुतरोमाञ्चा प्रत्यभासत भारावतारहर्षाङ्कुरिताद्भुतपुलकशालिनीव बभा-
वित्यर्थः ॥ २३० ॥

**जिताशेष[1]विपक्षस्य बद्धमुक्तावभासिनी ।**
**अभवत्ककुभां तस्य कीर्तिश्श्रवणभूषणम् ॥ २३१ ॥**

जितेति—जिताशेष[1]विपक्षस्य निर्जितनिखिलशात्रवस्य । तस्य । बद्धमुक्तावभासिनी बद्धैरपराधितया शृङ्खलादिनियमितैर्मुक्तैरनपराधितया विसृष्टैर्विपक्षैरवभासमाना । कीर्तिः । ककुभां दिशां दिगृतिजनानाम् । श्रवणभूषणं श्रोत्रस्य भूषणवदाह्लादकृत् । आसीत् । दिशां स्त्रीणां कर्णाभरणमासीदित्यपि गम्यते । [2]तदपि पन्थाभिर्मुक्ताभिरवभासत इति भावः ॥ २३१ ॥

**इति ग्राह्यकराश्चक्रे हरितो हरितोषकृत् ।**
**वीरस्सुरभिणा स्वेन यशसाऽऽवासिताम्बराः ॥ ॥२३२॥**

इतीति—वीरः सात्यकिः । हरितोषकृत् कृष्णस्य तोषं कुर्वन् सन् । सुरभिणा दूरेऽप्याह्लादकत्वसाम्यात् सुगन्धिना । स्वेन यशसा । आवासितमम्बरं आकाशं यासु ताः । हरितः । इति उक्तप्रकारेण । ग्राह्यः प्रतिसंवत्सरं ग्रहीतुं शक्यः करो बलिर्यासु तथाभूताः । चक्रे । यथा हरिं तोषयन् कन्याप्रदः परिहितवसनां कन्यां पाणिग्रहणे प्राप्तकालां करोति । "विद्याचरित्रबन्धुशीलसम्पन्नाय दद्यादाच्छाद्यालङ्कृताम्" इति स्मृत्या पाणिग्रहणस्य परिधानानन्तरकर्तव्यत्वात्तादिति[3] गम्यते । ग्राह्येत्याद्यपक्षे [4]शक्तौ ण्यत्प्रत्ययः । द्वितीयपक्षे तु [5]प्राप्तकाले ॥२३२॥

---

1 विपक्ष्यस्य–**घ. ट.** 2 'तदपि बद्धाभिः' इति शुद्धपाठेनात्र भाव्यमिति भाति. 3 'तद्वदिति' इति शुद्धपाठेनात्र भाव्यमिति भाति. 4 'शकि लिङ् च' (पा. सू. ३-३-१७२) इति सूत्रेणेति भावः. 5 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' (पा. सू. ३-३-१६३) इति सूत्रेणेति भावः.

हृतसर्वस्वदीनानां व्रीडामपनुदान्निव ।
अदिशत् क्षौममाशानां यशोभिर्हंसलक्षणैः ॥ २३३ ॥

हृतेति—हृतेन सर्वस्वेन दीनानां दरिद्राणाम् । आशानाम् । व्रीडाम् । अपनुदन्निव । हंसलक्षणैः । कर्मणि ल्युट् । हंसलक्ष्यमाणैः । यशोभिः । क्षौमं दुकूलम् । आदिशत् । यथा राजानो गृहीतधना अवमानव्रीडाप[1]नोदनाय हंसचिह्नानि दुकूलानि दत्त्वा समायान्ति तद्वदिति भावः ॥ २३३ ॥

स चक्रवत्परिक्रम्य क्षमाचक्रमरिन्दमः ।
क्षपयित्वा रिपून् सर्वान् शौरिपार्श्वं पुनर्ययौ ॥ २३४ ॥

स इति—अरिन्दमः शत्रूणां दमनः, शूरः । 'संज्ञायां भृतॄवृजि' (पा. सू. ३-२-४६) इत्यादिना खश् , मुमागमश्च । सः सात्यकिः । क्षमाचक्रं भूमण्डलम् । परिक्रम्य । सर्वान् । रिपून् । [2] क्षपयित्वा । चक्रवत् सुदर्शनवत् । पुनः । शौरिपार्श्वम् । ययौ ॥ २३४ ॥

सैन्यसिन्धुपथस्तस्य स्थलीशेषितकण्टकः ।
विदधे विस्मयोन्निद्रप्रीतिकण्टकितां भुवम् ॥ २३५ ॥

सैन्येति—स्थलीशेषिताः आवासस्थलमात्रशेषीकृताः कण्टकाः शत्रव एव तरुतीक्ष्णावयवा [3] यस्मिन् सः, तस्य । सैन्यसिन्धुपथः [4] सेनासरिन्मार्गः । भुवम् । विस्मयेनोन्निद्रया उल्लसितया प्रीत्या कण्टकितां सञ्जातपुलकाम् । विदधे ॥ २३५ ॥

---

[1] नोदकानि—च. [2] क्षययित्वा—च. ट. [3] यस्य सः, तस्य—घ. ट. [4] सैन्यसिन्धुमार्गः—घ. ट.

**तमेवमखिलामाशां परिक्रम्योदयस्थितम्।**
**प्रद्योतनसमं पौराः प्रहृष्टाः प्रत्युपासत ॥ २३६ ॥**

**तमिति**—एवं उक्तप्रकारेण। अखिलाम्। आशाम्। परिक्रम्य। उदये अभ्युदये स्थितम्। अत एव प्रद्योतनसमं सूर्यसदृशम्। तं सात्यकिम्। प्रहृष्टाः। पौराः। प्रत्युपासत प्रत्युद्गम्यापूजयन्नित्यर्थः। यथा दिक्चक्रं प्रदक्षिणीकृत्य उदयशैलस्थितं सूर्यं जना आभिमुख्येनोपासते, तद्वदिति भावः॥ २३६ ॥

**सैन्यघोषसमाहूतौ ततो हरिहलायुधौ।**
**तमभ्याजग्मतुर्दूरादुग्रसेनपुरोगमौ ॥ २३७ ॥**

**सैन्येति**—ततः तस्य दिग्विजयानिवृत्त्यनन्तरम्। सैन्यघोषेण समाहूतौ ज्ञापिततदागमनौ। उग्रसेनः पुरोगमो ययोस्तौ, पुरस्कृतोग्रसेनौ। हरिहलायुधौ। तं सात्यकिम्। दूरात्। अभ्याजग्मतुः॥ २३७ ॥

**ददृशे सात्यकिस्तत्र राममुख्यैस्सराजकः।**
**अन्यैस्सह दिशापालैराखण्डल इवापरः॥ २३८ ॥**

**ददृश इति**—तत्र सैन्ये। सराजकः राजसमूहेन सहितः। "गोत्रोक्ष" (पा. सू. ४-२-३९) इत्यादिना राजशब्दात्समूहार्थे वुञ्प्रत्ययः। सात्यकिः। अन्यैर्दिशापालैः अग्न्यादिभिस्सह। अपरः। आखण्डलः इन्द्र इव। राममुख्यैः बलदेवप्रभृतिभिः। ददृशे दृष्टः॥ २३८ ॥

**अभिवन्द्य स तान्वन्द्यानभिव्यक्तपराक्रमः।**
**तदनुप्लवभावेन प्राविशद्द्वारकां पुरीम्॥ २३९ ॥**

**अभिवन्द्येति**—अभिव्यक्तपराक्रमः दिग्विजयेन प्रकटविक्रमः। सः सात्यकिः। वन्द्यान् वन्दनीयान्। तान् उग्रसेनमुखान्। अभि-

वन्द्य अभिवाद्य । तदनुप्लवभावेन तस्योग्रसेनस्यानुचरत्वेन। द्वारकाम् । पुरीम् । प्राविशत् प्रविष्टोऽभूत् ॥ २३९ ॥

प्रस्थितौ परिमेयानि पश्चादुपाचितानि सा ।
[1]जग्रसे यदुसैन्यानि जगन्तीव हरेस्तनुः ॥ २४० ॥

प्रस्थिताविति--सा द्वारका । प्रस्थितौ [2]प्रचाता तेन ? परिमेयानि । पश्चात् । उपचितानि दिगन्तराकृष्टराजकेन प्रवृद्धानि। यदुसैन्यानि। हरेः । तनुः । जगन्तीव । जग्रसे ग्रस्तवती । जगन्त्यपि सर्गादौ हरिमूर्तेः परिमेयानि निर्गतानि "ब्राह्मणोऽस्य मुखमासीत्" (पु. सू. ) इत्यादीनां केषांचिदेव तनो निर्गमश्रवणात्, प्रतिसर्गे तु तदनन्तरं प्रवृद्धानि चतुर्दशापि भुवनानि तत्र प्रविशन्तीति उपमानात् ॥ २४० ॥

अष्टासु दिक्षु विभवैरुपसङ्गृहीतैः
यक्षास्पदप्रहसनी यदुराजधानी ।
सत्यानुभाववसुदेवसुत[3]प्रसत्त्यै
सम्भूतदिक्पतिविभूतिरिवावभासे ॥ २४१ ॥

अष्टास्विति—अष्टासु । दिक्षु । उपसङ्गृहीतैः उपार्जितैः । विभवैः धनैः । यक्षास्पदस्य अलकायाः प्रहसिनी [4]प्रहसिततदतिशायिनीति यावत् । बहुलग्रहणात्कर्तरि [5]लुट्, टित्त्वाद्दीर्घः । यदूनां राजधानी द्वारका । सत्य परमार्थः अनुभावः श्रुत्यादिप्रसिद्धो महिमा यस्य तस्य वसुदेवसुतस्य प्रसत्त्यै प्रसादाय । संभूता सम्पन्ना दिक्पतीनां इन्द्रादीनां विभूतिर्यस्याः तथाभूतेव, इन्द्रादि[6]प्रेषितनिजनिखिलैश्वर्येव । आवभासे ॥ २४१ ॥

---

[1] जगृहे–ग्र. द. मु. [2] 'प्रयाणकाले' इत्यत्र शुद्धपाठ स्यात्. [3] प्रसूत्यै–ग्र. मु. [4] 'अत्र प्रहसित्री तदतिशायिनी' इति शुद्धपाठेन भाव्यमिति भाति. [5] 'ल्युट्, टित्त्वात् ङीप्' इति शुद्धपाठेनात्र भाव्यमिति भाति. [6] 'प्रेषितनिखिलै'–घ. च.

**अभ्यर्च्य पूर्वविभवादधिकैः प्रदिष्टैः**
**नाकाधिपानिव नवोपहृतान्नरेन्द्रान् ।**
**धर्मानुपालननियोगनिरूढचित्तान्**
**प्रास्थापयत्प्रतिदिशं प्रथमो यदूनाम् ॥ २४२ ॥**

**अभ्यर्च्येति**—यदूनां प्रथमः श्रेष्ठः कृष्णः। नवोपहृतान् दिग्विजयेन प्रत्यग्रानीतान्। धर्मानुपालननियोगनिरूढचित्तान् धर्मं सम्यगनुपालयतेति स्वकीये नियोगे लग्नमानसान्। नरेन्द्रान्। पूर्वविभवात् तेषां प्राचीनैश्वर्यात्। अधिकैः। प्रदिष्टैः स्वदत्तैर्धनैः। नाकाधिपान् देवानिव। अभ्यर्च्य सादरं सम्पूज्य। प्रतिदिशं प्रास्थापयत् तत्तदावासभूतां दिशं प्रति प्रेषयामास ॥ २४२ ॥

**मणिमकुटसहस्रैर्वासुदेवस्य भूपाः**
**पदसविधनिषण्णां पादुकामर्चयित्वा ।**
**प्रतिययुरुपलब्धैः पारिजातप्रसूनैः**
**सुरभयितुमुपेत्य स्वावरोधान् प्रसाद्यान् ॥ २४३ ॥**

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयनाम्नि महाकाव्ये द्वाविंशस्सर्गः

**मणीति**—भूपाः ते राजानः। मणिमकुटानां सहस्रैः। वासुदेवस्य। पदसविधनिषण्णां चरणसमीपस्थिताम्। [1]पादुकाम्। अर्चयित्वा अभ्यर्च्य, शिरसा प्रणम्येति यावत्। उपलब्धैः प्रसन्नाद्वासुदेवाल्लब्धैः। पारिजातस्य प्रसूनैः। प्रसाद्यान् चिरविरहव्यथापनो-

[1] पादुकामभ्यर्च्य—घ. ट.

दाय प्रसादनीयान् । स्वावरोधान् स्वेषामन्तःपुरवनिताः । उपेत्य । सुरभायितुं । प्रतिययुः । सहस्रशब्दोऽत्र अपरिमितसङ्ख्यावाची "विश्वं शतं सहस्रं च सर्वमक्षयवाचकम्" इति महाभारते । तत्राप्यनुशासनात् ? ॥ २४३ ॥

इति श्रीमद्भरद्वाजकुलतिलकविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनुना अप्पयदीक्षितेन विरचिते यादवाभ्युदयव्याख्याने द्वाविंशस्सर्गः ॥

---

## त्रयोविंशस्सर्गः

इत्थं समापितदेवकार्यान्तरस्य भगवतः कृत्यशेषं भारतयुद्धेन भूभारशेषावतरणं वर्णयितुं प्रस्तौति—

**अथाधिकारच्यवनाद्य इन्द्राः**
**पञ्चाभवन् पाण्डुसुताः पृथिव्याम् ।**
**जयार्थिनस्ते जगदेकनाथं**
**प्रपेदिरे सत्त्वधनास्सदाराः ॥ १ ॥**

**अथेति**—अथ दिग्विजयानन्तरं । ये [1]पूर्वपूर्वमन्वन्तरेषु स्थिताः । पञ्चेन्द्राः । अधिकारच्यवनात् देवेन्द्रत्वरूपाधिकारच्युतेः । पृथिव्यां । पञ्च । पाण्डुसुताः युधिष्ठिरभीमार्जुननकुलसहदेवाः पाण्डवाः । अभवन् । ते पाण्डवाः । सत्त्वं सत्त्वगुण एव धनं येषां तथोक्ताः, सत्त्वगुणमेव धनवत् संरक्षन्तस्सन्तः । जयार्थिनः अक्षच्छलापहृतराज्यानां कौरवाणां जयमर्थयमानास्सन्तः । सदाराः दारैर्द्रौपद्या सहितास्सन्तः । जगतामेकनाथं कृष्णं । प्रपेदिरे शरणं जग्मुः । निवृत्ताधिकाराः पञ्चेन्द्राः शम्भुनियोगात् पृथिव्यां पाण्डवा जाता इति महाभारते (महाभारते आदि प. २१४ अध्या. २५-३५ श्लो) कथा ॥ १ ॥

**तमोपहैस्तत्त्वविदामृषीणां**
**वाक्यैस्त्रिवेदीमनुसञ्जिहानैः ।**
**कृष्णं यथावत्कृतिनो विदन्तः**
**तस्याभवन् प्राणसमास्सखायः ॥ २ ॥**

**तमोपहैरिति**—तमोपहैः तमोगुणापहर्तृभिः । त्रिवेदीं । अनुसञ्जिहानैः अनुसरद्भिः । तत्वविदामृषीणां व्यासनारदमार्कण्डेया-

---

[1] पूर्वमन्वन्तरेषु—घ.

दीनां । वाक्यैः । कृष्णं । यथावत् सम्यक् परमपुरुषरूपतया । विदन्तः जानन्तः । कृतिनः धन्याः । पाण्डवाः । तस्य कृष्णस्य । प्राणसमाः । सखायः सुहृदः । आसन् ।

प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।
उदारास्सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥

(भगवद्गीता ७–१८)

इत्यादिभगवद्वचनात् स्वधर्मज्ञानिषु स्वात्मवदेव भगवान् प्रीतिं करोतीति भावः ॥ २ ॥

**तदाश्रयास्तत्प्रणिधेयकृत्याः**
**तेनैव नाथेन सदा सनाथाः ।**
**अपारयन् योगिभिरप्यजय्यान्**
**बाह्यान्तरान् जेतुमरातिवर्गान् ॥ ३ ॥**

**तदाश्रया इति**—स कृष्ण आश्रयश्शरणं येषां ते तदाश्रयाः । तत्प्रणिधेयकृत्याः तेन विचार्ययोगक्षेमाः । तेनैव । नाथेन नियन्त्रा । सदा । सनाथाः सनियन्तृकाः, [1]स तदा [2]तन्नियमितं वपरिसञ्चरन्तश्च सन्तः । योगिभिः—योगः समाधिभेदाद्युपायस्समाधिश्च, "योगस्सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः, तद्वद्भिरपि । अजय्यान् जेतुमशक्यान् । बाह्यान् दुर्योधनादि [3]रूपान् कामक्रोधादिरूपानप्यरातिवर्गान् । जेतुं । अपारयन् पारयन्ति स्म, शक्ता अभवन्नित्यर्थः । 'पार तीर कर्मसमाप्तौ' (चुरादि १९१२) इति धातुरिह शक्त्यर्थः ॥ ३ ॥

[1] अत्र "सर्वदा यथातन्नियमितं सञ्चरन्तश्च सन्तः" इति शुद्धपाठः स्यात्.
[2] सन्नियमितं–घ. [3] 'रूपानान्तरान् कामक्रोधादि' इति ग्रन्थेनात्र भाव्यमिति भाति.

धार्मिकैरेतैर्ज्ञातयो निपातिता इत्यनौचित्यं परिहर्तुं ज्ञातीनां प्रथमापराधं श्लोकषट्केनाह—

**प्रतिक्रियाः प्राग्भवदुष्कृतानां**
**प्राणोपरोधेऽपि निरुद्धपापाः ।**
**धीरास्त्रिलोकीसुहृदः प्रसादात्**
**विपाकरम्या विपदः प्रसेहुः ॥ ४ ॥**

**प्रतिक्रिया इति**—प्राणोपरोधे प्राणबाधेऽपि । निरुद्धपापाः पापाचरणविमुखाः । धीराः ते । प्राग्भवदुष्कृतानां प्रतिक्रियाः कर्मणां भोगेन क्षयानियमात् पूर्वजन्मपापपरिहाररूपाः । त्रिलोकीसुहृदः त्रैलोक्यहितैषिणः कृष्णस्य । प्रसादात् । विपाकरम्याः (भावित्रीः) परिणामरमणीया भविष्यन्तीः । विपदः । प्रसेहुः प्रसहन्ति स्म । सहतेः [1]परस्मैपदमष्टमसर्गे (यादवाभ्युदये ८–३०) समर्थितम् ॥ ४ ॥

ता एव विपदश्शिष्टोत्तरश्लोकैर्दर्शयति—

**अलङ्घयन्विश्वपतेः प्रसादात्**
**वृत्तिं पराचीमिव वीतरागाः ।**
**अरातिभिश्छद्मविधिप्रवीणैः**
**आपादितामग्निजलादिपीडाम् ॥ ५ ॥**

**अलङ्घयन्निति**—छद्मविधिप्रवीणैः कपटविधानकुशलैः । अरातिभिः दुर्योधनादिभिः । आपादितां । अग्निजलादिपीडां ।

---

1 'षह मर्षणे' (चुरादि १८१०) इति धातु. 'आधृषाद्वा' (गणसूत्र २०२) इति विकल्पितचुरादिण्यन्तः परस्मैपदी युजादौ पठ्यते । तस्मा परस्मैपदमुपपद्यते । ये तु युजादौ तत्पाठं नेच्छन्ति, तन्मते 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्' (परि ० ७) इति 'षह मर्षणे' (भ्वादि ८१२) इति भ्वादिकादेव वा परस्मैपदमिति तत्रोक्तम् । अत एव 'स एवार्थं नागः सहति कलभेभ्यः परिभवम्' इति प्रयोगश्च उपपद्यते.

वीतरागाः। पराचीं वृत्तिं मनसो बाह्यविषयेषु व्यापृतिमिव। विश्वपतेः कृष्णस्य। प्रसादात्। अलङ्घयन् अतरन्। वीतरागाणां मनोनिग्रहोऽपि भगव[1]त्प्रसादैकलभ्यः। अग्निपडा वारणावते जतुगृहदाहः। जलपडा सुप्तस्य भीमस्य गाढं बद्ध्वा गङ्गायां निपातनम्। आदिशब्देन नगरादिपीडा गृह्यते॥ ५॥

कलिङ्गनीतिं कलहैकतानां
कर्णं च पार्थेन निबद्धवैरम्।
आस्थाय दुश्शासनपूर्वजन्मा
धर्मोत्तरान् जेतुमियेष पार्थान्॥ ६॥

कालिङ्गेति—दुश्शासनस्य पूर्वजन्मा दुर्योधनः। [2]कलहैकतानां कलहसम्पादनैकपरां। कलिङ्गस्य सौबलमन्त्रिणो नीतिं, तदुपदिष्टां नीतिं। पार्थेन अर्जुनेन। निबद्धवैरं। कर्णं च। आस्थाय अवलम्बय। धर्मोत्तरान्। पार्थान्। जेतुं। इयेष॥ ६॥

स राजसूयक्रतुधर्मपत्नीं भीमेन
गाण्डीवभृता च मान्याम्।
द्यूतच्छलात्प्रापितदासभावां
साध्वीं मुधा पर्यभवत्सभायाम्॥ ७॥

स इति—सः दुर्योधनः। [3]राजसूयक्रतोर्युधिष्ठिरस्य तस्य धर्मपत्नीं। भीमेन भीमसेनेन। गाण्डीवभृता अर्जुनेन च। मान्यां अभिमाननीयां। विशेषणद्वयेन तस्याः परिभवे दृष्टादृष्टविरोधश्च दर्शितः, एवंभूतामपि। द्यूतच्छलात् [4]देवनव्याजात्। प्रापितदासभावां

---

[1] प्रसादलभ्यः—घ. ट. [2] कलहे एकतानां एकाग्राम्, कलह—च [3] 'राजसूयः क्रतुर्यस्य तस्य युधिष्ठिरस्य' इति पाठश्चेत् सुस्पष्ट इति भाति. [4] देवनकैतवात्—च.

म्भितदास्यां। साध्वीं पतिव्रतां द्रौपदीं। मुधा वृथैव। सभायां। पर्यभवत् आकर्षणपरुषभाषणवसनापहरणैः परिभवति स्म ॥ ७ ॥

अनन्यनाथां स्थितिमाप्नुवन्त्या
नाथस्स्वसम्बोधननामगर्भम्।
शुश्राव दूरान्तरितोऽपि शौरिः
प्राक्रोशनं पार्थपतिव्रतायाः॥ ८॥

**अनन्येति**—नाथः जगत्स्वामी। शौरिः कृष्णः। अनन्यनाथां पार्थानां [1]द्यूत इति दुर्योधनदास्यत्वेन रक्षकान्तररहितां। स्थितिं वृत्तिं। आप्नुवन्त्याः। पार्थानां पतिव्रतायाः द्रौपद्याः। [2]स्वसम्बोधननामगर्भं प्राक्रोशनं त्राहि मां कृष्णकृष्णेत्येवंरूपं वस्त्रापहारसमयाक्रोशम्। दूरान्तरितः दूरव्यवहितोऽपि। शुश्राव ॥ ८ ॥

मिथ्याविचारान्मिषतां गुरूणां
प्रभु[3]स्सतां पाण्डवधर्मपत्नीम्।
दुश्शासनव्याकुलितान्तरीयां
अक्षय्यकौशेयवतीमकार्षीत्॥ ९॥

**मिथ्येति**—सतां प्रभुः कृष्णः। मिथ्याविचारात्, ल्यब्लोपे पञ्चमी, दासीति दुर्योधनेन सदस्यानीतया द्रौपद्या प्रथमं स्वस्य दास-

---

1 'द्यूतकृतदुर्योधनदास्यत्वेन' इति पाठः स्यात्.

2 शङ्खचक्रगदापाणे द्वारकानिलयाच्युत।
गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागताम्॥
हा कृष्ण द्वारकावासिन् क्वासि यादवनन्दन।
इमामवस्थां संप्राप्तामनाथां समुपेक्षसे (सभापर्व–९० अध्या. ४३–४७ श्लो.)
इत्यादि प्रमाणमत्रानुसंधेयम्.

3 'सः तां पाण्डवधर्मपत्नीं' इति वा पदविभागोऽत्र श्लोके बोध्यः.

भावं पणीकृत्य जितेन युधिष्ठिरेण पश्चात्पणीकृताऽहं कथं दासी स्यामिति पृष्टे, तन्निर्णयार्थमिव मिथ्याविचारमभिनीय। मिषतां दुर्योधनभयात् किमप्यनुक्त्वा केवलमुन्मील्य तिष्ठताम्। गुरूणां भीष्मद्रोणादीनां, अनादरे षष्ठी,ताननादृत्य। दुश्शासनेन व्याकुलितोत्तरीयां अपकृष्टोत्तरीयाम्। पाण्डवानां धर्मपत्नीं। अक्षय्याणि क्षेतुमशक्यानि कौशेयानि क्रिमिकोशविकाररूपाणि वस्त्राणि तद्वतीम्। अकार्षीत् करोति स्म ॥ ९ ॥

अवाप्तुकामाः प्रबलैरमित्रैः
अक्षच्छलेनापहृतं स्वराज्यम्।
निक्षिप्तकर्तव्यभरा बभूवुः
सत्त्वाधिकाः [1]सात्वतयूथनाथे ॥ १० ॥

अवाप्तुकामा इति—प्रबलैः। अमित्रैः शत्रुभिः। अक्षच्छलेन देवनच्छद्मना। अपहृतं। स्वराज्यं। अवाप्तुं कामो येषां ते। सत्त्वाधिकाः सत्त्वगुणप्रधानाः पाण्डवाः। सात्वतानां सात्वतवंश्यानां यदूनां यूथस्य नाथे कृष्णे। निक्षिप्तकर्तव्यभराः न्यस्तकार्यभराः। बभूवुः ॥ १० ॥

स्वातन्त्र्यगन्धद्विरदाङ्कुशेन
स्वेनैव शीलेन विनीयमानः।
अनन्यलभ्यं प्रतिलम्भितोऽभूत्
प्रभुस्स्वयं पाण्डवदूतभावम् ॥ ११ ॥

स्वातन्त्र्येति—प्रभुः कृष्णः। स्वातन्त्र्यमेव गन्धद्विरदो मत्तगजः तस्याङ्कुशेन अङ्कुशवन्नियामकेन। स्वेन आत्मीयेन। शीलं

---

[1] सात्विकयूथ-ट.

महतो मन्दैस्सह नीरन्ध्रसंश्लेषस्वभावरूपो गुणः, तेनैव। विनीयमानः विनीतः क्रियमाणस्सन्। अनन्यलभ्यं एवंशीलादन्यैर्देवादिभिरपि लम्भयितुमशक्यं। स्वयं। पाण्डवानां दूतभाव कौरवैस्सह संधानाय दूतत्वं। स्वयं। प्रतिलम्भितः प्रापितः अभूत्॥ ११॥

स तादृशीमाद्रियत [1] त्रिधामा
प्रेष्यक्रियां प्रेषितदेवबृन्दः।
ननु प्रभूणां निरपेक्षभूम्नां
प्रसाधनं भक्तजने गुणत्वम्॥ १२॥

स इति—प्रेषितदेवबृन्दः तत्तत्कृत्येषु स्वयं नियुक्तदेवसमूहः। सः त्रिधामा कृष्णः। तादृशीं तथाभूताम्। पाण्डवहितार्थं, प्रेष्यक्रियाम्। आद्रियत आद्रियते स्म। अत्रार्थान्तरयति—नन्विति। निरपेक्षभूम्नां इतरापेक्षारहितमहिम्नाम्। प्रभूणां। भक्तजने विषये। गुणत्वं उपसर्जनत्वम्। प्रसाधनं अलङ्कारो ननु। परोपसर्जनत्वं तदाधेयमहिम्नामेव दोषः, स्वतस्सिद्धमहिम्नां तु दयासौशील्यादिव्यापकतया गुण एवेति भावः॥ १२॥

[2] अपि प्रभूतानुगुणाक्रियाभ्यः
श्लाघापदं तत्त्वविदां बभूव।
अनन्यतन्त्रस्य [3] विभोस्तदेतत्
नाथोचितं नन्तृषु पारतन्त्र्यम्॥ १३॥

अपीति—अनन्यतन्त्रस्य अनन्याधीनस्य परमस्वतन्त्रस्य। विभोः कृष्णस्य। प्रभूताः प्रचुराः अनुगुणा निजैश्वर्यानुरूपाः क्रियाः

---

[1] क्षीरार्णवादित्यमण्डलपरमपदरूपाणि त्रीणि धामानि स्थानानि यस्येत्यर्थः। एभिराचार्यपादैरेव (यादवा. २४ सर्गे ४ श्लो.) "श्रुतिशतमहिते" इत्यत्र परमपुरुषस्य प्रियाणि त्रीणि धामानीत्यभिहितं दृश्यते। [2] अपि प्रभुत्वानुगुण—ग्र. मु. [3] विभोस्तदा तन्नाथोचितं—ग्र. मु.

स्वेच्छाधीनजगत्सृष्टिसंहारब्रह्मादिसकलदेवतानियमनादयः ताभ्योऽपि । नाथोचितं दयादिसद्गुणख्यापकतया स्वाम्युचितं । नन्तृषु भक्तेषु । तदेतत् पाण्डवदौत्यरूपं । पारतन्त्र्यं । तत्त्वविदां भक्तपारतन्त्र्यं स्वातन्त्र्यस्य परा काष्ठेति तत्त्वं जानतां महतां । श्लाघापदं । बभूव ॥ १३ ॥

तपस्यतः पुत्रसमुद्भवार्थं
मार्गागतं मोचयतः पिशाचम् ।
अजन्मनो जन्मभृतश्च शौरेः
स्वामित्वसंवादि बभूव दूत्यम् ॥ १४ ॥

तपस्यत इति—पुत्रसमुद्भवार्थं । तपस्यतः कैलासं गत्वा तपश्चरतः । मार्गागतं तपोर्थगमनसमय एव मार्गे समागतं । पिशाचं घण्टाकर्णनामानं । मोचयतः पिशाचत्वप्रापकपापात् संसाराच्च मोचयतः । अजन्मनः जन्मरहितस्य । अथापि जन्मभृत अवतारेषु जन्मानि बिभ्रतश्च । शौरेः । दूत्यं दूतत्वं । स्वामित्वसंवादि स्वामित्वानुरोधि । बभूव । यथा स्वयमपवर्गान्तफलप्रदस्यैव पुत्रार्थं तपश्चर्या, यथा च स्वतो जन्मरहितस्यैवावतारजन्मभाक्त्वं, तथा स्वामिन एव सतो दूत्यं पाण्डवानुग्रहार्थमुपपद्यत इति भावः ॥

पस्पर्शाङ्गं तथा विष्णुः पिशाचस्याथ सर्वतः ।
करेण मृदुना देवः पापात्तं मोचयन् प्रभुः ॥
ततस्तस्य बभौ रूपं कामरूपसमप्रभम् ॥

इत्यादिहरिवंशवचनेन,

अक्षयस्स्वर्गवासस्ते यावदिन्द्रो वसिष्यति ।
तावत्स्वर्गे भवानस्तु शासनान्मम नान्यतः ॥

नष्टे शक्रे ततस्स्वर्गात् सायुज्यं मम गच्छतु ।

इति तदनन्तरं भगवद्वचनेन घण्टाकर्णस्य पिशाचत्वप्रापकपापात् संसाराच्च मोचनमुक्तम् ॥ १४ ॥

**सरोषसीरायुधहेतिशक्त्या**
**साचीकृतां कौरवराजधानीम् ।**
**अद्यापि गङ्गासलिलप्रवाहे**
**प्रक्रान्तपातामिव सम्प्रपेदे ॥ १५ ॥**

**सरोषेति**—सरोषस्य स्वयंवरस्थां दुर्योधनसुतां प्रसह्य हरन् साम्बः कौरवैर्गृहीत्वा आजिनिबद्ध इति कुपितस्य सीरायुधस्य बलदेवस्य हेतिरायुधं सीरं तस्याश्शक्त्या बलेन । साचीकृतां अवनमिताम् । अत एव अद्यापि । गङ्गासलिलप्रवाहे प्रक्रान्तपातां उपक्रान्तपतनामिव स्थिताम् । कौरवाणां राजधानीं । सम्प्रपेदे ।

[1] अद्यापि वः पुरं ह्येतत्सूचयद्रामविक्रमम् ।

समुन्नतं दक्षिणतो गङ्गायाः संप्रदृश्यते ॥ (श्रीभागवते १०·६८-५४) इति भागवतवचनम् ॥ १५ ॥

**खद्योतवद्दर्शितखञ्जदीप्तीन्**
**प्रज्ञादृशो भूमिभृतस्सभायाम् ।**
**प्राप्तोदयो भानुरिव त्रिधामा**
**प्रच्छादयामास कुरून् स्वधाम्ना ॥ १६ ॥**

**खद्योतवदिति**—भानुः सूर्य इव । प्राप्तोदयः कुरूणां पुरे प्राप्ताविर्भावः । भानुपक्षे–उदयः उदयाद्रिः । त्रिधामा कृष्णः । प्रज्ञैव दृग्यस्य तस्य बाह्यदृष्टिरहितस्य । भूमिभृतः धृतराष्ट्रस्य ।

---

1 'अद्यापि च पुरं' इति मुद्रिते पाठः.

सभायाम् । खद्योतवत् दर्शितखञ्जदीप्तीन् तद्वद्दर्शितमन्दप्रकाशान् । कुरून् भीष्मादीन् । स्वतेजसा । प्रच्छयामास तिरश्चकार ॥ १६ ॥

तदागमेन प्रतिपन्नहर्षाः
तद्दर्शनेनाहितपारवश्याः ।
अतर्कितप्रस्मृतवैरबन्धाः
वृत्तिं द्विषन्तो विदधुर्यथार्हम् ॥ १७ ॥

तदागमेनेति—तस्य कृष्णस्यागमेन । प्रतिपन्नहर्षाः प्राप्तसन्तोषाः । तस्य दर्शनेनाहितपारवश्याः कृतहर्षोद्रेकपारतन्त्र्याः । अत एव अतर्कितं सहसा प्रस्मृतवैरिबन्धाः । द्विषन्तः वैरिणः कौरवाः । यथार्हं यथोचितम् । प्रश्रयपूजाद्युपचाररूपां वृत्तिं । विदधुः चक्रुः ॥ ॥ १७ ॥

उलूखले भक्तगुणे च बद्धं
गुणोत्तरे गोपवधूस्तने च ।
इयेष [1]बन्धुं जगदेकबन्धुं
दुर्योधनो दुस्त्यजमृत्युपाशः ॥ १८ ॥

उलूखल इति—नन्दगृहस्योलूखले । भक्तानां गुणे भक्तिविश्वासरूपे । गुणोत्तरे औन्नत्यकाठिन्यादिगुणश्रेष्ठे । गोपवधूनां स्तने च । बद्धं एतावत्येव बद्धं, तदन्यत्र बलाद्बद्धुमशक्यमिति भावः । जगतामेकं बन्धुं बन्धुवाद्धितैषिणं कृष्णम् । दुस्त्यजो मृत्युपाशो येन सः अवश्यंभाविनिपातो दुर्योधनः । बन्धुं । इयेष । अस्मिन् बद्धे सहायरहिताः पाण्डवा निरुद्यमा भवेयुरिति हृदयेनेति भावः ॥ १८ ॥

[1] बद्धुं—अ. मु.

प्रकाशयन् किञ्चिदिवाप्रमेयः
प्रभावमात्मीयमनन्यवेद्यम् ।
मुहुः प्रतीपाचरणोत्सुकानां
मोघाशतां मूढधियामकार्षीत् ॥ १९ ॥

प्रकाशयन्निति—अप्रमेयः अपरिच्छेद्यः । अनन्यवेद्यं अन्यैर्वेत्तुमशक्यम् । आत्मीयं । प्रभावं महिमानम् । किञ्चिदिव प्रकाशयन् विश्वरूपप्रदर्शनेन अल्पं द्योतयन् । प्रतीपाचरणे विरुद्धाचरणे बन्धने उत्सुकानाम् । मूढधियां अज्ञानान्धमनसां दुर्योधनदुश्शासनादीनाम् । मुहुः अत्यन्तम् । मोघाशतां [1] विफलाभिलाषतां । अकार्षीत् ॥ १९ ॥

स्ववेदितं संसदि धार्तराष्ट्रे
सन्धित्सतो धर्मसुतस्य वाक्यम् ।
अनाददाने मुरभिन्निवृत्तः
सानुग्रहो विग्रहमन्वमंस्त ॥ २० ॥

स्ववेदितमिति—मुरभित् कृष्णः । संसदि । स्ववेदितं स्वेन निवेदितं । सन्धित्सतः सन्धातुमिच्छतः । धर्मसुतस्य । वाक्यं । धार्तराष्ट्रे धृतराष्ट्रसुते । अनाददाने अगृह्णति सति । निवृत्तः हितोपदेशादुपरतः । सानुग्रहः अनुग्रहसहितः, भूभारमवतारयितुकामस्य तदेवानुकूलं मन्यमानश्च सन् । विग्रहं कलहं । अन्वमंस्त अनुमनुते स्म ॥ २० ॥

---

[1] विफलाभिलाषत्वं–छ. ट.

नरांशजुष्टेन धनञ्जयेन
[1]रथी भवन् सारथिरात्मना च ।
धनुर्भृता तोत्रभृता च भेजे
पृथक्त्वमैक्यं च यथाप्रमाणम् ॥ २१ ॥

**नरांशेति**—धनुर्भृता धन्विना । तोत्रभृता तोत्रं सारथेः धुर्यक्षेपणदण्डः, तद्बिभ्रता च । नरांशजुष्टेन नरांशाधिष्ठितेन । धनञ्जयेन अर्जुनरूपेण । आत्मना स्वेन रूपेण च । रथी सारथिश्च भवन् कृष्णः । सर्वत्र यथासङ्ख्यमन्वयः । यथाप्रमाणं पृथक्त्वमैक्यं च भेजे, आत्मानः स्वतः परस्परं पृथग्भूताः, ऐक्यं तु सर्वानुभूतान्तर्यामिरूपपरमात्मदृष्ट्येति प्रमाणस्थितिः, तदनतिक्रमेण रथिसारथिभावेन पृथक्त्वम् । अर्जुनेऽपि नरांशावेशात्तद्दृष्ट्या ऐक्यं च अभजदित्यर्थः । तेन सारथिकृत्यवद्रथिकृत्यं प्रतिपक्षहननमप्यर्जुना-[2]धिष्ठात्मनरांशेन कृष्णस्स्वयमेव कृतवानिति दर्शितम् ॥ २१ ॥

रथाधिरूढं च रथं च रक्षन्
यथार्थतो दर्शयति स्म यन्ता ।
त्र्यन्तचिन्तानिरपेक्षमीशः
तत्तादृशं तत्त्वविभागमाद्यम् ॥ २२ ॥

**रथाधिरूढमिति**—रथाधिरूढं अर्जुनं च । रथं च । रक्षन् । यन्ता सारथिरूप ईशः । त्र्यन्तचिन्तानिरपेक्षं—

संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः ।
(श्वेताश्वतरोपनिषत् १-८)

---

[1] 'रथीभुवा सारथिनाऽऽत्मना च' इति अनेकलिखितमुद्रितकोशोपलभ्यमानपाठ-परिशीलनायां भेजे इत्युत्तरार्धे कर्मणि लकार इति प्रतीयते. [2] 'धिष्ठातृनरांशेन' इति पाठेनात्र भाव्यमिति भाति.

"भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्"
(श्वेताश्वतरोपनिषत् १-१२)

इत्यादिवेदान्तचिन्तापेक्षारहितं यथा तथा। तत्तादृशं श्रुतिसिद्धत्वात् प्रसिद्धरूपप्रकरणं। अत एव आद्यं तन्त्रसिद्धेभ्यो द्रव्यगुणकर्मादिविभागेभ्यः प्राक् सिद्धम्। चिदचिदीश्वररूपतत्त्व[1]त्रयभागं। यथार्थतः तत्त्वेन रूपेण। दर्शयति स्म। चेतनस्य रथिनः अचेतनस्य तद्भोग्यस्य रथस्य च रक्षकतया अवस्थानेन चिदचिदीश्वररूपतत्त्वत्रयविभाग एव पारमार्थिक इति दर्शितवानित्यर्थः ॥ २२ ॥

[2]पुरःस्थिते गोप्तरि विश्वहेतौ
पश्चादवस्थायिनि तत्प्रवर्त्ये[3]।
[4]अनन्ययोगात्स रथो बभार
प्राधीतवेद्यां प्रणव[5]प्रवृत्तिम् ॥ २३ ॥

पुरःस्थित इति—गोप्तरि रक्षितरि। विश्वहेतौ जगज्जनके कृष्णे। पुरःस्थिते। तत्प्रवर्त्ये तन्नियम्ये अर्जुने। पश्चादवस्थायिनि सति। अनन्ययोगात्, ल्यब्लोपे पञ्चमी, पुरुषान्तरयोगाभावमवाप्य। स रथः। प्रकृष्टमधीतं येषां तैः बहुश्रुतैः वेद्यां। प्रणवस्य प्रवृत्तिं स्थितिं। बभार। अकारोकारमकाररूपवर्णत्रयात्मकस्य प्रणवस्य अकारो विष्णुवाचको लुप्ततादर्थ्यचतुर्थीविभक्त्यन्तः। उकारस्तादर्थ्यप्रतिसम्बन्धिशेषित्वस्य भगवदन्ययोगव्यवच्छेदार्थः। मकारस्तादर्थ्यरूपशेषत्वाश्रयस्य जीवस्य वाचकः। तथा च जीवस्य भगवदेकशेषत्वं प्रणवस्यार्थ इति सम्प्रदायस्थितिः।

---

1 'त्रयविभागं' इति सुस्पष्टः पाठः. 2 अयं श्लोकः झ—पुस्तके 'स्वहस्त' इति ३६ तमश्लोकात्पूर्वं दृश्यते. 3 तन्नियम्ये—घ. 4 'अनन्ययोगात्प्रणवप्रवृत्तिं बभार वेद्यां स रथः प्रतीतः'—इत्युत्तरार्धपाठो घ-कोशे मुद्रिते च दृश्यते। स च व्याख्यात्रगृहीतः. 5 प्रतीतेः—ग्र. दे. मु.

तत्र [1]वाच्यवाचकाधारभेदोपचारादकारे विष्णौ पुरःस्थिते तन्नियम्ये च मकारे जीवे पश्चात् स्थिते मध्ये अन्ययोगव्यवच्छेदकमुकारमवाप्य प्रणवो वर्तत इति तत्तुल्य आसीदित्यर्थः । 'अव रक्षण-' (भ्वादि ६००) इति धातोः कर्तरि क्विपि [2]धातुर्वकारस्य वलि लोपे च सति अकारो रक्षितृत्वेन भगवन्तमाचष्ट इति तदर्थतया गोप्तरीत्युक्तम् । 'अकारो वै सर्वा वाक्' इति श्रुतेः सर्ववाचकप्रकृतिभूत एव च—

समस्तशब्दमूलत्वादकारस्य स्वभावतः ।
समस्तवाच्यमूलत्वात् ब्रह्मणोऽपि स्वभावतः ॥ (वामनपुराणं)
वाच्यवाचकसम्बन्धस्तयोरर्थात्प्रतीयते ॥

इत्युक्तरीत्या सर्वकारणतयाऽपि तमाचष्ट इति विश्वहेतावित्युक्तम् ॥ २३ ॥

**प्रभुर्बभौ प्रग्रहतोत्रपाणिः**
**कालात्मना भावितपाशदण्डः ।**
**यदा तदा देवगणेन मेने**
**शान्तं बलं शान्तनवप्रधानम् ॥ २४ ॥**

**प्रभुरिति**—यदा । प्रभुः कृष्णः । प्रग्रहो रथाश्वानां संयमनरज्जुः, तोत्रं तेषां क्षेपणदण्डः, तदुभयं पाणौ यस्य तथाभूतस्सन् । कालात्मना कृतान्तरूपेण, भावितपाशदण्डः, कृतान्त इव रराजेत्यर्थः । तदा । देवगणेन सुरसङ्घेन । शान्तनवः प्रधानो मुख्यो यस्मिन् तत् । बलं । शान्तं समाप्तं । मेने । [2]परनिपातः ॥ २४ ॥

---

[1] 'वाच्यवाचकयोरभेदोपचारात्' इति पाठः स्यादिति भाति. [2] 'धातोर्वकारस्य' इति पाठः स्यात्. [2] मूलश्लोकान्तस्थप्रधानशब्दस्य समासे परनिपात इत्यभिप्रायकोऽयं ग्रन्थः स्यात्.

धुरन्धरस्स्वर्गनिकेतनानां
धुर्योत्थितैर्धूसरितो रजोभिः ।
रराज मध्ये रथयूथपानां
गोष्ठे पशूनामिव गोपवेषः ॥ २५ ॥

धुरन्धर इति—स्वर्गनिकेतनानां देवानां । धुरन्धरः धूर्वहः, योगक्षेमनिर्वाहकृत् । कृष्णः । धुर्योत्थितैः धुरं यानमुखं वहन्तीति धुर्या रथाश्वाः "धुर्यं यानमुखे भारे" इति यादवः, [3]धुरो यन्मन्ताविति विभक्त्यर्थे यत्प्रत्ययः, तत्खुरोत्थितैः । रजोभिः । धूसरितस्सन् । रथानां यूथपाः महारथाः धर्मपुत्त्रादयस्तेषां । मध्ये । गोष्ठे नन्दव्रजे । पशूनां मध्ये । गोपवेष इव । रराज । पशुसादृश्येन पाण्डवानां सर्वात्मना कृष्णानियमितत्वं दर्शितम् । यद्वा रथयूथपा इत्यविशेषेण भीष्मद्रोणादयस्सर्वेऽपि महारथा विवक्षिताः । ततश्च पशुसादृश्येन तेषां कृष्णसमक्षमतिफल्गुत्वं दर्शितम् ॥ २५ ॥

समुद्रसङ्घातनिभे नृपाणां
सैन्यद्वये संयति संप्रवृत्ते ।
अस्थानकारुण्यवशान्निवृत्तं
धनञ्जयं वीतशुचं वितेने ॥ २६ ॥

समुद्रेति—समुद्रसङ्घातनिभे समुद्रद्वयमेलनतुल्ये । नृपाणां । सैन्यद्वये । संयति युद्धे । सम्प्रवृत्ते सति । अस्थानकारुण्यवशात् अनुचितकालोदितकृपापारतन्त्र्यात् । निवृत्तं युद्धपराङ्मुखं । धनञ्जयं । वीतशुचं वितेने, ज्ञातिबन्धुगुरुसुहृदां योद्धुं प्रत्यागतानां निपातो

3 'धुरो यड्ढकौ' (पा. सू. ४-४-१७) इति वहत्यर्थे' इति पाठेनात्र भाव्यमिति भाति.

भविष्यतीति तस्य शोकं देहानित्यत्वक्षात्रधर्माद्युपदेशेन अपनीतवानित्यर्थः । कारुण्येति करुणाशब्दात् स्वार्थे ष्यञ् प्रत्ययः ॥ २६ ॥

फलादपि स्वादुतमप्ररोहं
प्रोत्साहने सख्युरिवोद्यतस्सः ।
जगद्धितार्थाय जगौ दयावान्
अन्यैरविज्ञेयमनन्यधर्मम् ॥ २७ ॥

**फलादपीति**—दयावान् । सः कृष्णः । सख्युः प्रोत्साहने युद्धाय प्रेरणे, उद्यत इव, अर्जुनप्रोत्साहनं व्याजीकृत्येत्यर्थः । जगद्धितार्थाय जगतां हितमेवार्थः प्रयोजनं तस्मै, तं सम्पादयितुमित्यर्थः । 'क्रियार्थोपपदस्य' (पा. सू. २–३–१४) इत्यादिना चतुर्थी । अन्यैराविज्ञेयं उपदेशं विना स्वव्यतिरिक्तैर्ज्ञातुमशक्यं । अनन्यानामेकान्तिनां धर्मं कर्मज्ञानभक्तिप्रपत्तिरूपं । जगौ गायति स्म, उपदिष्टवानित्यर्थः । अनन्यधर्मस्य विशेषणं फलादपि स्वादुतमप्ररोहं, तस्य फलं मोक्षः, तस्मादपि अतिशयेन मधुरः अङ्कुरो यस्य तमित्यर्थः, साधनानुष्ठानकालेऽपि भगवद्भक्तेः निरतिशयप्रीतिरूपत्वात् मुक्ताविव [1] परमा तद्भाक्त्वमस्तीति तत्स्थापनार्थमेवमुक्तिः ॥ २७ ॥

चिरन्तनस्नेहदयादिमूलं
चिन्तार्णवं निस्तरतो दुरन्तम् ।
किरीटिनः केशवसूक्तिरासीत्
कालोचिता काचन पोतपात्री ॥ २८ ॥

**चिरन्तनेति**—चिरन्तनस्नेहो जन्मप्रभृतिसिद्धत्वात् स्वजन इति प्रीतिः, दया तेषु कृपा, आदिशब्देन कुलघ्नानां नरकः स्यादिति

[1] 'परमात्मभाक्त्वं' इति पाठेनात्र भाव्यमिति भाति.

शङ्का समुच्चीयते, [1] मूलकं । दुष्प्रापावधिकं, 'प्रादिभ्यो धातुजस्य' (वा. १४६०) इति बहुव्रीहिः । चिन्तार्णवं स्वजनान् कथं हन्यामिति [2] चिन्तैव समुद्रं । निस्तरत । किरीटिनः अर्जुनस्य । केशवसूक्तिः भगवद्गीता । कालोचिता अर्णवमज्जनावसरस्योचिता । काचन । पोतपात्री यानपात्रं । अभवत्, तया चिन्तार्णवतरणात् ॥ २८ ॥

अभङ्गुरैर्धौतफलानुषङ्गात्
विद्याशरैर्विश्वगुरोरुपात्तैः ।
विवेकधन्वा विषमानजैषीत्
अन्तस्स्थितान् जिष्णुररातिसङ्घान् ॥ २९ ॥

अभङ्गुरैरिति—जिष्णुः अर्जुनः । [3] विवेक एव धन्व धनुर्यस्य तथाभूतस्सन् । धौतं क्षालितं क्षालितवत् पङ्कादभिन्नं यत्फलं मुक्तिस्त-दनुषङ्गात् । अभङ्गुरैः, अविनश्वरैः, फलाविनाशात् साधनानामप्यविन-श्वरत्वोपचारः । शरपक्षे—उत्तेजिताग्रस्य योगात् दृढैः । " [3] धौते निशातं निशितं क्षुतं तेजितमर्थवत् " इति " फलं हेतुसमर्थे स्यात्सस्य-बाणाग्रयोरपि " इति च प्रकाशः । विश्वस्य गुरोः कृष्णात् । अवाप्तैः । विद्याः गीतासु तत्तदध्यायोपदिष्टा ब्रह्मविद्या एव शराः, तैः । विषमान् अवशंवदान् । अन्तःस्थितान् अरातिसङ्घान् कामक्रोधादिसङ्घान् । अजैषीत् जयति स्म ॥ २९ ॥

1 'तन्मूलकं दुरन्तं दुष्प्रापावधिकं' इति पाठेनात्र भाव्यमिति भाति. 2 'चिन्ता-मेव' इति सुस्पष्टः पाठः स्यात्. 3 यद्यपि विवेक एव धनुर्यस्येति विग्रहेऽपि 'धनुषश्च' (पा. सू. ५ ४-१३२) इति सूत्रेण अनङि रूपसिद्धिर्भवति, तथाऽपि प्रक्रियालाघवेनैव युक्तमिति भाति. 3 'धौतं निशातं' इति पाठेनात्र भाव्यमिति भाति.

उपघ्नभूता श्रुतवल्लरीणां
उपास्त तुष्यन्नुपदेशमुद्राम् ।
नखांशुभिः क्षिप्ततमःकलङ्कां
नाथस्य पार्थो नतपूर्वभागः ॥३०॥

उपघ्नेति—तुष्यन् उपदेशेन हृष्यन् । पार्थः । श्रुतयो वल्लर्य इव तासां । उपघ्नभूतां आश्रयवृक्षतुल्यां । नखांशुभिः अङ्गुलिनखकिरणैः । क्षिप्ततमःकलङ्कां निरस्ताज्ञानमालिन्यां । नाथस्य । उपदेशमुद्रां ब्रह्मविद्योपदेशार्थं तर्जन्यङ्गुष्ठसंयोजनरूपां ज्ञानमुद्रां । नतपूर्वभागः प्रश्रयावनतशरीरपूर्वभागस्सन् । उपास्त उपासितवात् । तदैकाग्र्येण स्थित इत्यर्थः ॥ ३० ॥

विभक्तसामान्यविशेषधर्मा
प्रादुर्बभूवोपनिषत्प्रभोर्या ।
स एव तां व्यासमुनिस्समीचीं
पर्यग्रहीद्भारतवेदवक्ता ॥ ३१ ॥

विभक्तेति—प्रभोः कृष्णात् । विभक्तसामान्यविशेषधर्मा विविच्य प्रतिपादितास्सामान्यधर्मा विशेषधर्माश्च यस्यां सा तथोक्ता । या उपनिषत्, गीतोपनिषत् । प्रादुर्बभूव । समीचीं समीचीनां । तां । सः कृष्ण एव । भारतवेदस्य वक्ता व्यासमुनिस्सन् । पर्यग्रहीत् परिगृह्णाति स्म । कृष्णमुखोद्गतश्लोका एव भारते गीतासु पठिता इत्यर्थः ॥

'कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् ॥'

(महाभारते शान्तिपर्वणि ३५६–११)

इति व्यासस्य भगवदवतारत्वम्,

'वेदानध्यापयामास महाभारतपञ्चमान् ।'

(महाभारते शान्तिपर्वणि ३४९–२०)

इति भारतस्य वेदत्वं च पुराणप्रसिद्धम् ॥ ३१ ॥

**अभञ्जनीयां परधर्मसत्तां**
**अनश्वरीं भारतसूर्यदीप्तिम् ।**
**विदुः श्रुतीनामनघां वयस्यां**
**गीतामसम्मूढजनाविगीताम् ॥ ३२ ॥**

**अभञ्जनीयामिति**—असम्मूढजनाविगीतां प्रसिद्धजनसम्मतां । गीतां । अभञ्जनीयां दुस्तर्कैर्भङ्क्तुमशक्यां । परधर्मस्य मुक्त्युपायतयोत्कृष्टस्य धर्मस्य सत्तां । अनश्वरीं । भारतसूर्यस्य दीप्तिं । श्रुतीनां । अनघां रम्यां । वयस्यां सखीं च । विदुः जानन्ति । सन्त इति शेषः । अत्र गीतायाः परधर्मसत्ताव्यवस्थापकत्वात्, सूर्यस्य दीप्तिवत् भारतस्य सारभूतत्वात् श्रुतीनां वयस्यावदुपबृंहणतया सहायत्वाच्चैवमारोपः ॥ ३२ ॥

**कपिध्वजस्तस्य विभोरपश्यत्**
**तदर्पितं चक्षुरवाप्य दिव्यम् ।**
**[1] विरिञ्चिपूर्वैरपि दुर्निरीक्षं**
**विश्वाश्रयं रूपमशेषमूर्तेः ॥ ३३ ॥**

**कपिध्वज इति**—कपिध्वजः हनुमद्ध्वजोऽर्जुनः । अशेषः प्रपञ्चो मूर्तिर्यस्य तस्य विभोः कृष्णस्य । विरिञ्चिपूर्वैः ब्रह्मादिभिरपि दुर्निरीक्षं । विश्वस्याश्रयं रूपं । तदर्पितं कृष्णेन दत्तं । दिव्यं अप्राकृतं । चक्षुः विश्वरूपदर्शनक्षमं । अवाप्य । अपश्यत् ॥ ३३ ॥

---

[1] विरिञ्च—छ-ग्र दे मु.

[1]तस्मिन्नभिव्याप्तसमस्तलोके
[2]स तत्स्वरूपेण विकल्प्यमाने ।
विडाम्बितान् गोपुरधारिबिम्बैः
देवान्विभोरैक्षत दिव्यदेहे ॥ ३४ ॥

तस्मिन्निति––सः अर्जुनः । आभिव्याप्तसमस्तलोके । अत एव तस्य कृष्णस्य स्वरूपेण सर्वगतेनात्मना । विकल्प्यमाने तुल्ये । विभोः । तस्मिन् । दिव्यदेहे अप्राकृतशरीरे । गोपुरधारिबिम्बैः प्रतिमाभिः । विडम्बितान् अनुकृतान् । देवान् ब्रह्मादीन् । ऐक्षत ॥ ३४ ॥

प्रख्यातदीक्षं प्रणतार्तिभङ्गे
पार्थस्तदा दैत्यरिपुं प्रपन्नः ।
विनाशयामास बलं रिपूणां
विपत्प्रतीकारपरेण सख्या ॥ ३५ ॥

प्रख्यातेति–प्रणातानामार्तिभङ्गे । प्रख्यातदीक्षं प्रसिद्धनियमं । दैत्यरिपुं कृष्णं । तदा विश्वरूपप्रदर्शनसमये । प्रपन्नः शरणतया प्राप्तः । पार्थः । विपत्प्रतीकारः स्वविपदां प्रतीकारः परं प्रधानमुद्देश्यं येन तेन । सख्या कृष्णेन प्रयोज्यकर्त्रा । रिपूणां अरीणां । बलं । विनाशयामास । भक्तसौकर्याय भगवत्सङ्कल्पेन प्रथमं विनाशितानामेव हननमर्जुनः [3]कृतवानित्येवायमुक्तिश्श्रूयते भगवद्वाक्यम्––

'मया हतांस्त्वं जहि मा व्यथिष्ठाः
युध्यस्व जेतासि रणे सपत्नान् ॥'

इति ॥ ३५ ॥ (भगवद्गीता ११–४५)

---

1 अयं श्लोकः झ–कोशे 'यथा नियच्छति' इति ३८ तमश्लोकानन्तरं दृश्यते. 2 'सर्वस्वरूपेण' इति घ–कोशे पाठः. 3 'कृतवानितीत्थमुक्तिः । श्रूयते हि भगवद्वाक्यम्' इत्यत्र पाठश्चेत्सुस्पष्टः.

**स्वहस्तपद्माञ्चिततोत्रपाशः**
**स्वच्छन्दलीलासहधर्मचारी ।**
**गतागतैरप्रातिमैस्स चक्रे**
**जयश्रियो जैत्ररथेन डोलाम् ॥ ३६ ॥**

**स्वहस्तेति**—स्वहस्तौ पद्मे इव ताभ्यामञ्चितौ धारणेन सम्भावितौ तोत्रपाशौ येन स तथोक्तः । स्वच्छन्दलीलायाः सहधर्मं चरितुं शीलमस्येति सहधर्मचारी पाणिग्रहे यथेष्टलीलारसिकः कृष्णः । जैत्ररथेन जयशीलेनार्जुनरथेन । अप्रतिमैः वेगतुल्यरहितैः । गतागतैः गमनागमनैः । जयश्रियः । [2] डोलां प्रेङ्खोत्सवां । चक्र इत्युत्प्रेक्षा च वाचकाप्रयोगाद्गम्या ॥ ३६ ॥

**सविस्मयस्संयति सव्यसाची**
**तत्तादृशा सारथिना समेतः ।**
**मनोजवानां निजसायकानां**
**अग्रेसरं स्यन्दनमन्वपश्यत् ॥ ३७ ॥**

**सविस्मय इति**—संयति युद्धे । तत्तादृशा तेनैवानन्योपमेयेन । सारथिना । समेतः । सव्यसाची पार्थः । मनोजवानां मनोवेगेन सदृशवेगानां । निजसायकानां । अग्रेसरं पुरस्सरं । स्यन्दनं । सविस्मयः मया क्षिप्तान् बाणानपि पश्चात्कुरुतेऽयमिति विस्मयसहितस्सन् । अन्वपश्यत् । तादृक्छब्दसमानार्थस्तत्तादृक्छब्दोऽखण्ड इत्याहुः ॥ ३७ ॥

---

2 'डोलां प्रेङ्खोत्सवं चक्र इवेत्युत्प्रेक्षा वाचका' इति पाठः स्यात्.

**यथा नियच्छत्ययमिन्द्रियाश्वान्**
**जीवाश्रये देहरथे निबद्धान् ।**
**तथाऽर्जुनस्यन्दनधुर्यनेता**
**बभूव नान्येन निदर्शनीयः ॥ ३८ ॥**

**यथेति**—अयं कृष्णः । यथा । जीवस्य रथिन आश्रये । देहरथे देह एव रथे । निबद्धान् । इन्द्रियाण्येवाश्वान् । नियच्छति । तथा। अर्जुनस्यन्दनधुर्याणां रथाश्वानां नेता सन् । अन्येन । निदर्शनीयः उपमेयः । नाभूत् । इन्द्रियाश्वा [1] रथान्तर्यामिणो यस्य सर्वात्मना वशवर्तिनः, तथा अर्जुनरथाश्वा अप्यासन्निति [2] तन्नियच्छन्निन्द्रियाश्वान्नियच्छता स्वेनैवोपमेय आसीदित्यर्थः ।

" आत्मानं रथिनं विद्धि शरीरं रथमेव तु " (कठोपनिषत् ३-३) इत्यादिवल्लीमन्त्रेषु जीवदेहेन्द्रियाणां रथरथिहयभावकल्पना श्रूयते । तदनुसारेण देहरथ इत्यादिरूपकम् ॥ ३८ ॥

**यदेकदेशे निखिलं तदन्यत्**
**तद्देहभागेषु च संविभक्तम् ।**
**रथैकदेशे तमवेक्ष्य पार्थः**
**प्राबुद्ध तं सारथिमप्रतर्क्यम् ॥ ३९ ॥**

**यदेकेति**—यस्य देवस्यैकदेशे । तदन्यन्निखिलं स्थावरजङ्गमात्मकं जगत्, ' पादोऽस्य विश्वा भूतानि ' (पुरुषसूक्त)इत्यादिश्रुतेः । किञ्च तद्देहस्य तदानीं प्रदर्शितस्य तदीयदिव्यशरीरस्य भागेषु एकदेशेषु । संविभक्तं पृथक् पृथक् विश्रान्तं । [3] तदेव । रथैकदेशे । पार्थः । अवेक्ष्य ।

---

1 ' यथाऽन्तर्यामिणोऽस्य ' इति पाठः स्यात्. 2 ' तान्नियच्छन् ' इति पाठेनात्र भाव्यमिति भाति. 3 ' तदवेक्ष्य ' इति मूलोत्तरार्धे पाठाभिप्रायेणेदं स्यादिति भाति.

तं तथाभूतं सारथिं। अप्रतर्क्यं अचिन्तनीयमहिमानं। प्राबुद्ध अवगत-
वान् ॥ ३९ ॥

निवर्तितं वैरिजनोपमर्दात्
न्यस्तं रथे चक्रमुपाददानः।
नतप्रतिज्ञानुपरोधहेतोः
आत्मप्रतिज्ञामजहात्स्वतन्त्रः ॥ ४० ॥

निवर्तितमिति—वैरिजनस्योपमर्दात् अरिहननात्। निवर्तितं। अत एव रथे। न्यस्तं। चक्रं। उपाददानः गृह्णानः। स्वतन्त्रः स्वाधीनः कृष्णः। नतस्य प्रपन्नस्य भीष्मस्य प्रतिज्ञाया अनुपरोधस्य अनुपघातस्य हेतोः। आत्मप्रतिज्ञां। अजहात् जहाति स्म। भगवानायुधमगृहीत्वैव भारतयुद्धं निर्वर्तयिष्यामि इति प्रतिज्ञाय आयुधं भगवता ग्राहयिष्यामीति प्रतिज्ञातवति भीष्मे युद्धेन कदाचित् पार्थसैन्यमत्यन्तं कर्शयति तद्वधाय चक्रमुपात्तवानिति(श्रीमहाभारते भीष्मपर्व ५९ अध्या ९१ श्लो)भीष्मपर्वणि कथा। बलमावेश्य तत्रार्जुने तन्मुखेन भीष्मस्य पराजये कर्तुं शक्येऽपि [1] स्वप्रतिज्ञापरिपालनायैव, भक्तवश्यताया एव परमस्वातन्त्र्यलक्षणत्वात्।

[2] "स्वनियमपहाय मत्प्रतिज्ञामृतमधिकर्तुमवप्लुतो रथस्थः।
धृतरथचरणोऽभ्ययाच्चलद्गुर्हरिरिव हन्तुमिभं गतोत्तरीयः ॥"
(श्रीभागवते १-९-३७)

इति भागवते भीष्मवचनाच्चेति भावः ॥ ४० ॥

[1] 'स्वभक्तप्रतिज्ञापरिपालनायैवैषा' इत्यत्र पाठः स्यात्. [2] 'स्वनिगम' इत्र. भागवतेऽपि.

द्विषत्प्रयुक्तं दुरपोहमस्त्रं
भुजान्तरालेन विभुः प्रतीच्छन् ।
विधाय वैकल्पिकवैजयन्तीं
प्रच्छादितं प्राणयति स्म पार्थम् ॥ ४१ ॥

द्विशदिति—द्विषता भगदत्तेन प्रयुक्तं, अर्जुनमुद्दिश्य विसृष्टं । दुरपोहं अर्जुनेनापोहितुमशक्यं । अस्त्रं वैष्णवास्त्रं । भुजान्तरालेन वक्षसा । प्रतीच्छन् प्रतिगृह्णन् । विभुः कृष्णः । वैकल्पिकवैजयन्तीं विधाय मालामिव वक्षस्यमार्दवेन निपतनात्तदस्त्रं प्रसिद्धवैजयन्त्या विकल्पसिद्धां वैजयन्तीं कृत्वा । प्रच्छादितं स्वयं वक्षःप्रदानेन अस्त्रपातात्तिरोहितं । पार्थं । प्राणयति स्म ॥ ४१ ॥

[1]निवेशितां तस्य पदे च पूजां
निशाम्य गङ्गामिव चन्द्रमौलौ ।
अनन्यसामान्यममस्त सख्युः
सङ्कोचवैदेशिकमीश्वरत्वम् ॥ ४२ ॥

निवेशितामिति—किञ्चेत्यर्थः । तस्य कृष्णस्य । पदे । निवेशितां । पूजां । गङ्गामिव । चन्द्रमौलौ शिवे । निशाम्य दृष्ट्वा । सख्युः कृष्णस्य अनन्यसामान्यं अनितरसाधारणं । सङ्कोचस्य वैदेशिकं विदेशभवं, असङ्कुचितं । ईश्वरत्वं । अमंस्त मन्यते स्म । अर्जुनः कदाचित् भारतयुद्धमध्ये शिवस्य रात्रिपूजार्थमाहृतमुपहारं कृष्णे अर्पयित्वा पाशुपतमुष्टिग्रहणाय कैलासं गतस्तमुपहारं शिवसमीपे निरीक्षमाणः . . . . . मपरिच्छिन्नमिति निश्चितवानिति (भारते द्रोणपर्वणि ८१-२) द्रोणपर्वणि कथा ॥ ४२ ॥

[1] अयमुत्तरश्च श्लोकः 'यदेकदेशे' इति 39 तमश्लोकानन्तरं सरस्वती भाण्डागारीयकोशे दृश्यते.

दिवाकरेऽनस्तमितेऽतिगाढं
तमस्सृजंस्तामसमोहनार्थम् ।
प्रपन्नरक्षाप्रतिपन्नदीक्षः
सत्याभिसन्धं विदधे सखायम् ॥ ४३ ॥

**दिवाकर इति**—दिवाकरे। अनस्तमित एव। तामसानां तमोगुणाविष्टानां परेषां मोहनमर्थः प्रयोजनं यस्य तथाभूतं। अतिगाढं। तमः। सृजन्। प्रपन्नरक्षाप्रतिपन्नदीक्षः शरणागतरक्षणे गृहीतव्रतः कृष्णः। सखायं सुहृदमर्जुनं। सत्याभिसन्धं सत्यप्रतिज्ञं। विदधे। अभिमन्योर्वधकोपेन अस्तमयात्प्रागेव जयद्रथं हन्यामिति प्रतिज्ञातवतोऽर्जुनस्य दृष्टयगोचरतया अनेकरथिव्यवहिते जयद्रथे परैर्निवेशिते सूर्ये चासन्नास्तमये भगवानन्धतमसं सृष्ट्वा सूर्योऽस्तमित इति परेषां भ्रान्तिमुत्पाद्य ततश्शिथिलीभूतेषु परेषु अर्जुनोपहासपरेषु जयद्रथं प्रदर्श्य अर्जुनेन तस्य शिरश्छेदितवान् इति द्रोणपर्वणि (म. भा. द्रो. १८७ अध्या.) कथा ॥ ४३ ॥

सुरैरशेषैरपि जातरोषैः
स दुर्जयान् भीष्ममुखान् जिगाय।
सहायशक्त्या युधि सव्यसाची
किं दुष्करं केशवमाश्रितानाम् ॥ ४४ ॥

**सुरैरिति**—युधि युद्धे। सव्यसाची सः अर्जुनः। जातरोषैः। अशेषैः। सुरैरपि। दुर्जयान्। भीष्ममुखान् भीष्मद्रोणप्रभृतीन्। सहायस्य कृष्णस्य शक्त्या। जिगाय जयति स्म। अर्थान्तरं न्यस्यति— केशवमाश्रितानां किं दुष्करं, सर्वमपि सुकरमेवेत्यर्थः ॥ ४४ ॥

[1]स्वप्नः किमासीदथवेन्द्रजालं
बभूव गन्धर्वपुरी किमेषा ।
इतीव शङ्कां विदधे प्रलीना
पताकिनी कौरवपाण्डवानाम् ॥ ४५ ॥

**स्वप्न इति**—कौरवपाण्डवानां । पताकिनी सेना । प्रलीना नष्टा सती । किं स्वप्न आसीत्, अथवेन्द्रजालं, एषा गन्धर्वपुरी औत्पातिकं भ्रान्त्या गगने दृश्यमानं गन्धर्वनगरं किं बभूव, इति शङ्कां विदधे । इवशब्दो वाक्यालङ्कारे । अतिमहत्यास्सेनायाः सद्य एव विनाशात् जनानामित्थं शङ्का जातेत्यर्थः ॥ ४५ ॥

आकृष्टदेवासुरसाम्परायैः
ओजस्विनां शस्त्रभृतामुदन्तैः ।
प्रायस्तदा [2] प्रत्यवहारलीलां
आकालिकीं विश्वभुगन्वभुङ्क्त ॥ ४६ ॥

**आकृष्टेति**—तदा भारतयुद्धे । विश्वभुक् विश्वस्य भोक्ता कृष्णः । आकृष्ट उपलब्धो देवासुराणां साम्परायस्सङ्ग्रामो यैस्तैः, देवासुरयुद्धातिशायिभिः । ओजस्विनां बलवतां । शस्त्रभृतां वीराणां । उदन्तैः वृत्तान्तैर्वीरहननरूपैः । प्रायः नूनं । आकालिकीं अकालभवां । प्रत्यवहारलीलां जगदुपसंहारलीलां । अन्वभुङ्क्त ॥ ४६ ॥

---

1 स्वापः—ग्र. दे. मु.
एतच्छ्लोकात्पूर्वं—
'पितामहे संश्रितबाणतल्पे द्रोणे च योगेन दिवं प्रयाते ।
कर्णस्तदा मध्यमपार्थरोषात् . . . . . ।'
इत्ययं श्लोकः झ-कोशेऽधिको दृश्यते.

2 प्रत्यपहार—छ.

**जिघांसुरष्टादश सम्पतन्तीः**
**अक्षौहिणीरद्भुतभीमरूपाः ।**
**स्वतन्त्रयामास मिथःप्रतीपान्**
**सूत्रावसक्तानिव दारुमर्त्यान् ॥ ४७ ॥**

**जिघांसुरिति**—सम्पतन्तीः अन्योन्यं युद्धाय मिलन्तीः । अद्भुतमाश्चर्यं भीमं भयानकं रूपं यासां ताः । अष्टादश कौरवाणामेकादश पाण्डवानां सप्त इत्येवमष्टादशसङ्ख्याताः । अक्षौहिणीः रथगजादिसङ्ख्याविशेषयुक्तास्सेनाः । जिघांसुः हन्तुमिच्छुः कृष्णः । मिथःप्रतीपान् परस्परं परिपन्थिनः कौरवपाण्डवान् । सूत्रावसक्तान् नायकहस्तगृहीतेषु सूत्रेषु लग्नान् । दारुमर्त्यान् दारुविकारान् [1]मनुष्यबिम्बानिव । स्वतन्त्रयामास स्वतन्त्रीकृतवान् । तेभ्यः तादृशस्वातन्त्र्यं प्रदाय परस्परं योधयामासेत्यर्थः । अक्षौहिणीप्रमाणमुक्तं वैजयन्त्याम्—

त्रिहयं पञ्चपादातं [2]यथैकरथकुञ्जरम् ।
सैन्यं सा पत्तिरेतस्यास्त्रैगुण्यात्स्युर्यथाक्रमम् ॥
सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ।
अनीकिनीत्यनीकिन्यः पुनरक्षौहिणी दश ॥

इति ॥ ४७ ॥

**कृषीवलः स्थावरजङ्गमानां**
**क्षेत्रे कुरूणां समकालपाकान् ।**
**अनीकशालीन् भुजशालिवर्गैः**
**फलोपपन्नान् प्रभुरित्यलावीत् ॥ ४८ ॥**

**कृषीवलेति**—स्थावरजङ्गमानां स्थिरचररूपाणां जगतां सस्यस्थानीयानां । कृषीवलः कर्षकः, स्वेच्छया तत्सृष्टिसंहारित्वात् । प्रभुः कृष्णः ।

---

[1] मनुष्यपिण्डानिव—घ. [2] 'यदेकरथ' इति मुद्रितकोशे.

कुरूणां नृपाणां क्षेत्रे कुरुक्षेत्राख्ये तेषां युद्धस्थले, क्षेत्रे केदार इत्यपि गम्यते। समकालः पाकः कर्मविपाको येषां तान्। शालिपक्षे—पाको लवनयोग्यपरिणामः। फलैः चर्मभिरुपपन्नान् युक्तान्। "फलं चर्ममयं चर्म" इति यादवः। आयुधसामान्योपलक्षणमेतत्। पक्षे—फलानि सस्यफलानि व्रीह्यादिफलानि। अनीकानि सैन्यान्येव शालीन्। भुजैश्शालन्ते श्लाघन्त इति भुजशालिनश्शूराः, तेषां वर्गैः भृतकवर्गस्थानीयैः। इति उक्तप्रकारेण। अलावीत् लावितवानिति यावत्। कृष्णपक्षे तु—यथाश्रुतमपि युज्यते, तच्छरीरकस्य तस्यैव लवितृत्वोपपत्तेः॥ ४८॥

निस्तीर्य सङ्ग्राममहासमुद्रं
संसारपोतेन परेण सख्या।
धनञ्जयस्तत्पदमेव भेजे
निर्धूतनीहारदिवाकराभः॥ ४९॥

निस्तीर्येति—धनञ्जयः। संसारस्य पोतेन यानपात्रेण, तद्वत् तारकेण। सख्या सुहृदा। परेण परमपुरुषेण। सङ्ग्राममेव महासमुद्रं। निस्तीर्य तीर्त्वा। निर्धूतनीहारदिवाकराभः अपास्ततुहिन[1]सूर्यनिभस्सन्। तत्पदं कृष्णचरणमेव भेजे तच्चरणसेवापर एव स्थित इत्यर्थः॥ ४९॥

द्रौणिस्तदा सौप्तिकमादधानः
कृपेण सार्धं कृतवर्मणा च।
हताहितैः पाण्डुसुतैरवाप्तं
सैन्यावशेषं शमयांबभूव॥ ५०॥

द्रौणिरिति—तदा भारतयुद्धनिवृत्तिदिनरात्रौ। कृपेण कृपाचार्येण। कृतवर्मणा च राज्ञा। सार्धं। सौप्तिकमादधानः सुप्तेषु पाण्डवसै-

---

1 सूर्यप्रभ—छ.

न्येषु बलादाक्रमणं कुर्वाणः। द्रौणिः द्रोणस्यापत्यमश्वत्थामा। हताहितैः हतशत्रुभिः। पाण्डुसुतैः। अवाप्तं। सैन्यावशेषं हतसैन्यस्यावशिष्टं सैन्यं। शमयांबभूव शमयति स्म ॥ ५० ॥

[1]इत्थं दशाष्टौ च निपात्य भूमौ
अक्षौहिणीरद्भुतभीमरूपाः।
सतां पतिस्सत्त्व[2]समृद्धिरोगात्
उल्लाघितामातनुतेव पृथ्वीम् ॥ ५१ ॥

इत्थमिति—सतां पतिः स कृष्णः। इत्थं। भूमौ। अद्भुतभीमरूपाः। दशाष्टौ च। अक्षौहिणीः। निपात्य। पृथ्वीं भूमिं। सत्वानां प्राणिनां समृद्धेरेव रोगात् उल्लाघितां व्याधेर्गमितां। अकार्षीत्। 'उल्लाघो निर्गतो गदात्' इत्यमरः ॥ ५१ ॥

[3]विभुः स्वसङ्कल्पहतान् विनिघ्नन्
धर्मैकतानेन धनञ्जयेन।
प्रतोदसन्दंशिकयोदहार्षीत्
पाञ्चालकन्यापरिभूतिशल्यम् ॥ ५२ ॥

विभुरिति—स्वसङ्कल्पेन हतान् परान्। धर्मे एकतानेन एकाग्रेण। धनञ्जयेन अर्जुनरूपेण शरीरेण। विनिघ्नन्। विभुः कृष्णः। प्रतोदो

1 एतच्छ्लोकात्पूर्वं—

'शरण्यभूतश्शरणागतानां प्रख्यापयामास पृथासुतानाम्।
स्वदत्तविज्ञानगुणप्रथिम्ना शान्तोचितं शान्तनवेन धर्मम्॥'

इतीदं पद्यं सरस्वतीभाण्डागारीयकोशेऽधिकं दृश्यते। तदिदं 'रणभुवि' इति ६१ तमपद्येनानतिरिक्तार्थकमित्यन्यतरत्प्रक्षिप्तमिति तत्र व्याख्यात्रा वक्ष्यते। 2 समृद्धियोगा—ग्र. दे. मु. 3 अयं श्लोकः 'तस्य श्रुतिश्रेणि' इति ५६ तमश्लोकानन्तरं—मुद्रितमूलकोशयोः—च—छ—कोशयोश्च दृश्यते.

रथाश्वानां क्षेपणदण्ड एव सन्दंशिका तया कण्टकोद्धरणशास्त्रिकया। पाञ्चालकन्यायाः परिभूतिं प्राक् सदसि कृतं परिभवमव शल्यं अन्तः प्रविष्टशरशलाकां। उदहार्षीत् उद्धरति स्म ॥ ५२ ॥

[1]परास्त्रविस्रंसितमुत्तरायाः
पद्मासनाद्यैरपि पूजितेन।
गङ्गाधरण्योः प्रभवेन गर्भं
पस्पर्श पादेन परावरेशः ॥ ५३ ॥

परास्त्रेति—परावरेशः उत्कृष्टापकृष्टचेतनेश्वरः कृष्णः। परास्त्रविस्रंसितं अश्वत्थामास्त्रच्यावितं। उत्तरायाः। गर्भं गर्भभूतं, परीक्षितमिति यावत्। पद्मासनाद्यैः कमलासनरुद्रप्रभृतिभिः। कृतपूजनेन। गङ्गाधरण्योः। प्रभवेन। पादेन। पस्पर्श, सञ्जीवनार्थमिति भावः। "पद्भ्यां भूमिर्दिशश्श्रोत्रात्" (पुरुषसूक्तं) इति श्रुतेः भगवत्पादो धरण्याः प्रभवः ॥ ५३ ॥

विप्लोषितं द्रौणिशरेण बालं
सञ्जीवयन् पादरजःप्रभावात्।
वधूकृतक्षुद्रशिलाविशेषं
रामानुजो राममिवान्वकार्षीत् ॥ ५४ ॥

विप्लोषितमिति—द्रौणिशरेण अश्वत्थाम्नोऽस्त्रेण। विप्लोषितं सञ्जातविप्लोषं। बालं उत्तरागर्भं परीक्षितं। पादरजःप्रभावात्। सञ्जीवयन्। रामस्य बलदेवस्यानुजः कृष्णः। वधूकृतक्षुद्रशिलाविशेषं। रामं रघुवीरं। अन्वकार्षीदिव, पादरजसा बालसञ्जीवनं रघुवीरचरितस्य पादरजसा शिलावधूकरणस्य अनुकरणमासीदित्यर्थः ॥ ५४ ॥

---

1 एतच्छ्लोकप्रभृति श्लोकत्रितयं सरस्वतीभाण्डागारीयकोशे 'सुरैरशेषैः' इति ४५ तमश्लोकात्पूर्वं दृश्यते.

तस्य श्रुतिश्रेणिशिरोधृतानां
स्पर्शः प्रजेशादिभिरीप्सितोऽभूत् ।
परीक्षिदुत्थानपरीक्षितानां
अघच्छिदामङ्घ्रिरजःकणानाम् ॥ ५५ ॥

तस्येति—तस्य कृष्णस्य । श्रुतिश्रेणीनां वेदपङ्क्तीनां शिरोभिर्धृतानां, उपनिषत्प्रतिपाद्यमाहिम्नां । परीक्षिदुत्थानपरीक्षितानां द्रौण्यस्त्रविप्लुष्टस्य परीक्षित उत्थानेन प्रभावातिशयविषये परीक्षितानां । अघच्छिदां पापहराणां । आङ्घ्रिरजःकणानां । स्पर्शः । प्रजेशादिभिः ब्रह्मादिभिरपि । ईप्सितः आभिलषितः । अभूत् ॥ ५५ ॥

अजातदीना द्रुपदाङ्गजायाः
कालस्य दीप्तामिव खड्गरेखाम् ।
विपक्षसंहारमहाभुजङ्गीं
वेणीं प्रियैः [2]स्संशमयांबभूव ॥ ५६ ॥

अजातेति — अजातदीनां चिरसंस्कारविरहेऽप्यजातक्षयां । 'दीङ् क्षये' (दिवादि ११३४) इति धातोर्भावे निष्ठा । [3]स्वादित्वान्नत्वम् । कालस्य कृतान्तस्य । दीप्तां । खडगरेखामिव स्थितां । विपक्षसंहारे महाभुजङ्गीं । द्रुपदात्मजायाः । वेणीं सदसि दुश्शासनेन केशानाकृष्य परिभवे कृते तद्वधमधिकृत्य निबद्धां । प्रियैः तस्याः पतिभिः । संशमयांबभूव संहारयांबभूव ॥ ५६ ॥

---

[1] अजस्तदानी—ग्र. दे. मु. [2] संगमयाबभूव—घ. संयमयांबभूव—ग्र. दे. मु.
[3] स्वादित्वादिति ॥ 'स्वादय ओदितः' (ग. सू १९६) इति गणसूत्रे स्वादय इत्यत्रत्यसूपदेन 'धात्वादेष्षस्सः' (पा. सू. ६-१-६४) इत्यनेन कृतसत्वकः षूङ् धातुर्विवक्षित इति बोध्यम्. ततश्च षूङादिनवधातुघटितस्वादिगणघटितस्य दीङ्—धातोरप्योदित्वात् 'ओदितश्च' (पा. सू. ८-२-४५) इति सूत्रेण निष्ठाया नत्वमिति भावः.

[1]पितामहाय प्रततान पार्थः
शरप्रयुक्तं शयनं यदग्र्यम् ।
योगासनं योजितचित्तधैर्यं
तदेव पर्याप्तगुणं तदाऽऽसीत् ॥ ५७ ॥

पितामहायेति—पार्थः अर्जुनः। पितामहाय भीष्माय। शरप्रयुक्तं बाणरचितं। अग्र्यं। यच्छयनं। प्रततान विस्तारयामास। तदेव। तदा देहत्यागायोत्त[2]रायणं प्रतीक्षितस्य स्थितिसमये। पर्याप्तगुणं समग्रचित्तैकाग्र्यानुकूलसत्वादिगुणं। अत एव योजितचित्तधैर्यं। योगासनं। आसीत्। शरतल्प एव भीष्मः प्रणिधानपरः स्थित इत्यर्थः ॥ ५७ ॥

विन्यस्य धर्मतनये विजयाधिकारं
सख्याऽर्जुनेन यशसेव धनुर्धराणाम् ।
दध्मौ स दैत्यमथनो युधि पाञ्चजन्यं
वृष्ण्यन्धकादिपरिशेषितभूमिभारः ॥ ५८ ॥

विन्यस्येति—दैत्यानां मथनः। सः कृष्णः। धनुर्धराणां यशसेव सर्वधानुष्कयशस्समाहारेणेव स्थितेन, तावद्यशोभाजनात्तथोत्प्रेक्षा। सख्या। अर्जुनेन, धवलेनेत्यपि गम्यते, यशस्त्वेनोत्प्रेक्षापरिपोषकं तत्, तेन द्वारेण। धर्मतनये। विजयाधिकारं विजयस्वामित्वं। विन्यस्य वस्तुतः [3]स्वशक्तिकृतमेव विजयमर्जुनलब्धं प्रख्याप्य तदपि ज्येष्ठे धर्मपुत्रे विन्यस्येति यावत्। वृष्ण्यन्धकादिपरिशेषितभूमिभारः वृष्णिवंश्याः अन्धकवंश्याश्च यादवावान्तरविशेषाः, आदिशब्देन भोजादयोऽपि यादवाः परिगृह्यन्ते, त एव परिशेषीकृतो भूमेर्भारो येन तथाभूतस्सन्।

[1] अयं श्लोकः झ-कोशे 'निस्तीर्य' इति ४९ तमश्लोकानन्तरं दृश्यते.
[2] 'रायणप्रतीक्षकस्य' इत्यत्र पाठः स्यात्. [3] तस्य शक्ति—च. छ.

युधि, निर्वर्तितायामिति शेषः। पाञ्चजन्यं शङ्खं। दध्मौ। कृत्यशेषस्याल्पानुसन्धानेन हर्षादिति भावः ॥ ५८ ॥

प्रत्यानिनाय रथमात्तजयस्स जन्यात्
धन्यावलोकनधनञ्जय[1]दर्शनीयः।
सारथ्यसंविदवधीरितहेतिजुष्टः
सेनापरागपरिधूसरकुन्तलश्रीः ॥ ५९ ॥

प्रत्यानिनायेति—आत्तजयः लब्धविजयः। धन्यावलोकनेन धनञ्जयेन एकरथस्थितेन अर्जुनेन दर्शनीयः मनोहरः। सारथ्यस्य संविदा प्रतिज्ञया अवधीरिताभिः अगृहीताभिः हेतिभिः चक्रादिभिरायुधैः जुष्टः समीपे सेवितः। सेनापरागैः परिधूसरकुन्तलश्रीः परितोधूसरचिकुरकान्तिः। सः कृष्णः। जन्यात् युद्धात्। रथं। प्रत्यानिनाय ॥ ॥ ५९ ॥

आलिङ्ग्य गाढमवगाढरसं रणाब्धौ
वीरव्रणैः कृतविभूषणमिन्द्रसूनुम्।
अन्यावतारपरिकल्पनकेलिलोभात्
ऐक्यं निनाय निजमंशमिवान्यनिष्ठम् ॥ ६० ॥

आलिङ्ग्येति—रणाब्धौ अब्धिसदृशे रणे। अवगाढरसं प्रविष्टाभिलाषं। वीराणां व्रणाः शस्त्रव्रणाः तैः। कृतविभूषणं। इन्द्रसूनुं अर्जुनं। गाढं। आलिङ्ग्य[1] अन्यावतारपरिकल्पनकेलिलोभात् एतदवतारप्रयोजनं जातमित्यवतारान्तरपरिग्रह[2]क्रीडेच्छया। अन्यनिष्ठं अर्जुनस्थितं। निज-

---

[1] दर्शनीयं—घ. अत्र पाठे इदं रथविशेषणं प्रतीयते. [2] क्रीडेच्छायाः—च. छ.

मंश नरांशं। ऐक्यं। निनायेव। दृढालिङ्गनेनार्जुनस्थितो नरांशो गृह्णाति इवेत्युत्प्रेक्षा ॥ ६० ॥

रणभुवि शरतल्पे लीलया शायितेन
स्वपदसमुदितायास्सूनुना सिद्धसिन्धोः ।
अनतिचिरविलम्बादाप्तुकामं धरित्रीं
कलिमिव शमयिष्यन् ख्यापयामास धर्मान् ॥
॥ ६१ ॥

रणेति—रणभुवि। शरतल्पे। [1] लीलया देहत्यागायोत्तरायणं प्रतीक्षस्वेत्यशरीरवचनरूपया निजलीलया। शायितेन। स्वपदसमुदितायाः स्वचरणभवायाः। सिद्धसिन्धोः गङ्गायाः। सूनुना भीष्मेण, प्रयोज्यकर्त्रा। अनतिचिरविलम्बात् अतिचिरविलम्बं विना, अल्पकालेनैव। धरित्रीं। आप्तुकामं। कलिं कलियुगं। शमयिष्यन् प्रतिबद्धावतारं करिष्यन्निव। धर्मान् ख्यापयामास युधिष्ठिरं श्रोतारमपदिश्य लोकानां राजदानमोक्षादिधर्मान् प्रथयामास ॥

"पितामहाय प्रततान पार्थः" (५७श्लो) इति श्लोकानन्तरं केषुचित्कोशेषु—

"शरण्यभूतश्शरणागतानां प्रख्यापयामास पृथासुतानाम्।
स्वदत्तविज्ञानगुणप्रथिम्ना शान्तोचितं शान्तनवेन धर्मम्॥"

इत्यपि श्लोकः पठ्यते। सोऽप्यनेनोक्तार्थः। अनतिरिक्तार्थाभिप्रायोऽन्यतरः प्रक्षिप्तो भवति ॥ ६१ ॥

[1] भगवत्प्रपन्नानां निर्याणे कालविशेषादेरनपेक्षणात् लोकानां धर्मोपदेशायैव भीष्मस्योत्तरायणकालप्रतीक्षणं भगवता व्याजीकृतमिति लीलयेत्यनेन द्योत्यते.

अप्रत्यूहितसार्वभौमविभवैरभ्यर्चितः पाण्डवैः
[1]प्रत्यावृत्तमहोत्सवेन मुदितां प्राप्तः पुरीं द्वारकाम्।
प्रत्यक्षं प्रथयाम्भूव विहरन् प्रीतः प्रियाभिस्समं
शुद्धः सामपदागमैरधिगतां स्वाधीनतां श्रीपतिः॥
॥६२॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयनाम्नि महाकाव्ये त्रयोविंशस्सर्गः.

अप्रत्यूहितेति—अप्रत्यूहितः शत्रुजयेन निर्विघ्नीकृतः सार्वभौमस्य सर्वभूमीश्वरस्य विभवस्समृद्धिर्येषां तैः। पाण्डवैः। अभ्यार्चितः। [2]प्रत्यावृत्तिमहोत्सवः तेन। मुदितां सन्तुष्टपौरां। स्वां पुरीं द्वारकां। प्राप्तः। श्रीपतिः। शुद्धः रागादिदोषरहितोऽपि। प्रियाभिः समं। प्रीतः [3]संहृष्टः। विहरन्। शास्त्रैर्वेदैरधिगतां ज्ञातां। स्वाधीनतां स्वतन्त्रतां। प्रत्यक्षं। प्रथयाम्बभूव प्रकाशितवान्। रागादिप्रेरितो हि स्त्रीभिः क्रीडति, नीरागपारतन्त्र्यं ताभिः क्रीडितवानिति, ततोऽस्य श्रुतिभिः परोक्षतयाऽवगतं कृत्येष्वनन्याधीनत्वं प्रत्यक्षमिव स्फुटमासीदित्यर्थः। शार्दूलविक्रीडितमेतद्वृत्तम् ॥ ६२ ॥

इति श्रीमद्भरद्वाजकुलतिलकविश्वजियाजिश्रीरङ्गराजाध्वरि-
सूनुनाऽप्पय्यदीक्षितेन विरचिते यादवाभ्युदय-
व्याख्याने त्रयोविंशस्सर्गः.

1 प्रत्यावृत्ति—च. छ. 2 'प्रत्यावृत्तं प्रत्यावृत्तिरेव महोत्सवः' इति पाठस्स्यादिति भाति. 3 सन्तुष्टः—च.

# चतुर्विंशस्सर्गः

अथ हृत[1]सकलभूभारतया निश्चिन्तस्य भगवतः शृङ्गारसाम्राज्यं पूर्वसर्गान्ते निक्षिप्तं विस्तरेण [2]वर्णयितुं प्रारभते—

अथ निजविभवादजातशत्रौ
प्रशमितशत्रुबले निवेश्य भूमिम् ।
परिचरणफलं प्रभुः प्रयच्छन्
अमितगुणाभिररंस्त वल्लभाभिः ॥ १ ॥

अथेति—अथ भारतयुद्धनिर्वर्तनानन्तरं । प्रभुः स्वामी कृष्णः । निजविभवात् स्वमाहात्म्यात् । प्रशमितशत्रुबले । अजाताः शत्रवो यस्य तस्मिन्, स्वयं क्वापि दोषरहिते युधिष्ठिरे । भूमिं । निवेश्य । अमितगुणाभिः अपरिमितसौन्दर्यादिगुणाभिः । वल्लभाभिस्सह । परिचरणफलं तासां प्राग्भवकृतस्वसेवाफलं । प्रयच्छन् सन् । अरंस्त रमते स्म । प्राग्भवे ताभिस्तादृक्तपः कृतमिति तदुपभोगः, न तु रागपारतन्त्र्येणेति भावः । अर्धसमवृत्तेषु पुष्पिताग्रावृत्तमिदम् ॥ १ ॥

वीतरागस्य कीदृशो विषयभोगः? यूनोः परस्परानुरागदर्शनं विना सम्भोगपौष्कल्यासम्भवात्, तत्राह—

[3]क्रतुविधिनियतोऽप्यकर्मवश्यः
परिचितकामरसोऽपि वीतरागः ।
नगरवसतिरप्यशेषवासः
कथमिव केन विभुस्स वर्णनीयः ॥ २ ॥

क्रत्विति—क्रतुविधिनियतोऽपि कर्मानुष्ठाननियमयुक्तोऽपि । अकर्मवश्यः कर्मविधीनामनियोज्यः । परिचितकामरसः परिशीलितविष-

[1] सकलबन्धुभू- ट. [2] वर्णयितुमारभते—छ. [3] कृतविधि—झ.

यास्वादोऽपि वीतरागः । काम्यन्त इति व्युत्पत्त्या कामशब्दो विषयपरः । नगरवसतिः[1] · · · · वासोऽपि । अशेषस्य वासः । एवंभूतस्स विभुः । केन कथमिव वर्णनीयः केनापि कथमपि वर्णयितुं न शक्यत इत्यर्थः ।

यथा अकर्मवश्यत्वेऽपि तस्य कर्मानुष्ठानं, यथा वा अशेषजगदाश्रयत्वेऽपि नगरे वसतिः, तथा वीतरागत्वेऽपि विषयोपभोगस्सम्भवतीति भावः । अत्र प्रथमदृष्टान्तेन [2] तस्य कर्मानुष्ठाने कर्मविधिनियोज्यताप्रकटनवदाभिनयमात्र[3]रूपः रागप्रकटनमपि वल्लभोपभोगे तासां रतिपौष्कल्यायेत्येकः पक्षो दर्शितः । द्वितीयदृष्टान्तेन स्वकुक्षिनिक्षिप्ताशेषभुवनस्यापि तस्य द्वारकायां वसतिवत् वीतरागस्यापि तासामनुग्रहार्थो रागोदयः सम्भवति, अतर्क्याद्भुतचरितत्वात्तस्येति पक्षान्तरं दर्शितम् ॥ २ ॥

**अनुगमितमिदं स्वदाररक्षां**
**अनघमनोभवतन्त्र[4]माननीयम् ।**
**निरुपधिकरसस्य नेतुरासीत्**
**नृपतिमहर्षिभिरश्चितं चरित्रम् ॥ ३ ॥**

**अनुगमितमिति**—स्वदाररक्षामनुगामितं 'सर्वधातुभ्यः स्वार्थे णिजित्येके' इति स्वार्थे णिच्प्रत्ययः । चलचित्तानां स्त्रीणां रक्षणमुपायेन कर्तव्यं, न तु बलात्कारेण । तेन मानसातिचारनिरोधाभावात् ।

न कश्चिद्योषितश्शक्तः प्रसह्य परिरक्षितुम् ।
एतैरुपाययोगैस्तु [5] शक्तः स्यात्परिरक्षितुम् ॥
(मनुस्मृतिः ९-१०)

---

[1] 'कृतनगर' इति शब्देनात्र गलितेन भाव्यमिति भाति. [2] तत्र—घ. ट.
[3] 'रूपं' इति पाठः स्यात्. [4] माननीयः—घ. ट. [5] 'शक्यास्ताः परिरक्षितुम्' इति मु—पाठः.

इति मनुस्मरणात् । किञ्च तत्र रुच्यभिमतोपभोग एव मुख्य उपायः । उपायान्तरेणापि स्ववशीकरणसम्भवात् ।

यथाकामी भवेद्वाऽपि स्त्रीणां वरमनुस्मरन् ।
स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः ॥

(याज्ञवल्क्यस्मृतौ आचाराध्याये ८१ श्लो.)

इति याज्ञवल्क्यवचनाच्च । अनघं निर्दोषं मनोभवतन्त्रं शास्त्राविरुद्ध-कुलाङ्गनोपभोगप्रकारप्रतिपादकं नन्दिकेश्वरप्रभृतिमहितकामशास्त्रं तस्य माननीयं श्लाघनीयं, यथावत्तदुक्तप्रकारानुवर्तीति यावत् । निरुपधिकरसस्य निर्व्याजप्रेम्णः । नेतुः नायकस्य । इदं वल्लभाभिः क्रीडारूपं । चरित्रं । नृपतिमहर्षिभिः धर्मपरैः भोगलम्पटैश्च राजर्षिभिः। अञ्चितं श्लाघितं । आसीत् । 'उपधिर्व्याजचक्रयोः' इति विश्वः ॥ ३ ॥

श्रुतिशतमहिते पदे परस्मिन्
सितजलधौ रविमण्डले च सिद्धाम् ।
बहुमतिमतिशय्य सा बभासे
नरकरिपोरवरोधभूमिरग्र्या ॥ ४ ॥

श्रुतीति—नरकरिपोः कृष्णस्य । अग्र्या श्रेष्ठा । सा । अवरोधभूमिः अन्तःपुरभूमिः । श्रुतिशतमहिते "तद्विष्णोः परमं पदं" इत्याद्यनन्तश्रुतिश्लाघिते । परस्मिन् पदे परमपदे । सितजलधौ क्षीराब्धौ । रविमण्डले च । सिद्धां । बहुमतिं सदा भगवन्निवासप्रयुक्तं बहुमानं । अतिशय्य । बभासे । स्थानत्रयादप्यत्रैव सदा परिपूर्णं भगवतस्सन्निधानमासी[1]दित्यर्थः । "विश्वं शतं सहस्रं च सर्वमक्षय्यवाचकम्" इति भारतवचनादानन्त्यवाची शतशब्दः ॥४॥

---

[1] दिति भावः—च. छ.

निधिगणमुखवान्तनिष्कराशिः
प्रचितगुणा मणिभिः स्यमन्तकाद्यैः ।
प्रमुदितमहिषीगणेन चक्रे
यदुनगरी विभुना निवासभूमिः ॥ ५ ॥

**निधीति**—प्रमुदितमहिषीगणेन सन्तुष्टनिजपत्नीवर्गेण । विभुना कृष्णेन । निवासभूमिः स्वस्यास्पदभूता । यदुनगरी द्वारका । निधिगणमुखवान्तनिष्कराशिः शङ्खपद्मादिनिधिगणवदननिष्ठ्यूतसुवर्णकूटा । स्यमन्तकाद्यैर्मणिभिः । प्राचतगुणा [1]उपचितवृष्ट्यारोग्यादिगुणा च । चक्रे । यद्वा निवासभूमिश्चक्र इति योजना । युद्धपरम्परासमासद्यनन्तरमपि जलदुर्गरूपा सैव [2]स्वाधिकृतेत्यर्थः ॥ ५ ॥

अविकलविभवस्य विश्वमूर्तेः
अधिवसनं यदुवीरराजधान्याम् ।
अनुदिनमनपायिनीं प्रतिष्ठां
अभिलषतामनुचिन्तनीयमासीत् ॥ ६ ॥

**अविकलेति**—अविकलविभवस्य समृद्धवैभवस्य । विश्वमूर्तेः अन्तर्यामितया सर्वशरीरकस्य कृष्णस्य । यदुवीरराजधान्यामधिवसनं द्वारकायां निवसनं । अनपायिनीं अनश्वरीम् । प्रतिष्ठां इह ग्रामादिप्रतिष्ठां, परत्र दिव्यधामप्रतिष्ठां च । अभिलषतां । अनुदिनं । अनुचिन्तनीयमासीत् । [3]तत्क्रतुन्यायादिति भावः ॥ ६ ॥

1 उपचितपुष्ट्यारोग्यादि—**च.** 2 ‘स्वावासीकृतेत्यर्थः’ इति सुस्पष्टः पाठः. 3 तत्क्रतुन्यायादिति—**घ. ट.**

**सह मुनिभिरुपास्त धर्ममाद्यं**
**व्यवहरणानि ददर्श वेदविद्भिः ।**
**अरमत च वधूजनैर्यथार्हं**
**बहुतनुरक्रमतो विचित्रशक्तिः ॥ ७ ॥**

**सहेति**—विचित्रशक्तिः अद्भुतसामर्थ्यः कृष्णः । अक्रमतः युगपत् । बहुतनुस्सन् । मुनिभिः नारदादिभिस्सह । आद्यं धर्मं उपास्त मुक्त्युपायं परधर्मं चिन्तितवान् । "आद्य आदिभवे श्रेष्ठे" इति विश्वः । वेदविद्भिः ब्राह्मणैस्सह । व्यवहरणानि ददर्श "व्यवहारान् नृपः पश्येद्विद्वद्भिर्ब्राह्मणैस्सह" (याज्ञवल्क्यस्मृतौ २–१) इति स्मृत्यनुरोधेन व्यवहारान् दृष्टवान् । वधूजनैस्सह । अरमत च । [1] यथायोग्यमुचितदेशकालाद्यनतिक्रमेणेति सर्वत्र सम्बन्धः ॥ ७ ॥

ननु योगबलात्सौभरिप्रभृतयोऽप्येवं कुर्वन्ति, भगवतः कोऽतिशयस्तत्राह—

**अपि युगपदवाप्तनैकदेहैः**
**उपनतयोगबलैः स्वकर्मनिघ्नैः ।**
**धृतबहुवपुषा जगद्विधात्रा**
**जितकरणेन तु भुज्यते तदर्थः ॥ ८ ॥**

**अपीति**—युगपदवाप्तनैकदेहैः एककालपरिगृहीतानेकशरीरैः । उपनतयोगबलैः प्राप्तयोगप्रभावैः योगिभिरपि । स्वकर्मनिघ्नैः स्वस्वकर्मायत्तैः सद्भिः । भुज्यते । धृतबहुवपुषा कृष्णेन तु । जितकरणेन जितकर्मणा, अकर्मवश्येन सता । तदर्थः तेषां योगादीनां विषयः ।

---

[1] अत्र 'यथार्हं' इति मूलस्थप्रतीकधारणेन भाव्यमिति भाति.

भुज्यते । क्रियत इति व्युत्पत्त्या करणशब्दः कर्मवाची स . . . . . . . . . यद्वा—जितकरणेन जितेन्द्रियेणेत्यर्थः । स्वकर्मनिम्नैरित्यत्रापि स्वकर्मनिम्नकरणैरित्यर्थः । विभक्तधनेषु विभक्ता भ्रातर इतिवत् । भूतभविष्यदनन्तावतारतन्मूलमूर्त्यन्वयिभगवद्भोगाभिप्रायेण भुज्यत इति वर्तमानप्रयोगः । कर्माकृष्टेन्द्रियवशवर्तिनां कर्माधीनो भोगः । कर्मणामवश्यम्भावि[1]क्षयित्वाव्ययास्थितफलत्वाच्च । स्वकाले क्षयभयविषयान्तरालाभदुःखानुबन्धी, कालान्तरे च तदपायदुःखानुबन्धी । स्वेच्छामात्राधीनस्तु न तथेति विशेष इति भावः ॥ ८ ॥

यदुपतिरधिरूढचन्द्रशालः
सह दयिताभिरनन्यमानसाभिः ।
जलनिधिमभितः प्रदर्शयंस्ताः
निजमिव धाम निवेदयाम्बभूव ॥ ९ ॥

यदुपतिरिति—अनन्यमानसाभिः दयिताभिस्सह । अधिरूढचन्द्रशालः "चन्द्रशाला शिरोगृहम्" इत्यमरः । यदुपतिः । ताः दयिताः । निजं । धामेव । जलनिधिमभितः प्रदर्शयन् । [2]निवेदयांबभूव । समुच्चयोपमेयम् । निजपुरीमब्धिं च तत्तद्विशेषप्रदर्शनेन निवेदितवानित्यर्थः । बुद्ध्यर्थत्वात् [3]द्विकर्म ॥ ९ ॥

निजपदमनपायमाश्रितानां
प्रभुरपवर्गदशामिव प्रयच्छन् ।
अमितबहुगुणामनन्यलभ्यां
अमनुत कामपि सम्पदं प्रियाणाम् ॥ १० ॥

निजेति—प्रभुः कृष्णः । निजपदं आत्मचरणं । अनपायं अप्रच्युति यथा तथा । आश्रितानां प्रियाणां । अपवर्गदशां मुक्त्य-

---

1 'क्षयत्वाद्यवस्थित' इत्यत्र पाठः स्यात्. 2 अत्र 'निजं धामेव' इति प्रतीकधारणेन भाव्यमिति भाति, 3 'द्विकर्मकता' इत्यत्र पाठः स्यात्.

वस्थां। प्रयच्छन्निव। अमिता बह्वो गुणाः रत्नानां प्रभातिशयो गन्धद्रव्याणां सौरभातिशय इत्येवमादयो यस्यां तां। अनन्यलभ्यां। कामपि परिच्छेत्तुमशक्यां। सम्पदं धनसमृद्धिं। अतनुत तनुते स्म॥

शरीरारोग्यमर्थांश्च भोगांश्चैवानुषङ्गिकान्।
ददाति [1]ध्यायिनां नित्यमपवर्गप्रदो हरिः॥

(विष्णुधर्मे ७४-४३)

इति प्रमाणानुसारादिति भावः॥ १०॥

**स्वयमुदवसिते स्ववासधन्ये**
**त्रिषु भुवनेषु समामिवाद्भुतानाम्।**
**अतनुत समवायमात्मयोगात्**
**अतिशयिनीमथवा विभुस्समृद्धिम्॥ ११॥**

**स्वयमिति**—विभुः कृष्णः। [2]स्वयं। स्ववासधन्ये स्ववासेन कृतार्थे। [3]उदवसिते आवासभूमौ। त्रिषु। भुवनेषु लोकेषु। समां सकलगुणैरन्यूनां। अद्भुतानां आश्चर्याणां। समवायं समष्टिमिव स्थितां। अथवा अतिशयिनीं त्रिभुवनसम्पदमतिशय्य स्थितां। समृद्धिं धनरत्नादिविभूतिं। आत्मयोगात् आत्मप्रभावात्। स्वयं। अतनुत कृतवान्॥ ११॥

**विधिसदनमुखेष्वदृष्टपूर्वां**
**प्रथितपरस्परसम्मतिं समृद्धिम्।**
**यदुपतिदयितागृहेषु पश्यन्**
**मुदमभजद्भुवि नारदो मुनीन्द्रः॥ १२॥**

**विधीति**—मुनीन्द्रः मुनिश्रेष्ठः। नारदः। प्रथितपरस्परसम्मतिं प्रथिता सर्वलोकप्रसिद्धा परस्परसम्मतिरन्योन्यानुमतिरनसूयारूपा

---

[1] ध्यायिनो—घ. [2] 'स्वयं' इतीदमत्राधिकमिति भाति. [3] 'गृहगेहोदवसितवेश्मसद्मनिकेतनम्' इत्यमरकोशोऽत्र बोध्यः.

यस्याः तथोक्तां । विधिसदनमुखेषु सत्यलोकप्रभृतिष्विन्द्रादिलोकेषु । अदृष्टपूर्वां पूर्वमदृष्टां । समृद्धिं विभूतिं । भुवि भूलोके । यदुपतिदयितानां गृहेषु । पश्यन् सन् । मुदं । अभजत् ॥ १२ ॥

ललितरुचिषु कल्पवृक्षपोतैः
उपवनराजिषु तस्य सञ्चरिष्णोः ।
अदधुरवयवैर्मुदं मुरारेः
अनुकृतपुष्पफलादिकैस्तरुण्यः ॥ १३ ॥

ललितेति—कल्पवृक्षपोतैः बालकल्पतरुभिः । ललितरुचिषु मनोज्ञकान्तिषु । उपवनराजिषु । सञ्चरिष्णोः सञ्चारशलिस्य । तस्य मुरारेः । तरुण्यः । अनुकृतपुष्पफलादिकैः आदिशब्देन भ्रमरादिग्रहणं, [1] पुष्पादीनां कल्पवृक्षपोतानां पुष्पादिशोभां कुर्वद्भिरिति भावः । अवयवैः स्मितकुचनयनादिभिः, अनवयवस्यापि स्मितस्य यष्टिन्यायेन लक्षणया ग्रहणम् । मुदमदधुः सन्तोषं कुर्वन्ति स्म ॥ १३ ॥

अधिगतकुसुमापचायलीलः
प्रमदवनानि विभूषयन् स्वधाम्ना ।
प्रजनितमदनो मनस्विनीभिः
गुणसुरभि[2]स्सुरभिः स्वयं स मेने ॥ १४ ॥

आधिगतेति—अधिगतकुसुमापचायलीलः प्राप्तपुष्पापचयक्रीडः । प्रमदवनानि अन्तःपुरोपवनानि । स्वधाम्ना निजप्रभया । विभूषयन् । प्रजनितमदनः अङ्गनाना[3]मुद्दीप्तमन्मथः । गुणैस्सौशील्यादिभिः सुरभि-

[1] पुष्पादीनां ' इतीदमत्राधिकमिति भाति. [2] सुरभिं—ङ्म. अत्र च पाठे मनस्विनीभिः प्रजनितमदनः स्वयं आत्मानं सुरभिं वसन्तं मेने । कर्तरि लिट् इति बोध्यम्.
[3] ' उद्दीपित ' इति चेत् सुस्पष्टः पाठः.

स्सुगन्धिः विस्मरगन्धः, एवं विस्मरगुणख्यातिकः । सः कृष्णः । मनस्विनीभिः मानवतीभिरङ्गनाभिः । स्वयं सुरभिः मदनोद्दीपनात् साक्षाद्वसन्त इति । मेने मानितः । कर्मणि लिट् । प्रमदवनशोभावहत्वादिगुणसाम्याद्वसन्त इति वितर्कः ॥ १४ ॥

परिपणमिव मन्मथोत्सवानां
प्रथमविकस्वरपद्मदर्शनीयम् ।
अनुदितबहुविभ्रमं वधूनां
अभिनवयौवनमन्वभुङ्क्त नाथः ॥ १५ ॥

परिपणमिति—मन्मथोत्सवानां रतोत्सवानां । परिपणं मूलधनमिव स्थितं । "[1]परिपणं मूलधनं लाभोऽधिकं फलम्" इति यादवः । प्रथमं विकस्वरं विकसनशीलं पद्ममिव दर्शनीयं "[2]तदानन्दसान्द्रो यत्र मनोलयः" इति[3] अनुदितबहुविभ्रमं किञ्चिन्मौख्यानुवृत्तानुत्पन्नबहुलशृङ्गारचेष्टं । वधूनां । अभिनवयौवनं । अन्वभुङ्क्त ॥ १५ ॥

अमृतमयपयःपरिप्लुतानां
विषमगुणेषु विहारवापिकानाम् ।
कमलकुवलयादिषु प्रियाणां
मुखनयनस्मितकान्तिमभ्यनन्दत् ॥ १६ ॥

अमृतेति—अमृतमयैरमृतसदृशैरमृत[4]रूपैरेव पयोभिर्जलैः परिप्लुतानां पूर्णानां । विहारवापिकानां विहारदीर्घिकाणां । विषमगुणेषु

1 'नीवी परिपणे मूलधनं लाभोऽधिकं फलम्' इति मुद्रितकोशे. 2 तदानन्देत्यतः पूर्वं 'दर्शनीयं' इत्यनेनाधिकेन पदेन भाव्यमिति भाति. 3 अत्र 'यादवः' इति कोशनामधेयनिर्देशेन भाव्यमिति भाति. 4 'रूपैरेव वा पयोभिः' इत्यत्र सुस्पष्टः पाठः.

अरुणनीलधवलरूपतया विभिन्नगुणेषु । कमलकुवलयादिषु पद्मेन्दीवरकुमुदेषु । प्रियाणां मुखनयनस्मितकान्ति । अभ्यनन्दत् ॥ १६ ॥

**अवितथमहिमा निजप्रसादात्**
**अनघमनोरथतोषितासु तासु ।**
**स्वपरिजनतया सुरैर्नियुक्ताः**
**निरदिशदप्सरसो निदेशभाजः ॥ १७ ॥**

**अवितथेति**— अवितथमहिमा [1] अमोघमहिमा कृष्णः । स्वपरिजनतया स्वस्य परिचारकजनतया । सुरैः इन्द्रादिभिः । नियुक्ताः । अप्सरसः, कर्माणि । निजप्रसादात् स्वस्यानुग्रहात् । अनघैः सम्पादनक्लेशरहितैः स्वसङ्कल्पमात्रानीतैः मनोरथैः मनोरथविषयवस्तुभिः तोषितासु । तासु महिषीषु । नियोगभाजः प्रेष्याः । निरदिशत् निर्दिशति स्म ॥ १७ ॥

**बहिरुपनगरं बलानि दृष्ट्वा**
**सह यदुभिस्समये निवर्तमानम् ।**
**ददृशुरधिगवाक्षमेकचित्ताः**
**रथतुरगादिषु रामपार्श्विमं तम् ॥ १८ ॥**

**बहिरिति**—नगराद्बहिः । उपनगरं नगरोपकण्ठ एव, उत्कण्ठाहेतुदूरगमनाभावेऽपीति भावः । बलानि सैन्यानि । दृष्ट्वा । यदुभिः सह । समये उचितकाले । निवर्तमानं । रामपार्श्विमं बलानुजं । तं कृष्णं । अधिगवाक्षं गवाक्षेषु । एकचित्ताः तदेकमनसस्सत्यः । रथतुरगादिषु वाहनेषु । ददृशुः ॥ १८ ॥

---

[1] अमोघमाहात्म्यः—च.

विधिवदनुविधाय देवयात्रां
प्रतिपुरवीधिपरिक्रमेण दृश्यम् ।
पतिमनुददृशुस्तमेव दूरात्
अचरमदेवमनन्यदेवतास्ताः ॥ १९ ॥

**विधिवदिति**—विधिवत् विध्यभङ्गं, यथाशास्त्रं । देवयात्रां देवानामुत्सवयात्रां कुर्वतो नृपाननुकृत्येति यावत् । प्रतिपुरवीधि सर्वासु पुरवीथिषु परिक्रमेण देवानुव्रजनरूपेण । दृश्यं मनोज्ञं "तद्दृश्यं दृष्टमात्रं यत्कुर्यादुल्लासिकां नवाम्" इति यादवः । अचरमदेवं देवानामाद्यं देवं । [1]तं प्रति तमेव । अनन्यदेवताः तदतिरिक्तदेवताभजनरहिताः । ताः महिष्यः । दूराददनुदृशुः । एवकारेणोत्सवदेवताया अपि दर्शनं व्यावर्त्यते । दूरादित्यनेन दूरगतमपि तमेव ददृशुः, न तु सन्निहितमप्यन्यमिति व्यज्यते ॥ १९ ॥

बहुविधमुपहारजातमग्र्यं
सुरपतिभिस्स्वयमाहृतं मुकुन्दः ।
अपि गगनचरैरदृष्टपूर्वं
सममवरोधजनस्य संविभेजे ॥ २० ॥

**बहुविधमिति**—मुकुन्दः । बहुविधं नानाप्रकारं । अग्र्यं श्रेष्ठं । गगनचरैः देवादिभिरपि । अदृष्टपूर्वं अपूर्वं । सुरपतिभिः इन्द्रवरुणादिभिः । स्वयमाहृतं पुरुषान्तरप्रेषणं विना स्वयमेवाहृतं । उपहारजातं उपायननिचयं । अवरोधजनस्य अन्तःपुरस्त्रीजनस्य । समं । संविभेजे संविभज्य दत्तवानित्यर्थः ॥ २० ॥

[1] 'तं पतिमेव' इत्यत्र पाठः स्यात्.

उपचितशिखरे वदान्यरत्नैः
उचितगुहाश्रितहंसतूलतल्पे ।
बहुरिव स बभौ विहारशैले
प्रतिमणिभित्तिविभक्तचारुबिम्बः ॥ २१ ॥

**उपचितेति**—सः कृष्णः । वदान्यरत्नैः चिन्तामणिभिः । उपचितशिखरे समृद्धशृङ्गे । उचितां समतलतया शय्योचितां गुहामाश्रितं हंसतूलतल्पं यस्मिन् तस्मिन् । विहारशैले । प्रतिमणिभित्ति सर्वासु रत्नभित्तिषु विभक्तचारुबिम्बः असङ्कीर्णरुचिरप्रतिबिम्बस्सन् । बहुः अनेक इव । बभौ । हंसपक्षरोमरूपतूलभरितं तल्पं हंसतूलतल्पमित्याहुः ॥ २१ ॥

युगपदखिलमादरेण साक्षात्
युवतिजनस्य निदर्शयन्मुकुन्दः ।
असकृदुपगमय्य [1] चित्रशालाः
अनघसमाधिदशामिवाततान ॥ २२ ॥

**युगपदिति**—चित्रशालाः आलेख्यगृहाणि । उपगमय्य युवतिजनं प्रापय्य । अखिलं चित्रलिखितमखिलभुवनसंस्थानं । युगपत् एककालमेव । आदरेण । युवतिजनस्य । साक्षान्निदर्शयन् स्पष्टं प्रदर्शयन् । मुकुन्दः । अनघसमाधिदशामाततानेव युवतिजनस्य साधनानुष्ठानेन क्लेशरहितां समाध्यवस्थां चकारेव । [2] समाध्यवस्थायामपि युगपदखिलमपि योगिनः करतलामलकवत्साक्षात्कुर्वन्ति ॥ २२ ॥

[1] चित्रशालामनघ—म्र. दे. मु. [2] 'समाध्यवस्थायां हि युगपत्' इत्यत्र पाठः स्यात्.

आनतरमनसा स्ववल्लभाना
नरकजिता निरपायवैभवेन ।
भवभयविनिवारिणी स्वभक्तिः
ललितविहारमुखेन लम्भिताऽभूत् ॥ २३ ॥

अनितरेति — निरपायवैभवेन नित्यसत्यमहिम्ना । नरकजिता कृष्णेन । अनितरमनसां रागादनन्यगामिमानसानां । ललितविहार-मुखेन मनोज्ञक्रीडोपायेन । भवभयविनिवारिणी संसारभयहारिणी । स्वभक्तिः स्वस्मिन् निरतिशयप्रीतिरूपा परभक्तिः । लम्भिता प्रापिता । अभूत् । स्वाश्रितानामवश्यमोचनीयत्वादिति भावः । "मुखं निस्सरणे वक्त्रे प्रकारोपाययोरपि" इति विश्वः ॥ २३ ॥

प्रमुदितविबुधाहृतप्रक्लृप्तैः
कनकसरोजवनैरलङ्कृतानाम् ।
अतिशयमवरोधदीर्घिकाणां
अधिसुरसिन्धु समीक्षितं निदध्यौ ॥ २४ ॥

प्रमुदितेति — प्रमुदितैः कार्यनिर्वर्तनेन हृष्टैर्विबुधैराहृतैः दिवस्समानीतैः प्रक्लृप्तैः तदनन्तरं निवेशितैश्च । कनकसरोजवनैः । अलङ्कृतानां । अवरोधदीर्घिकाणां अन्तःपुरक्रीडावापिकानां । अति-शयं उत्कर्षं[1] । निदध्यौ ददर्श ॥ २४ ॥

विहरति वनिताजने तदीयैः
अपलपिताम्वलोकनप्रभावैः ।
पुनरपि हरिनीलरत्नभासा
दधुरसितोत्पलसम्पदं सरस्यः ॥ २५ ॥

विहरतीति—सरस्यः दीर्घिकाः । वनिताजने । विहरति जले प्रथममवतीर्य क्रीडति सति । तदीयैः वनिताजनसम्बन्धिभिः । अव-

1 'उत्कर्षं' इत्यनन्तरं 'अधिसुरसिन्धु देवनद्यां समीक्षितं दृष्टम्' इत्यर्थक-ग्रन्थेनात्र भाव्यमिति भाति.

लोकनप्रभावैः ईक्षणसमृद्धिभिः । अपलपितां धवलिम्ना तिरस्कृतां। असितोत्पलसम्पदं इन्दीवराणां समृद्धिं। हरिनीलरत्नभासा [1] किञ्चित्कालं तासां जलकेलिं दृष्ट्वा पश्चादवतीर्णः कृष्ण एव नीलरत्नं तस्य भासा । पुनरपि दधुः । ईक्षणप्रभां धवलामपि वर्णयन्ति कवयो यथा कादम्बर्यां—"तामेव धवलेक्षणां आरब्धरणरणिकेन चेतसा चिन्तयतस्तस्य सा रात्रिर्जगाम" इति । यथा च तत्रैव केयूरकवर्णने—[2] "कर्णान्तायतस्य स्वभावधवलस्य धवलिम्ना लोचनयुगलस्य धवलयतेव दिगन्तराणि कुमुदवनानीव वर्षता पुण्डरीकमयमिव दिवसं कुर्वता" इत्यादि । तदनुसारेणापलपितामित्युक्तम् ॥ २५ ॥

**स्थिरधृतिवधिरोप्य रत्नडोलां**
**गुणघटितामिव माधवस्स्वमायाम् ।**
**अगमयत गतागतान्यभीक्ष्णं**
**सुकृतजुषस्स्वयमङ्गनाः स्वतन्त्रः ॥ २६ ॥**

स्थिरेति—स्वतन्त्रः स्वाधीनः। माधवः। सुकृतजुषः भाग्यवतीः। अङ्गनाः, प्रयोजककर्माणि । स्थिरा धृतयो रत्नडोलाधारणरज्जवो यस्यास्तां। अत एव गुणैः सत्वादिभिर्घटितां। स्वमायामिव स्थितां। रत्नदोलां अधिरोप्य, अभीक्ष्णं मुहुः। गतागतानि स्वयमगमयत् स्वयमेव डोलां क्षेपणैरनयत । करणार्थे क्तिन्प्रत्यये धृतिशब्दो धृतिकरणेषु सुसाधुः ॥ २६ ॥

**रुचिरकनकशृङ्गवक्त्रवान्तैः**
**प्रतितनु कुङ्कुमवारिभिः प्रसिञ्चन् ।**
**अजनयदनुरागयोगमन्त-**
**र्बहिरपि तोयविहारतो वधूनाम् ॥ २७ ॥**

रुचिरेति—रुचिराणां कनकशृङ्गाणां सुवर्णक्रीडाम्बुयन्त्राणां वक्त्रेण वान्तैरुद्गीर्णैः। कुङ्कुमवारिभिः । प्रतितनु प्रतिशरीरं। प्रसिञ्चन्।

[1] किञ्चित्कालतो–घ. [2] B 4712. कादम्बर्यां 179 पृष्ठे 12 पङ्क्तौ

तोयविहारतः जलक्रीडया। वधूनां। अन्तर्बहिरपि अनुरागयोगं अन्तः प्रेमसम्पर्कं बहिररुणिमसम्पर्कं च। अजनयत् ॥ २७ ॥

**नवमणिपरिकल्पितेषु नाथः**
**कमलवनान्तरकेलिमन्दिरेषु ।**
**श्रिय इव सुदृशो गृहीतपद्माः**
**हृदि निदधे पुरुषोत्तमः प्रतीतः ॥ २८ ॥**

नवेति—प्रतीतः भूषितः "प्रतीतो भूषिते ख्याते" इति वैजयन्ती नाथः स्वामी। पुरुषोत्तमः। नवमणिपरिकल्पितेषु रम्यरत्ननिर्मितेषु, वज्रादिनवसङ्ख्यरत्ननिर्मितेषु वा। कमलवनान्यन्तराणि अन्तर्गतानि येषां तेषु केलिमन्दिरेषु क्रीडागृहेषु। गृहीतपद्माः। अत एव श्रियः तत्रैव कमलाकरेभ्य उत्थिता लक्ष्मीरिव स्थिताः। सुदृशः। हृदि चित्ते। निदधे। श्रीपक्षे हृत् वक्षः। "हृदाख्या चित्तवक्षसोः" इति विश्वः ॥ २८ ॥

**दिशि दिशि मकरन्दवर्षदिग्धां**
**विविधपरागविभक्तचूर्णचित्राम् ।**
**भुवमभजत साकमङ्गनाभिः**
**[1] पुलकितदृष्टिषु पुष्पमण्डपेषु ॥ २९ ॥**

दिशीति—पुलकिताः सञ्जातपुलका दृष्टयो येषु विषयेषु तेष्वत्यन्तदृष्टिप्रियेषु। पुष्पाणां मण्डपेषु। दिशि दिशि प्रतिदिशं सर्वासु दिक्षु। मकरन्दवर्षदिग्धां। विविधेन परागेण पुष्परेणुना विभक्तैश्चूर्णैः कुङ्कुमादिचूर्णैश्चित्रां। भुवं। अङ्गनाभिस्साकं। अभजत ॥ ॥ २९ ॥

---

[1] चुलकित—दे· मु.

अनुविहितमहोत्सवो यथार्ह
वितरणतोषितवन्दिबन्धुवर्गः ।
परिणयनविधिं लतावधूनां
अतनुत चूतवरैः प्रियार्पितानाम् ॥ ३० ॥

अनुविहितेति—अनुविहितमहोत्सवः अनुकृतमहोत्सवः । यथार्ह । वितरणेन तोषितो वन्दिनां बन्धूनां च वर्गो येन स कृष्णः । [1]प्रियार्पितानां । लतावधूनां । चूतैरेव वरैस्सह । परिणयनविधिं विवाहकर्म । अतनुत चक्रे ॥ ३० ॥

सुतबहुमतभागिनां शुकानां
उपहृतदिव्यरसोपभोगभाजाम् ।
अतिमधुरगिरां स्वशिक्षितानां
अतिशयसिद्धिमदर्शयत्प्रियाभ्यः ॥ ३१ ॥

सुतेति—सुतबहुमतभागिनां पुत्रबहुमानभाजां । उपहृतदिव्यरसोपभोगभाजां उपनीतानां रम्यजम्बूदाडिमचूतादिरसानां उपभोगं भजमानानां । अतिमधुरगिरां श्लाघ्यवाचां । स्वेन शिक्षितानां । शुकानां । अतिशयसिद्धिं सल्लापातिशयोत्कर्षं । प्रियाभ्यः । अदर्शयत् ॥ ३१ ॥

अनुकृतनिजशक्तिभिः प्रियाभिः
मुहुरिह गुण[2]बन्धविभक्तसन्निवेशैः ।
मुहुरिह निपतद्भिरुत्पतद्भिः
करणवशैरिव कन्दुकैरदीव्यत् ॥ ३२ ॥

अनुकृतेति—अनुकृताः निजशक्तयो दिव्यमहिष्यः श्रीभूनीलाद्या याभिस्ताभिः । प्रियाभिस्सह । गुणानां तन्तूनां बन्धेन स्वने

---

[1] प्रियाभिरर्पितानां—घ. [2] बद्धविभक्तसंनिवेशैः—घ. बन्धविचित्रसंनिवेशैः—ग्र. दे. मु.

विभंक्तसन्निवेशैः । मुहुः पुनः पुनः । इह भुवि । निपतद्भिः । उत्पतद्भिश्च । कन्दुकैः । करणवशैः इन्द्रियायत्तजीवैरिव । अदीव्यत् । अक्रीडत् । यथा भगवान् वैकुण्ठे दिव्यमहिषीभिस्सह सत्वादिगुणबन्धेन विलक्षणप्रकृतिभिः मुहुरिह लोके पतद्भिः पुनः परलोके उत्पतद्भिश्च संसारिभिरेव क्रीडोपकरणैः क्रीडति तद्वदित्यर्थः । कं शिरः दुनोति नमनोन्नमनेक्षणादिति कन्दुकशब्दो दकारवानित्यर्थः ॥ ३२ ॥

**निजयुवतिषु यद्यपि त्रिधामा**
**नयनपिधानविहारमाजहार ।**
**न तदनुचरितं तथाऽपि ताभिः**
**त्रिभुवनदृष्टिनिरोधशङ्किनीभिः ॥ ३३ ॥**

**निजेति**—त्रिधामा कृष्णः । यद्यपि । निजयुवतिषु । नयनपिधानविहारं । आजहार चकार । तथाऽपि । त्रिभुवनदृष्टिनिरोधशाङ्किनीभिः भगवन्नयनयोर्लोकप्रकाशकयोः पिधाने त्रिभुवनस्य दृष्टिनिरोधं शङ्कमानाभिः । ताभिः । तत् नयनपिधानं । नानुचरितं क्रीडान्तरवन्नानुकृतम् । विहारोपसर्जनस्य पिधानस्य तत्पदेन परामर्शो नपुंसकानुरोधात् ॥ ३३ ॥

**श्रुतिविहितमवन्ध्ययन् स्वधर्मं**
**प्रतिदिनमन्यपरो यदा बभूव ।**
**तदुपचरणतस्तदाऽपि तासां**
**समजनयत्प्रियभोगमेव कालः ॥ ३४ ॥**

**श्रुतीति**—प्रतिदिनं दिने दिने । यदा । श्रुतिविहितं । स्वधर्मं वर्णाश्रमाद्युचितं स्वधर्मं । अवन्ध्ययन् सफलयन् सन् । अन्यपरः क्रीडाव्यतिरिक्तकर्मपरः । बभूव । तदाऽपि । तासां । तस्य कर्मपरस्य कर्मोप-

करणसज्जीकरणरूपेणोपचारेण । कालः । प्रियभोगमेव समजनयत् प्रियभोगादेव प्रमोदमजनयदित्यर्थः ॥ ३४ ॥

मणिपरुवकमञ्जुलस्तनीभिः
मधुसमयापगमे वराङ्गनाभिः ।
सितमणिविहितान् स यन्त्रधारा-
व्यतिकरशीतलितानभुङ्क्त सौधान् ॥ ३५ ॥

**मणीति**—सः कृष्णः । मधुसमयस्यापगमे ग्रीष्मे । मणीनां परुवकौ मणिमयौ भूषणविभाजनविशेषाविव मञ्जुलौ स्तनौ यासां ताभिः । वराङ्गनाभिस्सह । सितमणिविहितान् चन्द्रकान्तमणिनिर्मितान् । यन्त्रधाराणां यन्त्रसञ्चारितनानाजलधाराणां व्यतिकरेण सम्पर्केण शीतलितान् । सौधान् अभुङ्क्त सौधेषु विजहारेत्यर्थः ॥ ३५ ॥

स्फटिकसदनदीप्तिदत्तहस्तां
मुरभिदसेवत सादरं सदारः ।
अपजलदनिशोदितस्य शोभां
हलधर[1]कान्तिभृतस्तुषारभासः ॥ ३६ ॥

**स्फटिकेति**—सदारः दारैस्सहितः । मुरभित् । अपजलदनिशोदितस्य अपगतमेघायां शरन्निशायामुदितस्य । हलधरकान्तिभृतः बलदेवस्य कान्तिं बिभ्रतः । तुषारभासः चन्द्रस्य । स्फटिकसदनदीप्तिदत्तहस्तां स्फटिकगृहाणां दीप्त्या दत्तावलम्बनहस्ताम्, परिपोषितामिति यावत् । शोभां कान्तिम् । सादरं । असेवत ॥ ३६ ॥

---

[1] कान्तिजुषस्तु—घ. ग्र. दे. मु.

अगुरुभिरसितैरनूरुगौरैः
नवघुसृणैरपि निर्विवेश नाथः ।
हिमऋतुमवरोधसुन्दरीणां
स्तनपरिरम्भसमर्पितैर्विलिप्तः ॥ ३७॥

अगुरुभिरिति—अवरोधसुन्दरीणाम् । स्तनपरिरम्भेण समर्पितैः सङ्क्रमितैः । अगुरुभिः कृष्णागुरुभिः । अनूरुगौरैः गरुडाग्रजारुणैः । "गौरोऽरुणे सिते पीते" इति यादवः । नवघुसृणैः नवकुङ्कुमैरपि । विलिप्तस्सन् । हिमऋतुं हेमन्तर्तुम् । निर्विवेश । अगुरुकुङ्कुमे उष्णवीर्ये इति हेमन्तभोग्यता । ऋतुमिति 'ऋत्यकः' (पा. सू. ६-१-१२८) इति प्रकृतिभावः । अगुरुशब्द उकारमध्य इति तत्र तत्रोक्तम् ॥ ३७॥

अनलशकटिकाभिरप्यजय्यं
शिशिरसमीरणमञ्जसा जिगाय ।
अविरलपरिरम्भलम्भनीयैः
स्तनकलशोष्मभिरात्मवल्लभानाम् ॥ ३८ ॥

अनलेति—अनलस्य शकटिकाभिः हसन्तिकाभिरपि । अजय्यं जेतुमशक्यम् । शिशिरसमीरणं वायुम् । अविरलपरिरम्भलम्भनीयैः गाढालिङ्गनेन लभ्यैः । आत्मवल्लभानाम् । स्तनकलशयोरूष्मभिः । अञ्जसा त्वरितं । जिगाय । शकटशब्दात् [1] पचये यदीतिवचनादल्पत्वविवक्षायां स्त्रीत्वेन गौरादिङीषि 'केऽणः' (पा. सू. ७ ४-१३) इति ह्रस्वे च सति शकटिकाशब्दः ॥ ३८ ॥

---

1 'स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षाऽपचये यदि' इति नामलिङ्गानुशासनादिति भावः । अतश्चात्र 'विवक्षाऽपचये यदि' इति शुद्धपाठेन भाव्यमिति भाति । मालतीमाधवीय-व्याख्यायां तु त्रिपुरारिणा 'परिमृदितमृणालीम्लानं' (मालतीमाधवे १-२५) इत्यत्र 'जातेरस्त्रीविषयात्' (पा. सू. ४-२-६३) इत्यनेन ङीषित्युक्तं दृश्यते.

उपनिषदुपदेशसाभिलाषैः
उपचरितो मुनिभिस्सनन्दनाद्यैः ।
रतिपतिसमयास्थितो वधूनां
ललितकलागमदेशिको बभूव ॥ ३९ ॥

**उपनिषदिति** — उपनिषदुपदेशसाभिलाषैः ब्रह्मविद्योपदेशे अभिलाषवद्भिः । सनन्दनाद्यैः सनन्दनसनत्कुमारादिभिः । मुनिभिः । उपचरितः आराधितः कृष्णः । रतिपतिसमयस्थितः मन्मथतन्त्र-निष्ठस्सन् । वधूनाम् । ललित[1]कला विभ्रमशिल्पमेव आगमो वेदस्तस्मिन् देशिकः आचार्यः । बभूव ॥ ३९ ॥

कलमधुरगिरां कलाप्रसङ्गात्
अतिमदनोपनिषत्परं रहस्यम् ।
प्रियहितरुचिराक्षरं प्रियाणां
श्रुतिषु चकार शिखामणिः श्रुतीनाम् ॥ ४० ॥

**कलेति**—श्रुतीनां । शिखामणिः उत्तमाङ्गाभरण[2]भूषितः कृष्णः । कलमधुरगिरां, अव्यक्तमधुरवाची कलशब्दो मधुरशब्दस्यापि सन्निधाना-दव्यक्तमात्रपरः[3] । प्रियाणां दयितानां । कलायाः गानविद्यायाः प्रसङ्गात् । अतिमदनोपनिषत् मदनोपनिषदमतिक्रान्तम्, अत्यन्तं मन्मथोद्दीपकत्वात्तथोक्तिः । प्रियाणि तत्कालहृद्यार्थानि, हितानि

---

[1] कलागमो विभ्रम–ख. [2] 'भूषितपदस्थाने 'भूत' इति पाठेन भाव्यमिति भाति.
[3] यथा विशिष्टवाचकस्य पदस्य पृथग्विशेषणवाचकसंनिधाने विशेष्यमात्रपरता तथा तुल्यन्या-यात् पृथग्विशेष्यवाचकसंनिधाने विशेषणमात्रपरत्वमपीत्याशयेनेदमिति भाति । यद्वाऽत्र विशेषणविशेष्यभावे विनिमयकाभावान्माधुर्यमेवात्र विशेषणमिति । तथाचोक्तं न्याय-विद्भिः 'विशिष्टवाचकानां पदानां पृथग्विशेषणसमवधाने विशेष्यमात्रपरत्वम्' इति । अत एव च 'सकीचकैर्मारुतपूर्णरन्ध्रैः' (रघुवं–२–१२) इत्यत्र कीचकपदं 'कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इति कोशात्सरन्ध्रवेणुवाच्यपि मारुतपूर्णरन्ध्रैरिति विशेषणवाचकपदसंनिधानात् वेणुमात्रार्थकमिति बोध्यम्.

परिणामहृद्यार्थानि, रुचिराणि श्रोत्ररम्याण्यक्षराणि यस्य तत्। परं उत्कृष्टम्। रहस्यं सङ्गीतशास्त्ररहस्यं स्वर्गीयं दिव्यगीतं। श्रुतिषु तासां श्रोत्रेषु। चकार ॥ ४० ॥

**निरुपाधिकनिजप्रभावगर्भ**
**परिषदि विश्वपतिः प्रियासहायः।**
**किमपि निशमयाम्बभूव गीतं**
**प्रमुदितकिन्नरदम्पतिप्रयुक्तम् ॥ ४१ ॥**

**निरुपाधिकेति**—परिषदि अन्तःपुरसभायाम्। प्रियाणां सहायः ताभिस्सहितः। विश्वपतिः कृष्णः। निरुपाधिकः कैतवरहितः पारमार्थिको निजः प्रभावो गर्भः प्रतिपाद्यतया अन्तःस्थितो यस्य तत्। प्रमुदितैः असुरध्वंसादिना प्रहृष्टैः किन्नरमिथुनैः प्रयुक्तम्। किमपि अपरिच्छेद्यमाहात्म्यं। गीतं गानं। निशमयाम्बभूव ॥ ४१ ॥

**मृदु करतललीलया मृदङ्गान्**
**असमयनर्तितनीलकण्ठयूथान्।**
**ध्वनयति दयिते विदूरभूमेः**
**श्रियमिव ताः पुलकोद्गमैरपुष्यन् ॥ ४२ ॥**

**मृद्विति**—दयिते कृष्णे। असमयनर्तितनीलकण्ठयूथान् गर्जितभ्रान्त्युत्पादनेन अमेघकालनर्तितमयूरनिवहान्। मृदङ्गान् वाद्यविशेषान्। करतलस्य लीलया क्रियया। मृदु मन्दतरं यथा तथा। ध्वनयति सति। ताः कृष्णवनिताः। पुलकोद्गमैः। विदूरभूमेः वैडूर्योत्पत्तिभूमेः, मेघगर्जिते वैडूर्याङ्कुर[1]शालिन्य इति भावः। श्रियं शोभाम्। अपुष्यन्निव उपाचिन्वन्निव, वस्तुतो विदूरभूशोभायास्तत्स्वभावादुत्प्रेक्षार्थ इवशब्दः ॥ ४२ ॥

---

[1] अत्र 'शालिन्याः' इति पाठेन भाव्यमिति भाति.

करकमलपरिग्रहेण धन्यां
वरतनुसंसदि वादयन् विपञ्चीम् ।
अविदितगमनाय गायकैस्स्वैः
उपरतगीतिभिरुन्मुखैस्सिषेवे ॥ ४३ ॥

करेति—वरतनुसंसदि अवरोधवधूनां समाजे । करकमलस्य परिग्रहेण । धन्यां सुकृतिनीम् । विपञ्चीं वीणाम् । वादयन् कृष्णः । अविदितगमनाय अनवगतांशा[1]वगमनाय । उन्मुखैः । उपरतगीतिभिः विरतगानैः । स्वैः स्वीयैः । गायकैः । सिषेवे सेव्यते स्म । कर्मणि लिट् ॥ ४३ ॥

श्रुतिमधुसुभगैरदीनहृद्यैः
श्रुतघननादशिखण्डिनीगणश्रीः ।
मधुरिपुवनिताजनस्समाजे
ध्वनिभिरमाद्यत दिव्यदुन्दुभीनाम् ॥ ४४ ॥

श्रुतीति—समाजे केलिसंसदि । मधुरिपोर्वनिताजनः । श्रुतीनां मधुसुभगैः माध्वीकैरिव स्वादुभिः । अदीनैर्गम्भीरैर्हृद्यैः हृदयस्य प्रीणनैः । दिव्यदुन्दुभीनां भगवत्प्रीणनाय [2]विवादितानाम् । ध्वनिभिः । श्रुतघन-नादस्य आकर्णितमेघनादस्य शिखण्डिनीगणस्य मयूरीकुलस्य श्रीरिव शोभा यस्य तथाभूतस्सन् । अमाद्यत मत्तीक्रियते स्म । [3]मिदि हर्षे इति धातोः ण्यन्तात्कर्मणि लङन्तस्य चित्तविरागार्थे मित्संज्ञाभावात् न ह्रस्वः । [4]दमयोग इत्याङ्वा ॥ ४४ ॥

---

[1] वगमाय—च. [2] अत्र 'निनादितानां' इति पाठेन भाव्यमिति भाति. [3] अत्र 'मदी हर्षे' (दिवादि ८१५) इति शुद्धपाठेन भाव्यमिति भाति [4] अत्र 'मद तृप्तियोगे' (चुरादि १७०६) इति 'धातुर्वा' इति शुद्धपाठेन भाव्यमिति भाति.

सललितकरणाङ्गहारहृद्यं
सह दयिताभिरुदारदिव्यनाट्यम् ।
अनुदिनमनिमेषदर्शनीयं
जितमधुरप्सरसां ददर्श नृत्यम् ॥ ४५ ॥

सललितेति—जितमधुः कृष्णः । ललितः कोमलक्रमः शृङ्गारचेष्टाविशेषः तत्सहितैः करणैः अङ्गचेष्टाभिः अङ्गहारैः नानाविधाभिनयैर्हृद्यम्—

अङ्गहारोऽङ्गविक्षेपो नानाकरणसंहतिः ।
करणान्यङ्गचेष्टास्स्युः हरणं करणं समम् ॥

इति यादवः । उदारं महद्रमणीयं, दिव्यं दिवि भवं, दिव्यनाट्यसहितमित्यर्थः । अनिमेषदर्शनीयं सूक्ष्मत्वाद्रम्यं, आश्चर्यत्वान्निर्निमेषं प्रेक्षणीयम् । अप्सरसां नृत्यम् । अनुदिनम् । दयिताभिस्सह । ददर्श । रसविषयं सात्विकाभिनयबहुलं नाट्यम् , भावविषयमाङ्गिकाभिनयबहुलं नृत्यमिति । [1] अव्यक्तसात्विकस्तम्भाद्यभिनयोन्निमेषनयनत्वादिः 'नट अवस्यन्दने' इति धातोरुषनार्थात् प्रतीयते । व्यते सा हस्तव्यापाराद्यमङ्गिकाभिनयो नृती गात्रविक्षेपे इति धातोः प्रतीयत इति ॥४५॥

अभिनयमभिनन्द्य नर्तकीनां
स्वयमुपदिष्टमलङ्घितोपदेशम् ।
पुनरपि मुदितस्तमेव युञ्जन्
अविदितपूर्वमिवादरादपश्यत् ॥ ४६ ॥

अभिनयमिति—स्वयमुपदिष्टं स्वेनैव शिक्षितम् । अलङ्घि-

---

1 अत्र "अव्यक्तसात्विकस्तम्भाद्यभिनयो निर्निमेषनयनत्वादिः 'नट अवस्पन्दने' (चुरादि १५४६) इति धातोः स्पन्दनार्थात्प्रतीयते । तथा हस्तव्यापाराद्याङ्गिकाभिनयो 'नृती गात्रविक्षेपे' (दिवादि १११६) इति धातोः प्रतीयत इति" इत्यर्थकेन शुद्धपाठेन भाव्यमिति भाति.

तोपदेशं स्वोपदेशानुसारिणम् । नर्तकीनामभिनयं अनुकार्यरामादेरनु-करणरूपम्—

भूषणाद्यैर्गिराऽङ्गेन सत्त्वेनाभिनयाः कृताः ।
तेऽपि क्रमात्स्युराहार्यवाचिकाङ्गिकसात्त्विकाः॥

इत्युक्तरूपं चतुर्विधमभिनयम् । अभिनन्द्य । मुदितः । तमेवाभिनयम् । युञ्जन् घटयन् सन् । अविदितपूर्वं पूर्वमदृष्टमिव । आदरात् । अपश्यत् । स्वशिक्षितेषु संपन्नं सामर्थ्यं [1]महत्तरं करोतीति भावः ॥ ४६ ॥

प्रतियुवतिगृहीतनैकरूपः
प्रणयवतीभिरनन्य इत्युपेतः ।
अपहृतमणिपादुकः कयाचित्
पदमपि गन्तुमशक्नुवन्निवासीत् ॥ ४७ ॥

प्रतियुवतीति—प्रत्येकं सर्वासु युवतीषु गृहीतानि अत एव नैकान्यनेकानि रूपाणि यस्य तथोक्तः । अत एव प्रणयवतीभिः । [2]अनन्यः मदन्यनिरपेक्षो मयैव वर्तत इति । उपेतः गृहीतः कृष्णः । कयाचित् देव्या । अपहृतमणिपादुकस्सन् पदमपि गन्तुमशक्नुवन्निव । आसीत् । तस्याः परिहासविलाससाफल्यायेति भावः ॥ ४७ ॥

अनवहिततया सखीसमक्षं
द्रुतमुपहूय समाख्ययेतरस्याः ।
[3]मुषितमनसमद्भुतैर्विलासैः
इदमपि नाम तवेत्युवाच मुग्धाम् ॥ ४८ ॥

अनवहिततयेति—अनवहितत्वेन । इतरस्याः देव्याः । समाख्यया नाम्ना । सखीनां समक्षं । द्रुतं शीघ्रम् । उपहूय । अद्भुतैः ।

[1] अत्र ' महादरं ' इति पाठः स्यात् [2] अनन्यनिरपेक्षो मय्येव—घ. [3] रुषित–

विलासैः स्वस्य शृङ्गारचेष्टाभिः। मुषितमनसं सखीनामपि समक्षं सपत्नीनाम्ना आहूतामिति यथा मानग्रहो न भवति तथा वशीकृतमनसम्। अत एव मुग्धां मूढां, बालां वा, ताम्। इदमपि तव नामेत्युवाच। एवमत्यर्थं प्रसक्तमपि मानग्रहं विभ्रमातिशयेन उक्तवैदग्ध्येन च निरासेत्यर्थः ॥ ४८ ॥

**समुचितदिनलङ्घनं सपत्न्याः**
**परिपणितं स्वयमभ्युपेत्य नाथः।**
**स्मितमधुरमुखो जितः कयाचित्**
**विवश इवाक्षविहारतो बभूव ॥ ४९ ॥**

**समुचितेति**—नाथः। कयाचिद्देव्या। परिपणितं [1]द्यूतपणीकृतं। सपत्न्याः। समुचितदिनलङ्घनम्। [2]स्वयमभ्युपेत्य उवाच एवमर्थं प्रतिश्रुत्य। अक्षविहारतः अक्षक्रीडया। जितः। स्मितमधुरमुखः निर्जितोऽहमिति लज्जास्मिताभिनयेन रुचिरवदनस्सन्। विवशः परवश इव [3]तस्य वारः प्रतिज्ञातः अस्यास्तदातिलङ्घनं प्रातिज्ञातं विरुद्धमापतितमिति कर्तव्यमूढ इव। बभूव ॥ ४९ ॥

**अनुगतनिजबिम्बमेनमन्या**
**मणिमुकुरस्थमवेक्ष्य मन्दहासम्।**
**न खलु तदवलोकनाय पश्चात्-**
**व्यतनुत साचिविधिं तदेकतृष्णा ॥ ५० ॥**

**अनुगतेति**—अन्या देवी. आदर्शं पश्यन्तीति भावः। मणिमुकुरस्थं पश्चादागत्य रत्नादर्शे प्रतिबिम्बितम्। अनुगतनिजबिम्बं संश्लिष्टनिजप्रतिबिम्बम्। मन्दो हासो यस्य तम्। एनं कृष्णम्।

---

[1] द्यूते पणीकृतं-च. [2] ' स्वयमभ्युपेत्य स्ववाचा एवमर्थं प्रतिश्रुत्य ' इत्ययत्र पाठः स्यात्. [3] अत्र ' तस्या वारः ' इति पाठः स्यात्.

अवेक्ष्य। तदेकतृप्ता स्वसंश्लिष्टस्य तस्य दर्शनेनैकेन तृप्ता सती। पश्चात्। तदवलोकनाय साचिविधिं मुखसाचीकरणम्। न व्यतनुत। खलुर्वाक्यालङ्कारे ॥ ५० ॥

[1] पुलकिनि कुचकुड्मले परस्याः
कथमपि साध्वसकम्पिताग्रहस्तः।
स्थिरचरजगदेकदिव्यशिल्पी
विषमतमं विलिलेख पत्रभङ्गम् ॥ ५१ ॥

**पुलकिनीति**—स्थिरचरजगदेकदिव्यशिल्पी कृष्णः। परस्याः। पुलकिनि स्वकरस्पर्शाद्रोमाञ्चवति। कुचकुड्मले कुड्मलाकारे कुचे। साध्वसेन [2] मामन्या देव्यास्सन्। कथमपि यत्नगौरवेण। विषमतमं अत्यन्तं विषमं यथा तथा। पत्रभङ्गम्। विलिलेख। कुचस्य पुलकैर्दन्तुरत्वात् करकम्पाच्च विषममभूदिति भावः ॥ ५१ ॥

मृदुसुरभिसुजातबन्धुराभिः
प्रणिदधदग्रनिबद्धपङ्कजाभिः।
मुहुरसितदृशां स्वकण्ठयोग्यां
भुजलतिकाममिमीत मालिकाभिः ॥ ५२ ॥

**मृद्विति**—मृदुभिः कोमलाभिः, सुरभिभिस्सुगन्धिभिः, सुजाताभिः मनोज्ञग्रथिनीभिः, बन्धुराभिर्नूतनाभिश्चेति खञ्जकुब्जवद्विशेषणसमासः। "मराले बन्धुरः पुंसि पुंसि वा नवरामयोः" इति रत्नमाला। अग्रेषु निबद्धानि करप्रातिनिधित्वेन ग्रथितानि पङ्कजानि यासां ताभिः। असितदृशाम्। स्वकण्ठस्य योग्यां आलिङ्गनोचिताम्। भुजलतिकां लतासदृशं भुजम्। प्रणिदधत् तारतम्यनिर्णये अवदधानः। मुहुः

1 पुलकितकुच—घ. ग्र. दे. मु. 2 'मामन्या देवी पश्येदिति भयेन कम्पिताग्रहस्तस्सन्' इत्यर्थकेनात्र ग्रन्थेन भाव्यमिति भाति.

प्रेम्णा विनोदरसिकतया पुनः पुनः । अमिमीत मिमीते स्म । लताशब्दात्कप्रत्यये 'केऽणः' (पा. सू. ७–४–१३) इति ह्रस्वे 'प्रत्ययस्थात्' (पा. सू. ७–३–४४) इत्यादिना इकारादेशे च लतिकाशब्दः। मालिकाशब्दस्तु मालाशब्दादेव कप्रत्यये ॥ ५२ ॥

अभजत स च ताश्च दूतिकानां
अमृतपरिप्लुतभेषजायमानैः ।
प्रतिदिनमिदमादिमं प्रमोदं
प्रणयविरोधसितासितैर्वचोभिः ॥ ५३ ॥

अभजतेति—अमृतपरिप्लुतभेषजायमानैः सुधासिक्तौषधवदाचरद्भिः । तत्र निमित्तं—प्रणयविरोधसितासितैः प्रणयकलहेन शबलैः नातिकटुभिश्च । दूतिकानाम् । वचोभिः । अनुदिनं दिने दिने । इदमादिमं अयमादिमो यस्य तम् । प्रमोदम् । सः कृष्णश्च । अभजत । ता देव्यश्च अभजन्त इति वचनविपरिणामेनानुषङ्गः । प्रणयकलहे सति तदपनयनसमर्थवचनभङ्गीचतुराभिः दूतिकाभिस्संघटिताः स च [1] ताश्च विप्रलम्भनेन पुनःपुनर्नवीकृता रतिमन्वभूवन्नित्यर्थः ॥ ५३ ॥

निजपदपरिचारकाङ्क्षिणीभिः
कतिषु भवेषु समर्चिताङ्घ्रिपद्मः ।
प्रतिनिधिमभजत्प्रसाधिकावत्
प्रियपरिकर्मविधानतस्स तासाम् ॥ ५४ ॥

निजेति—सः कृष्णः । निजपदपरिचारकाङ्क्षिणीभिः स्वस्य चरणयोः परिचरणमिच्छन्तीभिर्देवीभिः । कतिषु भवेषु कियत्सु वा जन्मसु । समर्चिताङ्घ्रिपद्मस्सन् । प्रसाधिकावत् प्रसाधिकाभिः तुल्यं

[1] ताश्च प्रलम्भनेन - घ.

यथा तथा । तासां । प्रियपरिकर्मविधानतः अभिमतप्रसाधनसम्पादनात् । [1] प्रतिविधिं प्रतिविधानं जन्मान्तरकृततदर्चनऋणस्य निर्यातनम् । अभजत् । एवं कृष्णस्य तासु वशंवदत्वं कियज्जन्मकृततदर्चनपुण्यफलमिति न ज्ञायत इत्यर्थः ॥ ५४ ॥

निजसमुद्यसम्भवैर्निशायां
प्रणयपयोनिधिवीचिकाविसर्पैः ।
प्रणतिभिरिव विभ्रमैः प्रियाणां
बहुमतिभेदमवाप यादवेन्दुः ॥ ५५ ॥

**निजेति**—यादवानामाह्लादकत्वादिन्दुः कृष्णः । निशायां रात्र्यां । निजसमुदयसम्भवैः स्वस्य [2] तत्तज्जायागृह [3] गमनेन संजातैः । प्रणयपयोनिधिवीचिकाविसर्पैः रागसागरस्योर्मिप्रसरभूतैः । प्रियाणां । विभ्रमैः । प्रणतिभिः नमस्कारैरिव । बहुमतिभेदं बहुमानविशेषं । अवाप । समर्चनीयो ममेति प्रणतिविभ्रमैश्च बहुमानविशेषमवापेत्यर्थः । यथा [4] चन्द्रस्योदयविजृम्भितैः समुद्रतरङ्गैः प्रतिबिम्बालयैर्बहुविधं मतिभेदं तत्तत् प्रतिबिम्बगतमहत्त्वाल्पत्वदीर्घत्ववर्तुलत्वादिबुद्धिभेदं बहुरनेक इति बुद्धिभेदं वा आप्नोति [5] तद्वदित्यर्थः ॥ ५५ ॥

शरदुपगमशोधिता इवापः
तुहिनकरोदयनिर्मला इवाशाः ।
मुरभिदुपगमप्रशान्तखेदाः
प्रतिययुरुन्मनसस्तमायताक्ष्यः ॥ ५६ ॥

**शरदिति**—मुरभिदुपगमप्रशान्तखेदाः कृष्णसङ्गमेनापेतसकलदुःखाः । अत एव शरदुपगमशोधिताः शरदागमेन निर्मलीकृताः ।

---

[1] प्रतिनिधिं—च. [2] तत्तच्छय्या—च. [3] गमनेन जातैः—च. [4] ‘चन्द्रस्योदय’ इति पाठः स्यात्. [5] तद्वदिति भावः—च.

आप इव स्थिताः । तुहिनकरोदयेन निर्मलाः । आशा इव स्थिताः । आयताक्ष्यः । तं कृष्णं, स्वस्य शय्यागृहमागच्छन्तमिति भावः । उन्मनसः उत्कण्ठितचेतसस्सत्यः । प्रतिययुः प्रत्युज्जग्मुः ॥ ५६ ॥

**अमृतमयमिवोदधिं तमुच्चैः**
**अनुसखि लोचनशुक्तिभिः पिबन्त्यः ।**
**अवशनियतचित्तवृत्तिमेकां**
**अदधुरदृष्टपरस्परामवस्थाम् ॥ ५७ ॥**

**अमृतमयमिति**—अमृतमयं सुधारूपं उदधिमिव स्थितं । तं कृष्णं । अनुसखि सखीनां समीपे । लोचनशुक्तिभिः शुक्तिपात्रतुल्यैर्लोचनैः। पिबन्त्यस्सत्यः । अवशं यथा तथा नियता निबद्धा चित्तवृत्तिर्यस्यां तां । अदृष्टपरस्परां । एकां सर्वासामेकरूपां । अवस्थां तदीयलावण्यसुधापानेन प्रलयावस्थां । अदधुः दधति स्म । प्रलयस्सुखदुःखाद्यैर्गाढमिन्द्रियमूर्छितम् ॥ ५७ ॥

**स्मरजनकतनुः स्वदर्शिनीनां**
**ननु विरहस्सुदृशां निमेष एव ।**
**इति किल विगणय्य विश्वकर्ता**
**नियतमकल्पयदप्सरस्त्वमासाम् ॥ ५८ ॥**

**स्मरेति**—स्मरस्य जनकं तनुर्यस्य स तथोक्तः, अनेन स्मरादप्यधिकसौन्दर्यवानिति यावत् । विश्वस्य कर्ता कृष्णः । स्वदर्शिनीनां आदरेण स्वात्मानं पश्यन्तीनां । सुदृशां । निमेष एव ननु विरह इति । विगणय्य मत्वा । नियतं ध्रुवं । आसां । अप्सरस्त्वं । अकल्पयत् अकृत किल । अनप्सरसामीदृशं रूपं न सम्भवतीति तासां मानुषेण रूपेण अप्सरस्त्वसृष्टिरुत्प्रेक्षिता । तत्र निमेषरूपनिजदर्शनाविघ्नाकलनं हेतु-

तयोत्प्रेक्षितं विगणय्येति । तेन चाप्सरस्त्वस्य दृष्टेर्निमेषविघ्ननिवारणार्थेति फलोत्प्रेक्षणमपि व्यञ्जितम् । अप्सरसां हि नास्ति निमेषः । स्मरजनक-तनुरित्यत्र स्त्रीलिङ्गस्तनुशब्दश्चेत् स्मरजनिकातनुरिति स्यात् । 'न कोपधायाः' (पा. सू. ६-३-३७) इति पुंवद्भावप्रतिषेधात् । अतस्तनु-श्शब्दोऽयं [1]सकारान्तो द्रष्टव्यः । [2]सर्वानन्देन 'तनुषे तनुषे कम्' इति (वासव. २७२ पृ.) वासवदत्तामुदाहृत्य सकारान्तोऽप्ययं देहवाचीति समर्थितम् । (द्वितीयकाण्डे टी. स. ३३१ पृष्ठे) अयं च उसन्तत्वात् 'द्व्यच्कमसिसुन्नन्तम्' (नामलि. लिङ्गादि. श्लो. २४) इत्यमर[3]कोशानु-रोधेन नपुंसकलिङ्ग इति न तद्दोषापत्तिः । यद्वा—लोके कुतश्चित् कस्य-चित् श्रैष्ठ्ये विवक्षिते तस्यायं पितेति निरूढव्यवहारात् स्मरस्य जनकः पिता स्मरातिशायिनी तनुरस्येति योज्यम् । तत्र पितृवाचिनो जनक-शब्दस्य [4]पुंलिङ्गत्वात्तद्दोषावकाशः । नन्वित्यवधारणे । विरहान्तरव्यव-च्छेददार्ढ्यार्थत्वादेवकारेण न पौनरुक्त्यापत्तिः । किलेति परकृते 'इति किल पिता अब्रवीत्' इतिवत् ॥ ५८ ॥

**अनुचरबहुमानमाप्तुकामैः**
**अवसरविद्भिरनुस्मृतात्मरक्षैः ।**
**अनुदिनमुपनीतमादितेयैः**
**अमृतमपाययत प्रियाः प्रतीतः ॥ ५९ ॥**

**अनुचरेति**—अनुचरबहुमानं स्वयं भगवतो अनुचरा इति गौरवं । आप्तुकामैः । अवसरविद्भिः तत्तदनुचरप्रकारोचितसमयविद्भिः ।

---

[1] अत एव प्रौढमनोरमायामप्युणादौ "तनुः शरीरम् । 'तनुषे तनुषेऽनङ्गम्' इति सुबन्धुः । 'स्यात्तनुस्तनुषा सार्धं धनुषा च धनुं विदुः' इति द्विरूपेषु विश्वः" इत्युक्तं दृश्यते. [2] अमरकोशटीकासर्वस्वकृदयम् । मुद्रितकोशे त्वयं वन्द्यघटीयस्सर्वानन्द इति नाम्ना निर्दिश्यते. [3] कोशानुसारेण—च. [4] 'पुंलिङ्गत्वान्न तद्दोषावकाशः' इति पाठेनात्र भाव्यम्.

अनुस्मृता अनुसंहिता आत्मरक्षा स्वेषां भगवता कृता करिष्यमाणा च रक्षा यैस्तैः । आदितेयैः । अनुदिनं । उपनीतं । अमृतं । प्रतीतः सादरस्सन् । प्रियाः । अपाययत पाययते स्म । 'णिचश्च' (पा. सू. १-३-७४) इति कर्त्रभिप्राये आत्मनेपदम् । [1] दुहादित्वाद्विकर्मकता । "प्रतीतस्सादरे ज्ञाते" इति विश्वः ॥ ५९ ॥

**प्रियवचनशतैरुदारवादी**
**रहसि मनश्श्रुतिरञ्जकैर्विचित्रैः ।**
**मुखकमलमधूपमैः प्रकामं**
**मदमुदिता इव मानिनीरकार्षीत् ॥ ६० ॥**

**प्रियेति**—उदारं दक्षिणं यथा तथा वदितुं शीलं अस्येति उदारवादी सरलवचनः कृष्णः । मानिनीः मानं प्रियविषयरत्यवस्थाविशेषः—

"अङ्कुरपल्लवकलिकाप्रसूनफलभोगभागियं क्रमशः ।
प्रेमा मानः स्नेहः प्रणयो रागोऽनुराग इत्युक्ताः ॥
(स्थायिभावनिरूपणावसरे आ. सु. ४३ पृ.)

इति रसार्णववचनात् । कोपविशेषो वा—

" स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये "

इति दशरूपकवचनात् (दश. ४-५९) तद्वतीर्देवीः । रहसि । मनसश्श्रुतीनां च रञ्जकैः । विचित्रैः बहुविधैः । मुखकमलमधूपमैः कमलतुल्यस्य मुखस्य मधुस्थानीयैः । प्रियवचनानां शतैः । मदमुदिता इव [2] आस्वादितावकृतेन मदनेन हृष्टा इव । अकार्षीत् करोति स्म ॥६०॥

---

[1] 'अकथितं च' (पा. सू. १-४-५१) इति सूत्रे दुहादौ पिबतेरपरिगणनात्तस्य चात्र ण्यन्तस्य दर्शनात् गत्यादीत्यस्य स्थाने लेखकप्रमादेन दुहादीति लिखितं स्यात् । 'गतिबुद्धि' (पा. सू. १-४-५२) इति सूत्रेण हि प्रत्यवसानार्थतया ण्यन्तस्य पिबतेः द्विकर्मकत्वं बोध्यते । [2] 'आस्वादजनितेन मदेन' इत्यत्र पाठः स्यात्.

अतिशयितगुणैः प्रियोपभोगात्
वसनविभूषणमालिकादिभिस्ताः ।
मुदमधिकतमां दधुस्तरुण्यः
प्रणयरसो हि रसप्रकर्षहेतुः ॥ ६१ ॥

**अतिशयितेति**—ताः तरुण्यः। प्रियोपभोगात् । अतिशयितः सञ्जातातिशयो गुण [1]आदरणत्वलक्षणो येषां तैः । वसन[2]विभूषणमालिकादिभिः। अधिकतमां । मुदं । दधुः धारयामासुः । ननु वसन[3]माल्याद्यनुपभुक्तमेव श्लाघ्यं तत्राह—प्रणयेति । प्रणयरसः—नायके [4]प्रणयरूपश्चित्तस्य द्रवीभावो हि । रसप्रकर्षस्य तदुपभुक्तवसनादिष्वास्वादस्य [5]हेतुर्जात इति भावः । हिशब्दः प्रसिद्धौ ॥ ६१ ॥

अभिलपनमनस्क्रियातिपाति-
न्यनुबुभुजे यदुपुङ्गवेन तासाम् ।
अतिशयमितरेतरं प्रयच्छ-
न्त्यभिनवयौवनसम्पदप्रकम्प्या ॥ ६२ ॥

**अभिलपनेति**—यदुपुङ्गवेन यदुश्रेष्ठेन कृष्णेन । अभिलपनमनस्क्रियातिपातिनी लोकोत्तरत्वात् [6]वाङ्मनसी अतीता । इतरेतरं अतिशयं प्रयच्छन्ती परस्परस्याप्युत्कर्षाय भवन्तीति भावः। अप्रकम्प्या प्रकम्पयितुमशक्या, [7]कालेनापि जयितुमशक्येति यावत्। तासां । अभिनवयौवनसम्पत् शोभा । अनुबुभुजे भुक्ता । कर्मणि लिट् ॥ ६२ ॥

---

1 'आदरणीयत्वलक्षणः' इत्यत्र पाठः स्यात् । 2 विभूषित—च. 3 माल्याद्युपभुक्तमश्लाघ्यं—घ. 4 प्रणयवृत्तिश्चित्तद्रवीभावः-घ. 5 'हेतुर्जायते' इति सुस्पष्टः पाठः. 6 'वाङ्मनसे' इति शुद्धपाठेनात्र भाव्यम्. 7 'कालेनाभिभवितुमशक्या' इत्यत्र पाठः स्यात्.

अजनिषत कुतो नु भागधेयात्
त्रिभुवनमङ्गलदीपिकाश्शुभाङ्ग्यः ।
यदुपतिसहधर्मचारिणीभिः
सुखमनघं भुवि याभिरन्वभावि ॥ ६३ ॥

**अजनिषतेति**—त्रिभुवनमङ्गलदीपिकाः त्रयाणां भुवनानां मङ्गलार्थदीपिका इव । शुभाङ्ग्यः शोभिताङ्ग्यो देव्यः । कुतो नु भागधेयादजानिषत कस्माद्वा भाग्याज्जाताः, तादृशं भाग्यं किमिति न जानामीति भावः । नुः प्रश्नार्थं द्योतयति । "नुः स्यात्प्रश्ने विकल्पार्थे" इति विश्वः । का अधिकृत्येदमुच्यते तत्राह—यदुपतीति । याभिः । यदुपतेस्सहधर्मचारिणीभिः पत्नीभिः । भुवि । अनघं दुःखरहितं । सुखं । अन्वभावि अनुभूतम् । दुःखासम्मिश्रं सुखं मोक्षादन्यत्र स्वर्गेऽपि न सम्भवति, किमुत भुवीति भावः ॥ ६३ ॥

अधिभुजगपति श्रियोपभुक्तं
युगपरिपाकविहारिणं युवानम् ।
नरपतिबहुमानतो नताङ्ग्यः
सुलभमिवान्वभवन् स्वतल्पभाजम् ॥ ६४ ॥

**अधिभुजगेति**—नताङ्ग्यः [1] स्तनभरादीषन्नम्रगात्र्यो देव्यः । अधिभुजगपति भुजगपतौ शेषतल्पे । श्रिया लक्ष्या । उपभुक्तं । युगपरिपाकविहारिणं युगान्ते विहरणशीलं । सुलभमिव मानुषीणामपि सुलभं प्राकृतमिव । स्वतल्पभाजं । युवानं । नरपतिबहुमानतः राजेति गौरवेण । अन्वभवन् । न तु तादृशदिव्यपुरुषबुद्ध्येति भावः ॥ ६४ ॥

[1] स्तनभराद्विनम्रगात्र्यः—घ,

**शकयुवतिकपोलपाण्डराभैः**
**शशिशकलैरिव नागवल्लिपत्रैः ।**
**स्मरसुभटयशोनिभैरनन्दत्**
**युवति[1]जनोपहृतैस्तदर्पितैस्ताः ॥ ६५ ॥**

**शकेति**—शकयुवतिकपोलपाण्डराभैः शकदेशस्य युवतीनां गण्डैरिव धवलप्रभैः। शशिशकलैः चन्द्रखण्डैरिव स्थितैः। स्मर एव सुभटस्तस्य यशोनिभैर्यशोभिरिव स्थितैः। युवतिजनोपहृतैः नागवल्लिपत्रैः चेट्यानी[2]तनागवल्लीदलैः। अनन्दत्। तदर्पितैः जगत्सृष्टिरक्षणादिकृता [3]कृष्णेनार्पितैः। नागवल्लीपत्रैः। ताः युवतयश्च। अनन्दन्निति वचनविपरिणामेनानुषङ्गः ॥ ६५ ॥

**जगदुपजननादिजातभूम्नः**
**क इव वधूजनमोहनो विहारः ।**
**कथमिव स कुतश्च कीर्तनीयः**
**प्रथितमनोभवतन्त्रपारदृश्वा ॥ ६६ ॥**

**जगदिति**—जगत उपजननमुत्पादनमादिर्येषां तैर्जगत्सृष्टिरक्षणादिभिः जातभूम्नः सम्पन्नमहिम्नः कृष्णस्य। वधूजनानां मोहनो मोहजननः। विहारः। क इव कियानित्यर्थः। किञ्च प्रथितस्य वात्स्यायननन्दिकेश्वरगोणीपुत्रादिमतभेदेन विस्तीर्णस्य, मनोभवतन्त्रस्य कामशास्त्रस्य पारदृश्वा। सः विहारः। कथमिव केन प्रकारेण। कीर्तनीयः। कुतश्च केन च कविना कीर्तनीयः। केनापि कविना केनापि प्रकारेण ज्ञातुं न शक्यत इत्यर्थः। सार्वविभक्तिकत्वात् कुत इति तृतीयार्थे तसिप्रत्ययः। तस्य कामविहारस्तावत् अवाङ्मनस-

---

1 जनौघ हृ—च. 2 'युवत्यानीत' इति पाठोऽत्र समुचित इति भाति. 3 कृष्णनार्पितैस्तैर्नाग—च.

गोचरः, सोऽपि तदीयजगत्सृष्ट्यादिकलाकौशलविचारे तस्यातिफल्गुरिति श्लोकार्थः ॥ ६६ ॥

**यतिभिरनुबुभूषितस्स ताभिः**
**यदुपतिरद्भुतरूपवेषशीलः ।**
**निरुपधिकरसामृतौघसिन्धुः**
**सततमपूर्वमपूर्वमन्वभावि ॥ ६७ ॥**

**यतिभिरिति**—यतिभिः जितेन्द्रियग्रामैर्योगिभिः । अनुबुभूषितः योगबलेनानुभवितुमिष्टः । अद्भुतरूपवेषशीलः—रूपं सौन्दर्यं, वेषो नैपथ्यं, शीलं स्वभावः, लोकोत्तरतया [1] अद्भुतानि यस्य स तथोक्तः । निरुपधिकरसस्य अकृत्रिमशृङ्गारस्यैव अमृतौघस्य सिन्धुरिव सिन्धुः, तत्प्रभवत्वात् । सः यदूनां पतिः । ताभिः प्रेयसीभिः । सततं । अपूर्वमपूर्वं नवं नवं यथा तथा । अन्वभावि अनुभूतः ॥ ६७ ॥

**हरिपरिचरणेन तोषितानां**
**हरिणदृशां विभवं विभावयन्तः ।**
**अपजहुरवाप्तसंयमाः स्वान्**
**अपरिमितानणिमादिसिद्धिभेदान् ॥ ६८ ॥**

**हरीति**—हरिकर्तृकेण परिचरणेन । तोषितानां । हरिणदृशां तस्य मृगलोचनानां । विभवं महिमानं । विभावयन्तः । अवाप्तसंयमाः—"धारणाध्यानं समाधित्रयं तत्तदैश्वर्यविशेषजनकं संयमः" [2]इति पातञ्जलशास्त्रपरिभाषणं, अवाप्तस्संयमो यैस्ते योगिनः । स्वान् आत्मीयान् ।

---

[1] 'अद्भुतानि तानि यस्य' इत्यत्र पाठश्चेत्सुस्पष्टः. [2] धारणाध्यानसमाधित्रयं एकविषयकं संयम इत्युच्यत इत्यर्थके 'त्रयमेकत्र संयमः' (पातञ्जलयोगसूत्रे ३-४) इति योगसूत्रे परिभाषितमिति भावः.

अपरिमितान् । अणिमादिसिद्धिभेदान् योगप्रभावलब्धानणिमाद्यैश्वर्य-विशेषान् । अपजहसुः । कृष्णकर्तृकपरिचर्यालाभस्य स्वसिद्धिभ्योऽत्यन्तातिशायित्वादिति भावः ॥ ६८ ॥

**सरित इव मृगीदृशस्तमेकं**
**महितगुणौघमहोदधिं भजन्त्यः ।**
**अबिभरुरनपायमैकरस्य**
**मुनिगणितश्च स एव मुक्तभोगः ॥ ६९ ॥**

**सरित इति**—महितगुणानां सद्गुणानां ओघास्समूहा एव ओघा जलप्रवाहाः तेषां महोदधिं महोदधिवदेकाश्रयं । तमेकं । सरित इव । भजन्त्यः सेवमानाः । मृगीदृशः । अनपायं स्थिरं । ऐकरस्यं तेन तुल्यभोगत्वं अन्योन्यानुरूपकृतं । अबिभरुः बिभ्रति स्म । नदी-समद्रपक्षे ऐकरस्यं एकभूतजलत्वं । स एव नदीसमुद्रन्यायेन तत्प्राप्ति-पूर्वकं तत्तुल्यभोगलाभ एव । मुनिगणितः मुनिना वेदव्यासेन 'भोग-मात्रसाम्यलिङ्गाच्च' (शा. सू. ४-४-२१) इत्यादिसूत्रेषु निर्दिष्टः । मुक्तभोगस्स इति विधेयप्राधान्येन पुल्लिङ्गता ॥ ६९ ॥

**अनुभवरसतो जगत्प्रसूतेः**
**अपचितसुप्तिसुषुप्तिसम्भवास्ताः ।**
**वितमसि विषये स्थिता इवासन्**
**विरतिविहीनविहारजागरेण ॥ ७० ॥**

**अनुभवेति**—जगतां प्रसूतेः उत्पत्तिस्थानस्य भगवतः । अनुभवरसतः भोगकौतुकेन । अपचितसुप्तिसुषुप्तिसम्भवाः क्षीणस्वप्न-सुषुप्त्यवस्थोत्पत्तयः । ताः । विरतिविहीनविहारजागरेण । वितमसि विषये देशे तमसः परस्तात् स्थिते परमपदे । स्थिता इवासन् । तत्र स्थिता नित्यप्रबुद्धा इति भावः ॥ ७० ॥

**प्रतिदिनमितरेतरानुगुण्यात्**
**प्रचितमयोगवियोगसम्प्रयोगैः ।**
**रसमधिकमवापुरायताक्ष्यः**
**प्रणयिनि शार्ङ्गिणि भागधेयभूम्ना ॥ ७१ ॥**

**प्रतिदिनमिति**—आयताक्ष्यः । प्रणयिनि प्रणयवति । शार्ङ्गिणि । इतरेतरानुगुण्यात् रूपशीलादिभिः परस्परानुरूप्यात् । प्रतिदिनं । प्रचितं । [1] प्रयोगवियोगसम्प्रयोगैदादाय देवहस्तसम्प्रयोगः, तदसम्प्रयोगैरित्येतैः । अधिकं अतिशयितं । रसं प्रीतिं । भागधेयभूम्ना भाग्यबाहुल्येन । अवापुः । भगवति निरतिशयप्रीतिः परभक्तिरूपा महाभाग्यलभ्येति भावः ॥७१ ॥

**रविरुचिरमणिप्रदीपकेषु**
**स्फुरदसितागुरुधूमधूपितेषु ।**
**सह [2] युवतिगणैः क्षणोपमेयां**
**अनयत वासगृहेषु वासतेयीम् ॥ ७२ ॥**

**रवीति**—रविरिव रुचिरो मणिप्रदीपो येषु । शैषिकः कप्प्रत्ययः । स्फुरद्भिरुद्गच्छद्भिरसितागुरुधूमैर्धूपितेषु वासितेषु । वासगृहेषु । युवतिगणैस्सह । क्षणोपमेयां । वासतेयीं रात्रिं । अनयत् अतिवाहयामास । कृष्णः कर्ता अध्याहार्यः ॥ ७२ ॥

**[3] अनुपाहितवधूजनस्य रक्षां**
**नियमयतो निजलीलया जगन्ति ।**
**निगमपथनिदर्शनीयमासीत्**
**प्रणतजनेषु परस्य पारतन्त्र्यम् ॥ ७३ ॥**

---

[1] अत्र "अयोगावियोगसंप्रयोगैः—आदावयोगः, संयोगोत्तरकालिकः कदाचिद्विरहो वियोगः, ततस्संयोगः संप्रयोगः, इत्येतैः" इत्यर्थकेन व्याख्याग्रन्थेनात्र भाव्यमिति भाति

[2] युवतिजनैः—च. [3] व्याख्यारहितं एतच्छ्लोकमात्रं घ-कोशे सरस्वतीभाण्डागारीयमूलकोशे च लिखितं दृश्यते । दृश्यमानव्याख्यातमात्रयोः च-छ-कोशयोरपि एतच्छ्लोकव्याख्या न दृश्यते.

**पुलकितवपुषां सवेपथूनां**
**घनरसभावितघर्मबिन्दुभाजाम् ।**
**श्लथमिव सुदृशाममुष्टिमेयं**
**चिकुरमगुम्भयदद्भुतं चिरेण ॥ ७४ ॥**

**पुलकितेति**—पुलकितवपुषां चिकुरबन्धनार्थं [1] निजस्पर्शनार्थं निजस्पर्शेन सञ्जातपुलकशरीराणां । सवेपथूनां सकम्पनानां । घनरसभावितघर्मबिन्दुभाजां गाढानुरागोत्पादितान् स्वेदबिन्दून् प्राप्तवतीनां । सुदृशां । अमुष्टिमेयं महत्त्वात् मुष्ट्याऽपि मातुमशक्यम् । श्लथमिव किञ्चित् श्लथं बद्धमिव स्थितम् । चिकुरं । चिरेण लीलानुवृत्तिलोभकृतकालयापनेन । अगुम्भयत् विस्रस्य पुनर्गुम्भयति स्म ॥ ७४ ॥

**स्ववधूरवधूतभौमभावाः**
**स्वदमानास्स्वयमात्मनैव तृप्तः ।**
**अनुभूय न तृप्यति स्म नाथः**
**तमपि प्रेमविलीनचेतसस्ताः ॥ ७५ ॥**

**स्ववधूरिति**—स्वयमात्मनैव तृप्तः विषयानन्दमनपेक्ष्य स्वात्मानन्देनैव स्वयं तृप्तः । नाथः । अवधूतो निराकृतो भौममभावो [2] भूमिभावत्वं याभिस्ताः, दिव्ययुवतीरिव स्थिताः । स्वदमानाः । स्ववधूः । अनुभूय । न तृप्यति स्म नित्यतृप्तोऽपि तदनुभवेन न तृप्यति स्म, तासां सौभाग्यातिशयात् । तमपि । प्रेम्णा विलीनचेतसः द्रुतचित्ताः । ताः । अनुभूय, न तृप्यन्ति स्मेति वचनविपरिणामेनानुषङ्गः ॥ ७५ ॥

---

1 ‘निजस्पर्शनार्थं’ इतीदमत्राधिकमिति भाति. 2 ‘भूमिभवत्वं’ इति चेत्सुस्फुटम्.

चपलप्रतिकूलतीक्ष्णरूक्षाः
स्त्रिय इत्यागमिकैर्निदर्शितार्थः ।
प्रथितो यदुवीरवल्लभाभिः
परिवादोऽयमपाकृतः पृथिव्याम् ॥ ७६ ॥

**चपलेति**—स्त्रियश्चपलाः अविमृश्यकारिण्यः, प्रतिकूलाः विरुद्धाः, तीक्ष्णाः कोपनाः, रूक्षाः नीरसाश्च । इति । आगमिकैः पुराणाद्यागमविद्भिः, तद्वेदिभिः । निदर्शितार्थः उपाहृतविषयः, उपाख्यानविशेषेषु चापलादिदोषविषये तत्तद्विशेषोदाहरणेन प्रतिपादितः । अत एव प्रथितः प्रसिद्धः । अयं लोकेऽप्यनुभूतः । परिवादः । पृथिव्यां । यदुवीरस्य वल्लभाभिः । अपाकृतः । तावतीषु स्त्रीषु न काऽप्युक्तदोषाणामेकेनापि श्लिष्टाऽभूदिति भावः ॥ ७६ ॥

[1] शरणागतसर्वपापमोक्षे
कृतसङ्कल्पमिहानुभूय कृष्णम् ।
परितोऽपि तथाविधानुभूतिः
स्मरलब्धा प्रतिलम्भिता प्रियाभिः ॥ ७७ ॥

अनघामनपायभक्तिरूपां
अनुभूतिं यदुवीरवल्लभानाम् ।
अनुकर्तुमपि प्रवर्तमानैः
अवशैरेव समाहितैरभावि ॥ ७८ ॥

**अनघामिति**—अनघां आनन्दरूपत्वात् हृद्यां । अनपायभक्तिरूपां निरतिशयमहनीयप्रीतिरूपां स्थिरभक्त्यात्मिकां । यदुवीरवल्लभानां । अनुभूतिं यदुवीरविषयां । अनुकर्तुम् । प्रवर्तमानैः नटैरपि ।

---

[1] अयं श्लोकः मुद्रितलिखितमूलकोशयोर्दृश्यते । व्याख्याकोशेषु त्वव्याकृतोऽपि । सव्याख्ये घ-कोशे च मूलमात्रमिदं दृश्यते.

अविशेष[1]मथनमात्रपरत्वेन नाट्यरसास्वादनेच्छारहितैरप्यनायत्तैरेव। समाहितैः भगवति समाहितचित्तैः। अभावि भूतम्। सर्वत्र नाट्यरसेषु तत्तदनुभवाभिनयमुखेन नटैरभिनीयमानेषु [2]प्रेक्षाकारिणामेव सहृदयानामभिनीयमानतत्तद्रसाभिव्यक्तिर्भवति, न तु नटानाम्। तेषां धनमात्रपरत्वेन नीरसहृदयत्वादिति वस्तुगतिः। अत एव रसस्सामाजिकाश्रय उच्यते। इह तु तथाविधानां नटानामप्यभिनियमानभगवदनुभूत्यभिव्यक्तिर्जातेति तदनु[3]भूतिविषयभगवत्सौन्दर्योत्कर्षमहिमा व्यज्यते ॥७८॥

उदधौ बहवो रमा बभूवुः
यदि [4] वैकैव गृहीतनैकरूपा।
इति नाम विमर्शमादधानाः
दयिताः प्रेक्ष्य ननन्द देववन्द्यः ॥ ७९ ॥

**उदधाविति**—उदधौ। बहवः। रमाः। बभूवुः। यदि वा अथवा। उदधौ उत्पन्ना। एकैव रमा। गृहीतनैकरूपा। इति नाम इत्थं सर्वजनसिद्धं। विमर्शं संशयं। आदधानाः। दयिताः। प्रेक्ष्य। देवानां वन्द्यः कृष्णः। भृशं। ननन्द जहर्ष ॥ ७९ ॥

[5] अजितस्य विशालतुङ्गभूम्ना
भुजमध्येन पयोधरैश्च तासाम्।
इतरेतरसंवृतत्वमासीत्
परिरम्भे परितो मिथस्समत्वम् ॥ ८० ॥

---

[1] 'नटनमात्रपरत्वेन' इति 'अभिनयमात्रपरत्वेन' इति वाऽत्र पाठः स्यात्.
[2] 'प्रेक्षकाणामेव' इति चेत्स्फुटः पाठः. [3] भूत–घ. [4] वा सैक–घ. [5] श्लोकोऽयं मूलमात्रलिखितमुद्रितकोशेषु दृश्यते। व्याख्याकोशेषु त्वव्याकृतः। सव्याख्ये घ-कोशेऽपि मूलमात्रमिदं दृश्यते.

**परिहासकुतूहली प्रियाणां**
**विहितद्यूतविहारकौतुकानाम् ।**
**उभयत्र जयं जगाद पृष्टः**
**कितवस्थेयपदे निवेशितस्सन् ॥ ८१ ॥**

**परिहासेति**—परिहासेषु नर्मकर्मसु कुतूहली कृष्णः । विहितं [1]स्वेन वाग्वादितं द्यूतविहारे कौतुकं यासां तासां, स्वप्रोत्साहनेन द्यूतविहारप्रयुक्तानां । प्रियाणाम् । कितवस्थेयपदे कितवानां द्यूत-कराणां, [2]स्थेयः जयपराजयविवादानिर्णेता मध्यस्थः, [3]तस्मिन् स्थाने। ताभिर्निवेशितस्सन् । पृष्टः काले कया जितामिति पृष्टः । उभयत्र जयं जगाद । जयकलहेन परिहासमनुवर्तयितुमिति भावः ॥ ८१ ॥

**स्वयमादिकविः प्रकल्पिताभिः**
**प्रणयोल्लङ्घनरौक्ष्यमुत्तितीर्षुः ।**
**प्रहसन् बहुशः प्रहेलिकाभिः**
**मतिमौढ्यं विदधे मनस्विनीनाम् ॥ ८२ ॥**

**स्वयमिति**—आदिकविः सकलविद्यामूलकन्दत्वात् आद्यः कृष्णः । प्रणयस्योल्लङ्घनमतिक्रमणमपराधः तेन यद्रौक्ष्यं पारुष्यं तत् । उत्तितीर्षुः उत्तरितुमिच्छुस्सन् । स्वयं प्रकल्पिताभिः प्राचीन[4]प्रहेलि-कास्ता आकूता भवेयुरिति स्वेन तदानीं ग्रथिताभिः प्रहेलिकाभिः गूढसूक्तिभिः । [5]मनस्विनीनां प्रणयोल्लङ्घनात् मानग्रहेण दृढमनस्का-नाम् । मतिमौढ्यं । विदधे । मानग्रहं विस्मारयितुं प्रहेलिकानामर्थ-चिन्तनेन मतेर्मौढ्यं चकार ॥ ८२ ॥

---

[1] 'स्वेनैवोत्पादितं' इति पाठः स्यात्. [2] स्थेयो विवादपदनिर्णेतरि पुरोहिते' इति (१३१९ तमं पदं) विश्वकोशोऽत्र बोध्यः, [3] 'तस्य पदं स्थाने' इत्यत्र पाठः स्यात्. [4] अत्र 'प्रहेलिकास्ताभिर्ज्ञाता भवेयुरिति' इति पाठस्स्यात्. [5] अत्र 'बहुशः प्रहसन्' इति प्रतीकधारणेन भाव्यमिति भाति.

एकीभवद्भिरयुतैरपि मन्मथानां
यत्कान्तिबिन्दु[1]पृषताऽनुकृतिर्न शक्या ।
सम्प्रेक्ष्य तं यदुपतिं यमिनोऽपि नूनं
स्त्रीभावमेव मनसा बिभरांबभूवुः ॥ ८३ ॥

एकीभवद्भिरिति — एकीभवद्भिः एकमन्मथीभवद्भिः । मन्मथानां । अयुतैः बहुभिर्दशसहस्रैरपि । यस्य कान्तेर्यो बिन्दुः तस्यापि यः पृषतो बिन्दुस्तस्यानुकृतिः । कर्तुं न शक्या । अनेकायुतस्वसौन्दर्यैणैको मन्मथस्सम्पद्यते चेत् स यत्कान्तिबिन्दुकणिकासाम्यमपि नार्हतीत्यर्थः । तं । यदुपतिम् । सम्प्रेक्ष्य । यमिनोऽपि । तदुपभोगसिद्ध्यै स्त्रीभावं स्त्रीत्वमेव । मनसा । बिभरांबभूवुः बिभ्रति स्म, ऐच्छन्नित्यर्थः । 'भीह्रीभृहुवां श्लुवच्च' (पा. सू. ३–१–३९) इत्याम्प्रत्ययः । [2]यद्यपि शकि केवलो कर्मको भवतीति हरदत्तवचनात्; शकेरिह सकर्मकत्वे पप . . . धिकर्तुमित्यस्याकूतम् ॥ ८३ ॥

कृष्णानुभूतिविभवेन कृतार्थभावाः
तद्वल्लभास्त्रिदशमातृतया चकासुः ।
यत्पादपङ्कजपरागजुषां शशंसुः
जन्माङ्कुरं जगति गुल्मलतादिकानाम् ॥ ८४ ॥

कृष्णेति—कृष्णानुभूतिविभवेन कृष्णोपभोगसमृद्ध्या । कृतार्थभावाः परिपूर्णहृदयाः । तद्वल्लभाः । त्रिदशमातृतया जगत्पितुः

---

1 'पृषतोऽनु' इति सरस्वतीभाण्डागारीयमूलकोशे पाठः. 2 'विभाषा भावादिकर्मणोः' (पा. सू. ७–२–२७) इति सूत्रस्थपदमञ्जरीपरिशीलनायामत्र "यद्यपि शकिः केवलोऽकर्मकः, तथाऽपि तुमुन्नन्तवाच्यक्रियाविशेषणत्वेन सकर्मको भवतीति हरदत्तवचनात् शकेरिह सकर्मकत्वोपपत्तये कर्तुमित्यध्याहृतम्" इति शुद्धपाठेन भाव्यमिति भाति । एतादृशस्थले शकेः सकर्मकत्वाभ्युपगमे 'अयं योगश्शक्योऽवक्तुम्' इत्यादिकं महाभाष्यं प्रमाणमिति हरदत्ताशयः स्यात्.

परिग्रहत्वेन देवानामपि मातृतया । चकासुः गौरवेण [1] चकासते स्म । 'चकासृ दीप्तौ' (अदादि १०७४) इति धातोर्लिट् । यत्पादपङ्कजपरागजुषाम् । गुल्मलतादिकानां बृन्दावनगतस्तम्बवल्लीतरुप्रभृतीनाम् । जन्म । जगति । अद्भुतं दुर्लभमित्याश्चर्यं । शशंसुः [2] चन्द्रार्थाः

[3] "आसामहो चरणरेणुजुषामहं स्यां
बृन्दावने किमपि गुल्मलतौषधीनाम्" ।

(श्रीभागवते—१०-४७-६०)

इत्यादौ स्वयं तद्भावप्रार्थनादिना तत्परिगृहीतानां गौरवं किमुच्यत इति भावः ॥ ८४ ॥

**श्यामो बभूव किमसौ सुदृशां कटाक्षैः**
**श्यामास्तदन्वयवशादथवा तरुण्यः ।**
**ताभिः किमस्य ववृधे महिमा महीयान्**
**तासामनेन यदि वेति बुधैरशशङ्के ॥ ८५ ॥**

**श्याम इति**—असौ कृष्णः । सुदृशां । कटाक्षैः । श्यामो बभूव किमिति तदीयश्यामत्वे सुदृशां कटाक्षप्रभासंवलनं हेतुत्वेनोत्प्रेक्ष्यते । तथा तस्मिन्नविरलदृढलग्नास्तत्कटाक्षप्रभा इति तासां सदा तन्निरीक्षणे तृष्णौत्कट्यं द्योत्यते । अथवा । तदन्वयवशात् कृष्णसम्पर्कायत्ततया । तरुण्यः । श्यामाः । बभूवुरिति वचनविपरिणामेनानुषङ्गः । श्यामत्वमिह यौवनमध्यावस्थितिः । तच्च श्यामवर्णरूपतया अध्यवसितैकशब्दोपादानरूपयाऽतिशयोक्त्या तत्र च तदन्वये हेतुत्वेनोत्प्रेक्ष्यत इति, तेन तस्य सन्ततमविरलतत्परिरम्भपरता द्योत्यते । अस्य । महीयान् महिमा ।

---

1 'चकासति स्म' इति शुद्धपाठेनात्र भाव्यम्. 2 अत्र 'उद्धवाद्याः' इति पाठः स्यात् । अत एवात्रानुपदं 'आसामहो' इत्यादिकं श्रीभागवतदशमस्कन्धगतमुद्धववचनमुपात्तं दृश्यते. 3 'या दुस्त्यजं स्वजनमार्यपथं च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम्" इत्येतदुत्तरार्धं (श्रीभाग—१०-४७-६०) बोध्यम्.

ताभिः। किं। ववृधे। यदि वा अथवा। तासां महिमा। अनेन। किं। ववृधे। एतेनोभयेषां महिम्नि परस्परहेतुकत्वसम्भावनया तासां भगवत्परिग्रहात् सर्वथैव तत्तुल्यमहिमप्राप्तिर्जातेति व्यज्यते। इति उक्तप्रकारेण। बुधैः। शशङ्के शङ्कितम् ॥ ८५ ॥

**अग्राम्यमेव परिहासरसं वितेने**
**नाश्लीलमाह न मृषा न च मर्मभेदी।**
**धर्माविरुद्धविभवोचितकामकामः**
**स्त्रीणां वरेण बुभुजे वरदो वरस्त्रीः ॥ ८६ ॥**

**अग्राम्यमिति**—अग्राम्यं बह्वन्नबुभुक्षादिपरिहासो ग्राम्यः, अतथाभूतमेव। परिहासरसं। वितेने। नाश्लीलमाह व्रीडा [1]जुगुप्सादिव्यञ्जकमश्लीलं नोवाच। [2] आहेत्युवाचार्थे विभक्तिप्रतिरूपकमव्ययमिति न स्मशब्दापेक्षा। न मृषा न च मर्मभेदी—आहेति अनयोरपि वाक्ययोरनुषङ्गः। [3] मर्मभेदिरहस्यकुलदूषणाद्युद्धाटनम्। ग्राम्यादीनि शृङ्गारारम्भेषु प्रायो वैरस्यावहत्वाद्वर्जनीयानि। धर्माविरुद्धविभवोचितकामकामः देशतः कालतः स्वरूपतो वा धर्मस्याविरुद्धान् ऐश्वर्यानुरूपांश्च भोगान् कामयमानस्सन्। वरस्त्रीः। बुभुजे। स्त्रीणां [4]वरेण न तु स्वयं रागपारवश्येनेति भावः ॥ ८६ ॥

**ताराभिरिन्दुरिव भानुरिव प्रभाभिः**
**युक्तो वशाभिरिव वारणयूथनाथः।**
**विद्याभिरात्मविदिवाभ्यधिकं विरेजे**
**योगेश्वरो युवतिभिस्सह मोदमानः ॥ ८७ ॥**

**ताराभिरिति**—युवतिभिस्सह। मोदमानः हृष्यन्। योगेश्वरः योगानां ब्रह्मविद्यानामुपास्यतया शेषिभूतः कृष्णः। ताराभिः। युक्तः।

---

[1] जुगुप्सावैरस्या—च. [2] आहेत्यस्य लडन्ततया कथमत्र स्मशब्दयोगाभावात् भूतार्थप्रतिपत्तिरित्याशङ्क्याह—आहेत्यादि. [3] 'मर्मभेदः' इत्यत्र पाठः स्यात्. [4] वरेणेत्यनन्तरं 'वरदस्सन्' इत्यधिकेन भाव्यमिति भाति.

इन्दुरिव। प्रभाभिः ग्रीष्मे [1] प्रहृष्टाभिर्भाभिः। युक्तः। भानुरिव। वशाभिः करिणीभिः। युक्तः। वारणयूथनाथ इव। विद्याभिः उपनिषदुत्तमादि-विद्याभिर्युक्तः। आत्मविदिव च। अभ्यधिकं। विरेजे। 'ब्रह्मविदिव सौम्य ते मुखं भाति' (छा. उ. ४-१४-२) इति लिङ्गात् आत्मविदः स्वतश्शोभमानस्यैव विद्याभिश्शोभातिशय इति भावः॥ ८७॥

**पायं पायं प्रेयसः कान्तिमाध्वीं**
**माद्यन्तीभिर्मञ्जुलालापिनीभिः।**
**प्रत्येकोक्तिश्लाघनप्रीणिताभिः**
**प्रायो भोगाः पर्यवाह्यन्त ताभिः॥ ८८॥**

**पायं पायमिति**—प्रेयसः कान्तिमेव माध्वीमासवं। पायं पायं पीत्वा पीत्वा। आभीक्ष्ण्ये णमुल्। द्विर्भावश्च। माद्यन्तीभिः। मञ्जुलाला-पिनीभिः। प्रत्येकोक्तिश्लाघनप्रीणिताभिः पृथगुक्तिचमत्कारश्लाघनेन भगवता सन्तोषिताभिस्ताभिः। प्रायो भोगाः। पर्यवाह्यन्त परिवाहवन्तः कृताः [2] ता . . . . . . . . । . . . . . .
भास्वाभाग्वनेन परिपूर्णानां भोगानां तटाकाम्बुकल्पानां परिवाह इवासन्नित्युत्प्रेक्षा॥ ८८॥

**करणव्यपायसमये पुनर्भवं**
**विनिवर्त्य शाश्वतसुखं प्रदास्यता।**
**स्वपदानुभूतिरुदपादि तादृशी**
**सुदृशां स्वसम्मतिभृतां गदाभृता॥ ८९॥**

**करणेति**—स्वसम्मतिभृतां स्वस्मिन् संगतां मतिमिच्छां बिभ्रतीनां। सुदृशां। करणव्यपायसमये इन्द्रियाणामुत्क्रमणसमये अन्त्य-काले। पुनर्भवं विनिवर्त्य पुनर्जननमपास्य। शाश्वतसुखं अनपायं मुक्त-

---

[1] 'प्रकृष्टाभिः' इति पाठः स्यात्. [2] अत्र "भगवानेव ताभिरनुभूयमानानां भोगानां परिपूर्णतटाकाम्बुकल्पानां परिवाह इवासीदित्युत्प्रेक्षा" इत्यर्थकः पाठः स्यात्.

भाव्यं सुखं। प्रशास्थता। गताभूता। तादृशी मुक्तिसुखतुल्या। स्वपदा स्वविषया अनुभूतिः। उदपादि उत्पादिता। आसां देहपातानन्तरभाविनो मुक्तिसुखात् भगवदुपभोगसुख[1]सूनं ना सुखमित्यर्थः॥ ८९॥

तद्गतेन मनसा विवशानां
तन्मयीकृतधियामिव तासाम्।
अप्रलुप्तरहसामभजेतां
स्वप्नजागरदशे अविशेषम्॥९०॥

तद्गतेनेति—कृष्णगतेन। मनसा। विवशानां परवशानां। तेनैव पारवश्येन [2]तन्मयानां, तदात्मीकृतधियामिव स्थितानां। अप्रलुप्तरहसां अविच्छिन्नभोगगोष्ठीनां। तासां। स्वप्नजागरदशे। अविशेषमभजेतां। स्वप्नेऽपि तद्भोगस्यैवानुवृत्त्येति भावः। दशे अविशेषमिति [3]प्रगृह्यत्वात् प्रकृतिभावः॥ ९०॥

श्रियमनपायिनीं वसुमतीमिव दत्तकरां
सह महिषीगणेन विभुरेक इवानुभवन्।
यदुभिरनन्तताक्ष्र्यपृतनेशनिभैस्सहितो
निजपदमस्मरन्निह निवासमरोचयत॥ ९१॥

श्रियमिति—दत्तः करः राजग्राह्यो भागो यया तां। वसुमतीमिव। अनपायिनीं श्रियं स्थिरां सम्पदं। समुच्चयोपमया उभयमपि लभ्यते। महिषीगणेन सह। एकः समस्तराजमुख्य[4]भूतस्सन्नेव। अनुभवन्। अनन्तताक्ष्र्यपृतनेशनिभैः शेषगरुडविष्वक्सेनतुल्यैः। यदुभिस्सहितः। विभुः। निजं

---

[1] 'सुखमन्यूनं सुखमित्यर्थः' इत्यत्र पाठः स्यात्. [2] अत्र 'तन्मयानां' इत्यस्य स्थाने तन्मयीकृतधियां इति पाठः स्यात्. [3] 'ईदूदेद्द्विवचनं प्रगृह्यं' (पा. सू. १-१-११) इति सूत्रेण दशे इत्यत्र एदन्तद्विवचनस्य प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यम्' (पा. सू. ६-१-१२५) इति सूत्रेण प्रकृतिभाव इति भावः. [4] भूतस्सन्निव' इत्यत्र पाठः स्यात्.

पदमस्मरन्। परमपद इव, इह निवासमरोचयत देवकार्येषु निर्वृत्तेष्वपि किञ्चित्कालं भूलोके निवासमेच्छत्। परमपदे वा भगवान् सञ्चारलीलासु दत्तहस्तां वसुमतीमिव नित्यावियुक्तां श्रियं नीलादिमहिषीगणेनापि सहानुभवति, शेषादिभिस्सहितश्चेत्युभयत्र गुणतौल्यम्। सह महिषीगणेनेति प्रकृतार्थे [1]कर्तृसाहित्यमर्थः। परमपदे [2]कर्मसाहित्यमिति विशेषः॥ ९१॥

**उपचितचित्रधर्ममुपशान्तविपक्षभयं**
**मुदितवधूजनस्स मुखरं निगमध्वनिभिः।**
**बहुविधरत्नशालि बहुमान्यसमग्रगुणं**
**वलयसमं भुजस्य वसुधावलयं बुभुजे॥ ९२॥**

**उपचितेति**—मुदितवधूजनः। सः। उपचितचित्रधर्मं सर्वत्रानुष्ठानात् प्रवृद्धश्रौतस्मार्तादिनानाविधधर्मं। उपशान्तवपिक्षभयं अपेतशत्रुभयं। निगमध्वनिभिर्मुखरं सर्वत्र प्रचरद्वेदघोषैश्शब्दायमानं। बहुविधरत्नशालि नानाविधोत्कृष्टवस्तुसमृद्धं। बहुमान्यसमग्रगुणं श्लाघनीयसम्पूर्णसस्यनिष्पत्त्यादिगुणं। भुजस्य। वलयसमं अनायासेन भरणात्। वसुधावलयं भूमण्डलं। बुभुजे॥ ९२॥

**अनितरजनलभ्यां प्रीतिमासेदुषीभिः**
**सुचिरमनुबभूवे [3] स्वर्गमोक्षातिशायी।**
**निरुपधिकरसाब्धिं [4] निर्विशन्तीभिराद्यः**
**कुलयुवतिभिरित्थं कोऽपि शृङ्गारभूमा॥ ९३॥**

**अनितरेति**—अनितरजनलभ्यां इतरजनैरल्पपुण्यैर्लब्धुमशक्यां। प्रीतिं हर्षं। आसेदुषीभिः। तत्र निमित्तं निरुपधिकरसाब्धिं निर्विशन्तीभिः अतिशयानन्दसागरं कृष्णमनुभुञ्जानाभिः। कुलयुवतिभिः। स्वर्गमोक्षाति-

---

[1] कर्तृसाहित्यमिति। महिषीगणेन सहितोऽनुभवतीत्यन्वयादिति भावः, [2] कर्मसाहित्यमिति। महिषीगणेन सहितां श्रियमित्यन्वयादिति भावः, [3] स्वर्गमोक्षादिदायी–झ. [4] निर्विशन्तीभिराद्यं झ.

शायी । आद्यः सर्वोत्तरः । कोऽपि अपरिच्छेद्यः । शृङ्गारभूमा शृङ्गाररसोत्कर्षः । इत्थं । सुचिरं । अनुबभूव ॥ ९३ ॥

सहजबलसमेतश्शक्रपूर्वैरजय्यः
समुदितविषमास्त्रस्तादृशानन्दहेतुः ।
अविदितरचनेन स्वेन पार्थाय गीतः
स्वयमजनि स कामः कोऽपि धर्माविरुद्धः ॥९४॥

सहजेति—सहजेन बलेन बलदेवेन समेतः । शक्रपूर्वैरजय्यः इन्द्रादिभिरपि जेतुमशक्यः । समुदितो विषमास्त्रः कामः प्रद्युम्नो येन स तथोक्तः । तादृशानन्दहेतुः तादृशस्य प्रसिद्धस्यानन्दस्य हेतुः । कामसाधारणानीमानि विशेषणानि, कामपक्षे–निसर्गबलेन समेतः, येन लोकान् जयति । इन्द्रादिभिरजय्यः, तेषामपि स्त्रीजितत्वात् । समुत् सन्तोषयुतः । इतानि प्राप्तानि विषमाण्ययुग्मसङ्ख्यान्यस्त्राणि अनेनेति तथोक्तः । तादृशस्य रत्यानन्दस्य हेतुरिति । एवंभूतः सः कृष्णः । स्वयं । कोऽपि प्रसिद्धकामातिशायी । कामः । अजनि जातः । प्रसिद्धकामादतिशय एवोच्यते— धर्माविरुद्ध इति । प्रसिद्धस्तून्मादवर्तितामपि करोतीति धर्मविरुद्धः । अस्य धर्माविरुद्धकामरूपत्वे प्रमाणमुच्यते—अविदितरचनेन स्वेन पार्थाय गीत इति । अतिगुह्यत्वात् इतरजनाविज्ञातं रचनं गीताग्रथनमस्य तेन । स्वेन । पार्थाय "धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ" (गी. ७ ११) इति गीत इत्यर्थः ॥ ९४ ॥

स्वपदनलिनभाजां स्वर्गमोक्षौ यथार्हं
करणविगमकाले कल्पयिष्यन् क्रमेण ।
मधुरिपुरिह नूनं मन्दपुण्यैरलभ्यौ
समतनुत विहारैस्तावुभौ सम्प्रयुक्तौ ॥ ९५ ॥

स्वपदेति—स्वपदनलिनभाजां । क्रमेण कालपरिपाकेन । यथार्हं तत्तत्फलार्हानतिक्रमेण । करणविगमकाले इन्द्रियाणामुत्क्रमणकाले । स्वर्ग-

मोक्षौ। कल्पयिष्यन्। मधुरिपुः मुरारिः। मन्दपुण्यैः अल्पभाग्यैः। अलभ्यौ। तावुभौ स्वर्गमोक्षौ। इह। [1] विहारे स्वक्रीडाभिः। सम्प्रयुक्तौ मिलितौ। समतनुत [2] अतनोत्। नूनमित्युक्तार्थ[3]निश्चयकथनम् अन्यथा तद्विहार-मनुभवन्तीनां स्वर्गमोक्षातिशयानन्दलाभ इति भावः ॥ ९५ ॥

नारीदृष्ट्या नियमितधियो नाकनाथेश्वरत्वं
सम्भोगे च प्रवणमनसश्शाश्वतं ब्रह्मचर्यम्।
अत्रैकस्यां पुरि निवसतस्सर्वलोकाधिकत्वं
निध्यायन्तस्त्वरितमतरन् दुस्तरां तस्य मायाम् ॥९६॥

नारीति—नार्यो मानुषस्त्रियः, तासां दृष्ट्या। नियमितधियोऽपि। नाकनाथमिन्द्रं प्रत्यपीश्वरत्वं। संभोगे। प्रवणमनसः संसक्तहृदयस्य। शाश्वतं नित्यसिद्धं। ब्रह्मचर्यं। अत्र अस्यां। एकस्यां। पुरि द्वारकायां। निवसतः। सर्वलोकाधिकत्वं सर्वान् लोकानध्यारूढत्वं च। निध्यायन्तः पश्यन्तो ज्ञानिनः। तस्य। दुस्तरां। मायां। त्वरितमतरन्। स्त्रीणां वरेण तत्पार-वश्यमभिनयतोऽपि स्वाभाविकं सर्वेश्वरत्वमिति, उक्तहेतुनैव तासां भोगे प्रवणमनसः सर्वशरीरकस्य शरीरातिरिक्तशरीरपरिष्वङ्गाद्यभावात् भोगाविरोधि नित्यसिद्धं ब्रह्मचर्यमिति, अवताररूपेण द्वारकायां निवसतोऽपि स्वरूपेण सर्वगतत्वमिति च, नारीवश्यत्वाद्यविरोधेन [[4] सर्वेश्वरत्वाद्यत्तदात्मविदो मुक्तानाहुतवानित्यर्थः। अनेन तस्य नारीवश्यत्वादृष्ट्या लोकसामान्यतां मन्वाना मारिरित्युक्त भवति। भोगोऽपि तस्मात् स्खलितं ब्रह्मचर्यं प्रपञ्चेन तुर्यसर्गव्याख्यानेन समर्थितम्]' अधिकम्' (पा. सू. ५–२–७३) इति सूत्रेणाधिकशब्दोऽध्यारूढे निपातितः ॥ ९६ ॥

---

[1] 'विहारैः' इति पाठः स्यात्. [2] अकरोत्–च. छ. [3] 'निश्चये। कथमन्यथा' इत्यत्र पाठ स्यात्. [4] अत्र कुण्डलितग्रन्थस्थाने "सर्वेश्वरत्वादि यत्तदात्मविदो ज्ञात्वा मुक्ता अभूवन्नित्यर्थः। अनेन तस्य नारीवश्यत्वादिदृष्ट्या लोकसामान्यतां मन्वानोऽमतिरित्युक्तं भवति। भोगेऽपि तस्यास्खलितं ब्रह्मचर्यमिति प्रपञ्चेन तुर्यसर्गव्याख्याने (पादुका ४–६४) समर्थितम्" इति शुद्धपाठेन भाव्यमिति भाति॥

आसीदेवं [1]परिणतमधिद्वारकं द्वापरान्ते
व्यासप्रख्याविभजनभवद्वेदशाखोप[2]मानाम् ।
चिन्तातीतं यदुपतिमनःप्रीतिचिन्तामणीनां
एकं तासां भवरसभुजां [3]भाग्यमेकातपत्रम् ॥ ९७ ॥

आसीदिति—एवं उक्तप्रकारेण । अधिद्वारकं द्वारकायां । द्वापरान्ते द्वापरयुगावसाने, कलिद्वापरसन्धौ । व्यासप्रख्याविभजनभवद्वेदशाखोपमानां व्यासस्य बुद्ध्या यद्विभजनं तेन भवन्त्यो या वेदशाखास्तत्तुल्यानां [4]द्वापरान्तप्रभवं तं भवत्परत्वमित्यादिवेदशाखातौल्यं । यदुपतिमनः प्रीतिचिन्तामणीनां . . . समृद्धिहेतूनां । भवरसभुजां संसारसुखमनु[5]भवतां । तासां भगवन्महिषीणां । भाग्यं एकमसहयमातपत्रमस्येत्येकात[6]पत्रं . . . वैयधिकरण्येन निर्धारणे षष्ठीति भावः । भवरसभुजां मध्ये तासां भाग्यं एकं अखण्डमातपत्रमासीदित्यन्वयः ॥ ९७ ॥

परिपूर्तिं श्लोकेन कविर्निर्बध्नाति—

गुरुभिरनघचित्तैराहितोदारभूमा
सुरभितरसमेतत्सूनृतं वेङ्कटेशः ।
व्यतनुत यदुवीरप्रीतिमिच्छन् प्रभूतां
कविकथकमृगेन्द्रः क्षेमदं काव्यरत्नम् ॥ ९८ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयनाम्नि महाकाव्ये चतुर्विंशस्सर्गः.

समाप्तं चेदं महाकाव्यरत्नम्.

---

गुरुभिरिति—वेङ्कटेशः एतत्काव्यरत्नं उत्कृष्टं काव्यं व्यतनुतेति सम्बन्धः । “ [7]जातौ . . . . . . . ”

---

1 ‘परिणतिमति द्वारकां’ इति मुद्रितमूलकोशेऽपपाठः. 2 ‘मानं’ इति मुद्रितमूलकोशपाठः 3 “बाह्यमेका” इति मुद्रितमूलकोशपाठः. “4 द्वापरान्तप्रभवत्वभगवत्परत्वादिना वेदशाखातौल्यम् । यदुपतिमनःप्रीतिचिन्तामणीनां श्रीकृष्णमनःप्रीतिसमृद्धिहेतूनां” इत्यत्र शुद्धपाठः स्यात्. 5 ‘भवन्तीनां’ इत्यत्र शुद्धपाठेन भाव्यम्. 6 ‘पत्रमासीत् । यद्वा भवरसभुजामिति वैयधिकरण्येन’ इत्यत्र पाठः स्यात्. 7 ‘जातौ जातौ च यच्छ्रेष्ठं तद्रत्नमिति कथ्यते’ इत्यत्र पाठः स्यात्.

काव्यान्तरेभ्योऽस्य काव्यस्योत्कर्षः कथमिति चेत्, [1] प्रबन्धगौरवेण, नायकगौरवेण, शब्दार्थचमत्कारकथासन्दर्भसौभाग्यकथासत्यत्वरूपेण स्वतः प्रबन्धगौरवेण च तदुत्कर्ष इति व्यञ्जयितुं कविकाव्यविशेषणानि। तत्र कविकथकमृगेन्द्र इत्यनेन विद्योत्कर्षलक्षणं कवेर्गौरवं कथ्यते। कवयः काव्यकृतः, कथां वादजल्पादिरूपां कुर्वन्तीति कथका वावदूकाः तेषु [2] मृगश्रेष्ठां "सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः" इत्यत्राद्यपदेन मृगेन्द्रादिशब्दा अपि गृहीताः। यद्वा तेषां परिपन्थिभूतानां मृगेन्द्रवद्भयङ्कर इत्यर्थः। यदुवीरप्रीतिमिच्छन्निति काव्यनिर्माणे स्वोद्देश्यप्रयोजनकथनेन 'काव्यं यशसेऽर्थकृते' (काव्यप्रकाशे)इत्याद्युक्ततुच्छफलानभिलषिततया भगवदेकनिष्ठत्वलक्षणं कवेर्गौरवं द्योत्यते। अनेनैव यदुवीरस्य नायकत्वप्रकटनेन नायकगौरवमपि सिद्धम्। यदुशब्देन कूटस्थवाचिना तद्वंश्या लक्ष्यन्त इति [3] प्रागुपप . . . श्रेष्ठो भगवान् "वीरस्तु सुभटे श्रेष्ठ" [4] इति विश्वः। प्रागेव भगवत्परत्वात् तत्प्रीतिसिद्धेरित्याशङ्कयोक्तं—प्रभूतामिति। एवं प्रकटितस्य [5] स्वगारव- . . . धीनत्वोक्त्या तत्प्रकटनानौचित्यं परिहरात[6]—अनघचित्तैः प्रक्षीणसकलदोषान्तःकरणैः गुरुभिः आहितोदारभूमा आहितमहामहिमा। अथ शब्दार्थचमत्कारलक्षणं प्रभावं व्यनक्ति—सुरभितरसामिति। यथा सुरभयश्चम्पकादयोऽनातिसान्निकृष्टा अपि सौरभेणाह्लादकाः, [7] प्रविश्य कलनात् प्रागपि तत्तद्रसोचितवर्णसमासरचनासंघटनेनाह्लादकाः कृता इति रसानां सुरभितत्वमुक्तम्। यदाहुः "अविदितगुणाऽपि सत्कविफणितिः कर्णे वमति मधुधाराम्"

---

[1] 'प्रबन्धगौरवेण' इत्यत्र शुद्धपाठः स्यात्. [2] अत्र 'मृगेन्द्रः श्रेष्ठः' इति पाठः स्यात् [3] 'प्रागुपपादितम्। यदुवीरः यदुश्रेष्ठः' इत्यत्र पाठः स्यात्. [4] 'इति यादवः' इति चकोशेऽपपाठः, वैजयन्त्यामदर्शनाद्विश्वकोशे दर्शनाच्च. [5] 'स्वगौरवस्य गुर्वधीनत्वोक्त्या' इत्यत्र पाठः स्यात्. [6] 'परिहरति—गुरुभिरित्यादिना' इत्यत्र पाठः स्यात्. [7] 'तथा रसाः प्रविश्य' इत्यत्र पाठः स्यात्.

(वासवदत्तायां श्लो ११) इति। अनेन रसप्रधानता अर्थचमत्कारः, तदुचितवर्णादिसङ्घटना शब्दचमत्कारश्चेति तदुभयपौष्कल्यं दर्शितम्। कथासन्दर्भसौभाग्यं कथासत्यत्वं चाह—सूनृतमिति। श्रोतॄणां प्रियं सत्यं चेत्यर्थः। "सूनृतं प्रियसत्ये स्यात्" इति शब्दार्णवः। एतत्काव्यपरिशीलनकृतं फलमाह—क्षेमदमिति। क्षेमः अभ्युदयनिश्रेयसरूपमङ्गलम् ॥ ९८ ॥

इति श्रीमद्भरद्वाजकुलतिलक-विश्वजिद्याजि-श्रीरङ्गराजाध्वरिवरसूनुना अप्पय्यदीक्षितेन विरचिते श्रीयादवाभ्युदयव्याख्याने चतुर्विंशस्सर्गः.

समाप्ता चेयं व्याख्या.

———

# यादवाभ्युदयस्थैकोनविंशादि चतुर्विंशसर्गान्तभागगतश्लोकपादानाम-कारादिक्रमेण सूचनी.

## ख



## ग

## श

WD 665—GBPM—500—2-7-1949.

मैसूरु राजकीय प्राच्यविद्याविमर्शनालये परिष्कृत्य देवनागराक्षरैः संमुद्र्य प्रकाशिताः

# संस्कृतग्रन्थाः

| | ग्रन्थनाम | | मूल्यम् रू. | आ. |
|---|---|---|---|---|
| * 1 | आपस्तम्बगृह्यसूत्रम्, सुदर्शनार्यप्रणीततात्पर्यदर्शनाख्यभाष्यसहितम्. | .... | 1 | 12 |
| * 2 | आपस्तम्बयज्ञपरिभाषासूत्रम्, हरदत्तकपर्दिस्वामिभाष्याभ्यां सहितम्. | .... | 1 | 0 |
| * 3 | माधवीयधातुवृत्तिः (अदादि-दिवादि-जुहोत्यादयः) | .... | 2 | 0 |
| * 4 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा, भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, प्रथमसंपुटम्. | .... | 2 | 8 |
| * 5 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा श्रीभट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, द्वितीयसंपुटम्. | .... | 2 | 8 |
| * 6 | दक्षिणामूर्तिस्तोत्रम्, सुरेश्वराचार्यटीकासहितम् | .. | 1 | 4 |
| * 7 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, तृतीयसंपुटम्. | . | 3 | 0 |
| * 8 | श्रीभगवद्गीता, श्रीशङ्कराचार्यभाष्यसहिता | .. | 2 | 12 |
| * 9 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्ययुता च, चतुर्थसंपुटम्. | .. | 3 | 0 |
| *10 | मण्डलब्राह्मणोपनिषत् .... | .. | 0 | 6 |
| *11 | सौन्दर्यलहरी .... .... | .. | 1 | 0 |

* एतच्चिह्नाङ्किता ग्रन्थाः संप्रति विक्रयायात्र नोपलभ्यन्ते.

| ग्रन्थनाम | | मूल्यम्—रु. | आ. |
|---|---|---|---|
| *12 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, पञ्चमसंपुटम्. .... | 3 | 0 |
| *13 | ” ” दशमसंपुटम् .... | 3 | 0 |
| *14 | ” ” एकादशसंपुटम् .... | 3 | 0 |
| *15 | आपस्तम्बधर्मसूत्रं हरदत्ताचार्यप्रणीतोज्ज्वलाख्यवृत्तियुतम्. .... | 1 | 12 |
| *16 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, अष्टमं संपुटम्. ... | 3 | 0 |
| *17 | ” ” नवमं संपुटम् .... | 2 | 4 |
| *18 | ” ” द्वादशं संपुटम् .... | 1 | 12 |
| *19 | श्रीशङ्कराचार्यप्रबन्धावली, प्रथमसंपुटम्, (श्रीविष्णुसहस्रनाम–सनत्सुजातीयभाष्यम्). .... | 1 | 4 |
| 20 | ” द्वितीयसंपुटम्, (अपरोक्षानुभूतिः, शतश्लोकी, हरिस्तुतिः, दशश्लोकी च). ... | 1 | 4 |
| *21 | ” तृतीयसंपुटम्, (उपदेशसाहस्री गद्यपद्योभयात्मिका, रामतीर्थव्याख्यायुता). .... | 2 | 0 |
| *22 | ” चतुर्थसंपुटम्, (आत्मबोध विवेकचूडामणि–वाक्यवृत्ति–स्वात्मनिरूपण–योगतारावली–सर्ववेदान्तसिद्धान्तसारसंग्रहाः). .... | 1 | 0 |
| *23 | माधवीयधातुवृत्तिः भ्वादौ प्रथमसंपुटम् .... | 2 | 0 |
| *24 | ” ” द्वितीयसंपुटम् .... | 2 | 0 |
| *25 | गोत्रप्रवरनिबन्धकदम्बम् .... .... | 2 | 0 |
| *26 | तैत्तिरीयारण्यकम्, सस्वरचिह्नम्, भट्टभास्करीयभाष्यसहितम्, प्रथमसंपुटम् (1-4 प्रश्नाः). .... | 1 | 12 |
| *27 | तैत्तिरीयारण्यकम्, सस्वरचिह्नम्, भट्टभास्करीयभाष्यसहितम्, द्वितीयसंपुटम् (5–6 प्रश्नौ). ... | 1 | 0 |
| *28 | एकाग्निकाण्डः सस्वरचिह्नः, हरदत्तीयभाष्यसहितः .... | 1 | 4 |

| ग्रन्थनाम | | मूल्यम्—रू. | आ. |
|---|---|---|---|
| *29 | तैत्तिरीयारण्यकम्, सस्वरचिह्नं, भट्टभास्करीयभाष्यसहितं, तृतीयसंपुटम् (7-8 प्रश्नौ). | 1 | 0 |
| *30 | ब्रह्ममीमांसा, श्रीकण्ठभाष्यसहिता | 2 | 0 |
| *31 | माधवीयधातुवृत्तिः, स्वादिमारभ्य समग्रा | 2 | 0 |
| *32 | बोधायनगृह्यसूत्रम्, सपरिशिष्टम् (प्रथममुद्रणम्) | 2 | 4 |
| *33 | तैत्तिरीयप्रातिशाख्यम्, (वैदिकाभरणत्रिभाष्यरत्नाख्यव्याख्याद्वययुतम्.) | 4 | 0 |
| *34 | बोधायनधर्मसूत्रम्, गोविन्दस्वामिविवरणसमेतम्. | 3 | 0 |
| *35 | भाट्टदीपिका, प्रथमसंपुटम् (तृतीयाध्याये तुरीयपादान्ता). | 3 | 0 |
| *36 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम् भट्टभास्करीयभाष्ययुतम्. | 3 | 8 |
| *37 | कौटलीयमर्थशास्त्रम् (प्रथममुद्रणम्) | 3 | 0 |
| *38 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीय भाष्यसहितम् (तृतीयाष्टके 1-7 प्रश्नाः). | 3 | 8 |
| *39 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशसहितम्, I सं. | 3 | 0 |
| *40 | भाट्टदीपिका, द्वितीयसंपुटम्, (तृतीयाध्याये पञ्चमपादप्रभृति सप्तमाध्यायान्तम्). | 3 | 0 |
| 41 | खादिरगृह्यसूत्रम्, रुद्रस्कन्दीयवृत्तिसहितम् | 1 | 0 |
| *42 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीयभाष्ययुतम् (तृतीयाष्टके 8-12 प्रश्नाः). | 2 | 4 |
| 43 | स्मृतिचन्द्रिका याज्ञिकदेवणभट्टकृता, संस्कारकाण्डः | 1 | 8 |
| 44 | ,, ,, आह्निककाण्डः | 2 | 8 |
| 45 | स्मृतिचन्द्रिका याज्ञिकदेवणभट्टकृता, व्यवहारकाण्डे प्रथमसंपुटम्. | 2 | 0 |
| *46 | भाट्टदीपिका, तृतीयसंपुटम् (अष्टमाध्यायप्रभृति दशमे 4 पादान्ता). | 2 | 8 |

* एतच्चिह्नाङ्किता ग्रन्था: संप्रति विक्रयायात्र नोपलभ्यन्ते.

| ग्रन्थनाम | | मूल्यम्—रू. | आ. |
|---|---|---|---|
| *47 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, II सं. समन्वयाधिकरणप्रभृति आकाशाधिकरणान्तम्. .... | 3 | 0 |
| 48 | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, व्यवहारकाण्डे द्वितीयसंपुटम्. | 3 | 0 |
| *49 | भाट्टदीपिका, खण्डदेवकृता, चतुर्थसंपुटम् (दशमाध्याये पञ्चमपादप्रभृति समग्रा). | 3 | 0 |
| *50 | गौतमधर्मसूत्रम्, मस्करिभाष्ययुतम् ... | 3 | 8 |
| *51 | अलङ्कारमणिहारः, प्रथमसंपुटम् (समासोक्त्यलङ्कारान्तः). | 3 | 0 |
| 52 | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, श्राद्धकाण्डः | 3 | 4 |
| 53 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, III सं. (प्राणाधिकरणप्रभृति प्रथमे द्वितीयपादान्तम्). | 4 | 0 |
| *54 | कौटलीयमर्थशास्त्रम् (द्वितीयमुद्रणम्) | 3 | 0 |
| *55 | बोधायनगृह्यसूत्रम्, सपरिशिष्टम् ,, | 2 | 4 |
| 56 | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, आशौचकाण्डः. | 1 | 8 |
| 57 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीयकाञ्चित्कसायणभाष्याभ्यां युतम्, द्वितीयाष्टकम्. | 3 | 8 |
| 58 | अलङ्कारमणिहारः, द्वितीयसंपुटम् (परिकरालङ्कारप्रभृति मालादीपकालङ्कारान्तः). | 3 | 8 |
| 59 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, IV सं. (प्रथमाध्याये तृतीयपादे आदितः अपशूद्राधिकरणान्तम्. | | |
| *60 | काव्यप्रकाशः, मम्मटभट्टकृतः, माणिक्यचन्द्रकृतसङ्केताख्यटीकायुतः. | 3 | 8 |
| 61 | आयुर्वेदसूत्रम्, योगानन्दनाथभाष्यसहितम् | | |

| | ग्रन्थनाम | | मूल्यम्—रू. | आ. |
|---|---|---|---|---|
| 62 | अलंकारमणिहारः, तृतीयसंपुटम् (सारालङ्कारप्रभृतिहेत्वलङ्कारान्तः). | .... | 2 | 8 |
| 63 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम् I सं. (1–5 अध्यायाः). | .... | 2 | 0 |
| 64 | कौटलीयमर्थशास्त्रम्, (तृतीयमुद्रणम्) .... | .... | 3 | 0 |
| 65 | अर्थशास्त्रपदसूची प्रथमसंपुटम् .... | .... | 2 | 8 |
| 66 | ,, द्वितीयसंपुटम् ... | .... | 2 | 8 |
| 67 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम्, II सं. (6–10 अध्यायाः). | .... | 2 | 0 |
| 68 | अर्थशास्त्रपदसूची, तृतीयसंपुटम् .... | .... | 2 | 0 |
| 69 | अभिलषितार्थचिन्तामणिः, प्रथमसंपुटम् | .... | 2 | 0 |
| 70 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम्, III सं. (11–15 अध्यायाः). | .... | 1 | 8 |
| 71 | सरस्वतीविलासः, व्यवहारकाण्डः .... | .... | 2 | 8 |
| 72 | अलङ्कारमणिहारः, चतुर्थसंपुटम् (रसवदलङ्कारप्रभृति समग्रः). | .... | 2 | 4 |
| 73 | आपस्तम्बशुल्बसूत्रम्, कपर्दीय — करविन्दीय — सुन्दरराजीयव्याख्याभिस्सहितम्. | .... | 2 | 12 |
| 74 | तर्कताण्डवम्, व्यासयतिकृतम्, न्यायदीपाख्यव्याख्यायुतम्, प्रथमपरिच्छेदः. | ... | 3 | 0 |
| 75 | अद्वैतसिद्धिः, मधुसूदनसरस्वतीकृता, गुरुचन्द्रिकाटीकायुता, I सं. (प्रथमपरिच्छेदे विश्वमिथ्यात्वप्रभृत्यागमादिबाधोद्धारान्ता). | .... | 3 | 12 |
| 76 | तत्त्वमुक्ताकलापः, वेदान्ताचार्यकृत-सर्वार्थसिद्धितद्व्याख्यानन्ददायिनीभावप्रकाशाभ्यां युतः, प्रथमो जडद्रव्यसरः. | .... | 4 | 0 |
| 77 | तर्कताण्डवम्, व्यासयतिकृतम्. न्यायदीपाख्यव्याख्यायुतम्, II सं. (द्वितीय परिच्छेदे विधिवादान्तम्). | .... | 2 | 0 |

| ग्रन्थनाम | | मूल्यम्—रू. | आ. |
|---|---|---|---|
| 78 | अद्वैतसिद्धिः, मधुसूदनसरस्वतीकृता, गुरुचन्द्रिकाटीकायुता, II सं. प्रथमपरिच्छेदे असतस्साधकत्वोपपत्तिप्रभृति अविद्याप्रतिपादकश्रुत्युपपत्तिपर्यन्ता. .... | 3 | 4 |
| 79 | तर्कताण्डवम्, न्यायदीपाख्यव्याख्यायुतम्, III सं. .... | 2 | 0 |
| 80 | अद्वैतसिद्धिः गुरुचन्द्रिकोपेता, III संपुटम् .... | 2 | 4 |
| 81 | तत्त्वमुक्ताकलापः, वेदान्ताचार्यकृत सर्वार्थसिद्धितद्व्याख्यानन्ददायिनीभावप्रकाशाभ्यां युतः, II सं. .... | 3 | 0 |
| 82 | तर्कताण्डवम्, न्यायदीपाख्यव्याख्यायुतम्, IV सं. .... | 2 | 4 |
| 83 | वाक्यार्थरत्नम् सुवर्णमुद्रिकाख्यव्याख्यासमलङ्कृतम् .... | 1 | 0 |
| 84 | श्रीमदुमास्वामिविरचितं तत्त्वार्थसूत्रम्, श्रीभास्करनन्दिविरचित सुखबोधाख्यवृत्तियुतम्. | 2 | 4 |
| 85 | शङ्कराचार्यविरचिता लक्ष्मीधरव्याख्यासमलंकृता सौन्दर्यलहरी, भावनोपनिषत् भास्कररायभाष्यसहिता, देवीपञ्चस्तवी च. (द्वितीयमुद्रणम्). .... | 2 | 8 |
| 86 | श्रीवेदान्ताचार्यविरचितं यादवाभ्युदयम्, श्रीमदप्पय्यदीक्षितेन्द्रविरचितव्याख्यासमलङ्कृतम्, सर्गाः 13-18. | 3 | 4 |
| 87 | आपस्तम्बश्रौतसूत्रम् श्रीरामाग्निचिद्वृत्तिसहितधूर्तस्वामिभाष्यभूषितम्, I सं. प्रश्नाः 1—5. .... | 4 | 0 |
| 88 | प्रमेयरत्नालङ्कारः अभिनव चारुकीर्तिपण्डिताचार्यकृतः | 2 | 12 |
| 89 | शैवपरिभाषा, शिवाग्रयोगिज्ञानशिवाचार्यविरचिता .... | | |
| 90 | श्रीवेदान्ताचार्यविरचितं यादवाभ्युदयम्, श्रीमदप्पय्यदीक्षितेन्द्रविरचित व्याख्यासमलङ्कृतम्, सं. II सर्गाः 1—24. | | |
| 1. | मैसूरुप्राच्यकोशागारस्थलिखितसंस्कृतग्रन्थसूची सविवरणा, I सं. वेदाः (संहिता, ब्राह्मणम्, आरण्यकम्, उपनिषत्, मन्त्रसंग्रहश्च). .... | 3 | 12 |
| 2. | ,, द्वितीयं संपुटम्—धर्मशास्त्रम् (स्मृतिः) | 1 | 4 |
| 3. | मैसूरु प्राच्यकोशागारस्थ मुद्रितसंस्कृतपुस्तकप्रदर्शिनी. .... | 2 | 12 |

# ಮೈಸೂರು ಗೌರ್ನಮೆಂಟ್ ಓರಿಯಂಟಲ್ ರಿಸರ್ಚ್ ಇನ್ಸ್ಟಿಟ್ಯೂಟಿನಿಂದ ಪ್ರಕಟಿಸಲ್ಪಟ್ಟ

## ಕನ್ನಡ ಗ್ರಂಥಗಳು

| | | ಬೆಲೆ ರೂ. | ಆ. |
|---|---|---|---|
| *1 | ಪಂಪಮಹಾಕವಿಯ ಆದಿಪುರಾಣ ... | 2 | 8 |
| *2 | ರುದ್ರಭಟ್ಟನ ಜಗನ್ನಾಥವಿಜಯ (ಮೊದಲನೆಯ ಮುದ್ರಣ) | 2 | 12 |
| 3 | ಸದಾನಂದಯೋಗಿಯ ಮಹಾಭಾರತ (ಪೌಲೋಮಾಸ್ತಿಕಪರ್ವಗಳು). | 1 | 8 |
| *4 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಸಂಭವಪರ್ವ | 2 | 0 |
| *5 | ,, ಜತುಗೃಹಾದಿಪರ್ವ | 1 | 12 |
| *6 | ,, ಸಭಾಪರ್ವ ... | 1 | 12 |
| *7 | ,, ಅರಣ್ಯಪರ್ವ ... | 2 | 0 |
| *8 | ,, ವಿರಾಟಪರ್ವ ... | 1 | 8 |
| 9 | ಲಿಂಗಣ್ಣನ ಕೆಳದಿನೃಪವಿಜಯ ... | 1 | 8 |
| 10 | ಸೋಮರಾಜನ ಉದ್ಭಟಕಾವ್ಯ ... | 2 | 0 |
| *11 | ರುದ್ರಭಟ್ಟನ ಜಗನ್ನಾಥವಿಜಯ (ಎರಡನೆಯ ಮುದ್ರಣ) | 2 | 12 |
| *12 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಉದ್ಯೋಗಪರ್ವ | 1 | 2 |
| 13 | ಸೋಮನಾಥನ ಅಕ್ರೂರಚರಿತ್ರೆ ... | 1 | 0 |
| 14 | ನಯಸೇನನ ಧರ್ಮಾಮೃತ ಸಂ. I ... | 2 | 4 |
| 15 | ಗೋವಿಂದವೈದ್ಯನ ಕಂಠೀರವನರಸರಾಜವಿಜಯ | 2 | 8 |
| 16 | ನಯಸೇನನ ಧರ್ಮಾಮೃತ ಸಂ. II ... | 1 | 4 |
| 17 | ವೀರಭದ್ರನೃಪಾಲನ ವೀರಭದ್ರವಿಜಯ ... | 1 | 4 |
| *18 | ಜನ್ನನ ಅನಂತನಾಥಪುರಾಣ ... ... | 2 | 0 |
| *19 | ಸಕಲವೈದ್ಯಸಂಹಿತಾಸಾರಾರ್ಣವ ಸಂ. I ... | 1 | 14 |
| *20 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಭೀಷ್ಮಪರ್ವ ... | 1 | 0 |
| *21 | ,, ದ್ರೋಣಪರ್ವ ... | 1 | 12 |
| 22 | ನಾಗವರ್ಮನ ಕಾವ್ಯಾವಲೋಕನ (ದ್ವಿತೀಯ ಮುದ್ರಣ) | 1 | 8 |
| *23 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಕರ್ಣಪರ್ವ ... | 2 | 4 |
| *24 | ,, ಶಲ್ಯಗದಾಪರ್ವಗಳು | 1 | 0 |
| 25 | ,, ,, | 1 | 0 |
| 26 | ,, ಭೀಷ್ಮ ಪರ್ವ | | |

* ಈ ಗುರ್ತಿರುವ ಗ್ರಂಥಗಳು ಈಗ ಬೆಲೆಗೆ ದೊರೆಯುವುದಿಲ್ಲ.

# LIST OF WORKS PUBLISHED BY THE GOVERNMENT ORIENTAL RESEARCH INSTITUTE, MYSORE

## A.—Sanskrit Publications.

| | | Price Rs. | a. |
|---|---|---|---|
| *1. | Apastamba Grihya Sutra with the commentary of Sudarsanacarya ... ... ... | 1 | 12 |
| *2. | Apastamba Paribhasha Sutra with the commentaries of Haradatta and Kapardi Swami ... | 1 | 0 |
| *3. | Madhaviya Dhatuvritti, Vol. II, Part I (Adādi-Divādi Juhotyādi) ... ... | 2 | 0 |
| *4. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. I | 2 | 8 |
| *5. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. II ... ... ... | 2 | 8 |
| *6. | Dakshinamurtistotra with the commentary of Sureswaracharya ... ... ... | 1 | 4 |
| *7 | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha. Vol. III ... ... ... | 3 | 0 |
| *8. | Bhagavadgita with the commentary of Sankaracarya .. ... ... | 2 | 12 |
| *9. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. IV ... ... ... | 3 | 0 |
| *10. | Mandala Brahmanopanishad with a commentary ... | 0 | 6 |
| *11. | Saundaryalahari with the commentary of Lakshmidhara, Bhavanopanishad with a commentary, and Devīpancastavī ... ... ... | 1 | 0 |
| *12. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. V ... ... ... | 3 | 0 |
| *13. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. X ... ... ... | 3 | 0 |

*N.B.*—Numbers marked thus * are out of stock.

| | | Price Rs. | a. |
|---|---|---|---|
| *14. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. XI ... ... ... | 3 | 0 |
| *15. | Apastamba Dharma Sutra with the commentary called Ujjvala ... ... ... ... | 1 | 12 |
| *16. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol VIII ... ... ... | 3 | 0 |
| *17. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. IX ... ... ... | 2 | 4 |
| *18. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. XII ... ... ... | 1 | 12 |
| *19. | Sankaracarya's Miscellaneous Works, Vol I, commentaries on Vishnusahasranama and Sanatsujātīya ... ... ... | 1 | 4 |
| *20. | Sankaracarya's Miscellaneous Works, Vol. II, Aparokshānubhūti, Satasloki, Haristuti and Dasasloki with a commentary ... ... | 1 | 4 |
| *21. | Sankaracarya's Miscellaneous Works, Vol. III, Upadesasāhasri with a commentary ... | 2 | 0 |
| *22. | Sankaracarya's Miscellaneous Works, Vol IV, Atmabodha, Vivekacūḍāmaṇi, Vākyavritti, Svātmanirūpana, Yogatārāvali, Sarva-vedanta-siddhanta sārasangraha ... ... | 1 | 0 |
| *23. | Madhaviya Dhatuvritti, Vol. I, Part I (Bhvādi)... | 2 | 0 |
| *24. | Madhaviya Dhatuvritti, Vol. I, Part II (Bhvādi)... | 2 | 0 |
| *25. | Gotra-pravara-nibandha-kadambakam ... | 2 | 0 |
| *26. | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol. I ... | 1 | 12 |
| *27. | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol. II ... | 1 | 0 |
| *28. | Ekāgnikānda with the commentary of Haradatta with Svarapatha ... ... ... | 1 | 4 |
| *29. | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol. III ... | 1 | 0 |
| *30. | Brahmamimamsa with the commentary of Srikantha | 2 | 0 |
| *31. | Madhaviya Dhatuvritti, Vol. II, Part II (Svadi and Curadi) ... ... ... | 2 | 0 |
| *32 | Bodhayana Grihya Sutra with Parisishta ... | 2 | 4 |
| *33. | Taittiriya Pratisakhya with Vaidikābharana and Tribhāshyaratna ... ... ... | 4 | 0 |

*N.B.*—Numbers marked thus* are out of stock.

| | | Price Rs. | a. |
|---|---|---|---|
| *34. | Bodhayana Dharma Sutra with a commentary ... | 3 | 0 |
| *35. | Bhattadipika, Vol. I ... ... ... | 3 | 0 |
| *36. | Taittiriya Brāhmana with the commentary of Bhatta-Bhaskara with Svarapatha, Ashtaka I ... | 3 | 8 |
| *37. | Kautilya Arthasastra (First Edition) ... | 3 | 0 |
| *38. | Taittiriya Brahmana with the commentary of Bhaṭta Bhaskara with Svarapatha, Ashtaka III. Part I ... ... | 3 | 8 |
| *39. | Srimad-Brahmasutra Bhashya (Anandatirthiya) with Tatparya Candrika, etc., Vol. I ... | 3 | 0 |
| *40. | Bhattadipika, Vol. II ... ... ... | 3 | 0 |
| 41. | Khādira Grihya Sutra with Rudraskandiya ... | 1 | 0 |
| *42. | Taittiriya Brahmana with Bhatta-Bhaskara's commentary, Ashtaka III, Part II .. ... | 2 | 4 |
| 43. | Smriticandrika, Samskara Kanda ... ... | 1 | 8 |
| 44. | Smriticandrika, Ahnika Kanda ... ... | 2 | 8 |
| 45. | Smriticandrika, Vyavahara Kanda, Part I ... | 2 | 0 |
| *46. | Bhattadipika, Vol. III ... ... | 2 | 8 |
| *47. | Srimad-Brahmasutra Bhashya (Anandatirthiya) with Tatparya Candrika, etc., Vol. II ... | 3 | 0 |
| 48. | Smriticandrika. Vyavahara Kanda, Part II ... | 3 | 0 |
| *49. | Bhattadipika, Vol. IV ... ... | 3 | 0 |
| *50. | Gautama Dharma Sutra with Maskariya ... | 3 | 8 |
| 51. | Alankāra Manihāra, Vol. I ... ... | 3 | 0 |
| 52. | Smriticandrika, Sraddha Kanda ... ... | 3 | 4 |
| *53. | Srimad-Brahmasutra Bhashya (Anandatirthiya) with Tatparya Candrika, etc., Vol. III ... | 4 | 0 |
| *54. | Kautilya Arthasastra (Second Edition) ... | 3 | 0 |
| *55. | Bodhayana Grihya Sutra with Pariśishta ... | 2 | 4 |
| 56. | Smriticandrika, Aśauca Kanda ... | 1 | 8 |
| 57. | Taittiriya Brahmana with the commentary partly of Bhatta-Bhaskara and partly of Sāyaṇa, Ashtaka II ... ... ... | 3 | 8 |
| 58. | Alankāra Manihāra, Vol. II ... ... | 3 | 8 |
| 59. | Srimad-Brahmasutra Bhashya (Anandatirthiya) with Tatparya Candrika, etc., Vol. IV ... | 3 | 8 |
| *60. | Kavya-Prakasa with the commentary of Sanketa ... | 3 | 8 |
| 61. | Ayurveda Sutra with the commentary of Yoganandanatha ... ... ... | 2 | 0 |
| 62. | Alankāra Manihāra, Vol. III ... ... | 2 | 8 |
| 63. | Vidyamadhaviya of Vidyamadhava with the commentary Muhurthadipika by Vishnu Sarma, Vol. I | | |

*N.B.* -Numbers marked thus * are out of stock.

| | | Price Rs. | a. |
|---|---|---|---|
| 64. | Kautilya Arthasastra (Third Edition) ... | 3 | 0 |
| 65. | Index Verborum to the published texts of Arthasastra of Kautilya, Vol. I ... ... | 2 | 8 |
| 66. | Index Verborum to the published texts of Arthasastra of Kautilya, Vol. II ... ... | 2 | 8 |
| 67. | Vidyamadhaviya of Vidyamadhava with the commentary of Muhurtadipika by Vishnu Sarma, Vol. II ... ... ... | 2 | 0 |
| 68. | Index Verborum to the published texts of Artha-Sastra, Vol. III ... ... ... | 2 | 0 |
| 69. | Abhilashithartha Cintamani, Vol. I ... ... | 2 | 0 |
| 70. | Vidyamadhaviya, Vol. III ... ... | 1 | 8 |
| 71. | Sarasvati Vilasa (Vyavahara Kanda) ... ... | 2 | 8 |
| 72. | Alankara Manihara, Vol. IV ... ... | 2 | 4 |
| 73. | Apastamba Sulba Sutra ... ... ... | 2 | 12 |
| 74. | Tarkatandava with Nyayadipa, Vol. I ... ... | 3 | 0 |
| 75 | Advaitasiddhi with Gurucandrika, Vol. I ... | 3 | 12 |
| 76. | Tattvamuktakalapa with Sarvarthasiddhi, Bhavaprakasa and Anandadayini, Vol. I ... | 4 | 0 |
| 77. | Tarkatandava, Vol. II ... ... ... | 2 | 0 |
| 78. | Advaitasiddhi with Gurucandrika, Vol. II ... | 3 | 4 |
| 79. | Tarkatandava, Vol. III ... ... ... | 2 | 0 |
| 80. | Advaitasiddhi with Guruchandrika, Vol. III ... | 2 | 4 |
| 81. | Tattvamuktakalapa with Sarvarthasiddhi, Bhavaprakasa and Anandadayini, Vol. II ... | 3 | 0 |
| 82. | Tarkatandava, Vol. IV ... ... ... | 2 | 4 |
| 83. | Vakyartharatna with the Suvarnamudrika ... | 1 | 0 |
| 84. | Tattvarthasutra of Umāsvami with the Sukhabodha of Bhaskaranandi ... ... ... | 2 | 4 |
| 85. | Saundaryalahari Bhavanopanishat, Devipancastavi. | 2 | 8 |
| 86. | Apastamba Srauta Sutra with the Vritti and Bhashya of Dhurtaswami, Vol. I, Prasnas 1—5 | 4 | 0 |
| 87. | Yadavabhyudaya with the commentary of Appayadikshit, Vol. I, Sargas 13—18 | 3 | 4 |

MISCELLANEOUS.

| | | | |
|---|---|---|---|
| 1. | A Descriptive Catalogue of Sanskrit Manuscripts in the Oriental Library, Mysore, Vol. I—Vedas. | 3 | 12 |
| 2. | Do Do Vol. II—Smṛtis. | 1 | 4 |
| 3. | A Catalogue of Printed Sanskrit Books in the Oriental Library | 2 | 12 |

* N.B.—Numbers marked thus * are out of stock.

## B.—Kannada Publications.

| | | Price Rs. | a. |
|---|---|---|---|
| *1. | Adipurana of Pampa ... ... ... | 2 | 8 |
| *2. | Jagannatha Vijaya (First Edition) ... ... | 2 | 8 |
| 3. | Mahabharata—Pauloma and Astika Parvas ... | 1 | 8 |
| *4. | Mahabharata by Kumara Vyasa, Sambhava Parva | 2 | 0 |
| *5. | Mahabharata by Kumara Vyasa, Jatugriha Parva | 1 | 12 |
| *6. | Mahabharata by Kumara Vyasa, Sabha Parva ... | 1 | 12 |
| 7. | Mahabharata by Kumara Vyasa, Aranya Parva ... | 2 | 0 |
| *8. | Mahabharata by Kumara Vyasa, Virata Parva ... | 1 | 8 |
| 9. | Keladinripa Vijaya of Linganna ... ... | 1 | 8 |
| 10. | Udbhatakavya of Somaraja ... ... | 2 | 0 |
| *11. | Jagannatha Vijaya of Rudrabhatta (Second Edition) | 2 | 12 |
| *12. | Mahabharata by Kumara Vyasa, Udyoga Parva ... | 1 | 2 |
| 13. | Akrura Caritre of Somanatha ... ... | 1 | 0 |
| 14. | Dharmamrita of Nayasena, Vol. I ... ... | 2 | 4 |
| 15. | Kantirava Narasaraja Vijaya ... ... | 2 | 8 |
| 16. | Dharmamrita of Nayasena, Vol. II ... ... | 1 | 4 |
| 17. | Virabhadravijaya ... ... ... | 1 | 4 |
| 18. | Anantanathapurana of Janna ... ... | 2 | 0 |
| *19. | Sakalavaidya Samhita Sararnava by Virarajendra | 1 | 14 |
| *20. | Mahabharata by Kumara Vyasa, Bhishma Parva | 1 | 0 |
| *21. | Mahabharata by Kumara Vyasa, Drona Parva ... | 1 | 12 |
| 22. | Kavyavalokana by Nagavarma (Second Edition) ... | 1 | 8 |
| *23. | Mahabharata, Karna Parva ... | 2 | 4 |
| 24. | .. ,, Salya and Gada Parvas ... | 1 | 0 |
| *25A. | Yogaratnakara with translation in Kannada and Telugu, Part I | | |

*N.B.*—Numbers marked thus * are out of stock.